पूर्णाशया महात्मानः सर्वदेहसुशीतलाः ॥४६॥
यदि कर्तव्यशेषेऽपि सुखं स्यात् केनचित् क्वचित् ।
शूलप्रोतेऽपि च नरे स्यात् सुखं गन्धमाल्यजम् ॥४७॥
अहो महच्चित्रमेतत् कर्तव्यशतसंकुले ।
सुखमस्तीह यस्यार्थे करोत्येव सदा जनः ॥४८॥
अहो विचारमाहात्म्यं किं वदामि नृणामहम् ।
अनन्तकर्तव्यशैलाक्रान्ताः सौख्यं लभन्ति च ॥४९॥
यथा[1] सौख्याय यतते सार्वभौमस्तु सर्वदा ।
तथैव यतते नित्यमपि भिक्षाटने रतः ॥५०॥
पृथक् तौ प्राप्नुतः सौख्यं मन्येते कृतकृत्यताम् ।
तद्येन यान्ति सर्वेऽपि याम्यहं ताननुक्रमात् ॥५१॥
अनालोच्य फलं चापि यथान्धोऽन्धानुगस्तथा ।
तदलं मेधयानेन भूयो गत्वा दयानिधिम् ॥५२॥
विजिज्ञासितजिज्ञास्यो विचिकित्साम्बुधेः परम् ।
पारं प्रपत्स्ये सुशुभं गुरुवाक्प्लवमाश्रितः ॥५३॥

कर्तव्यं यस्य तद्भावोऽकर्तव्यता । इदमेव [2]सुखिनां लक्षणमिति भावः । सुखिनमितरस्माद्विवेचयितुमाह—पूर्णेत्यादि । अन्येषां प्राप्तव्यशेषादपूर्णः कामिताप्राप्त्या रिक्त आशयश्चित्तम् । तथाऽन्ये महात्मानः स्वात्मानं न्यूनं मन्यमानाः । स्पष्टं चैतच्च । सार्वभौमोऽपीन्द्रात् स्वात्मानं न्यूनं मन्यत इति । मूर्ध्नि मुकुटसत्त्वेऽपि [3]कण्ठे हाराभावेन दुःखानुवृत्तेः, न ते सर्वाङ्गशीतलाश्च ॥ ४६ ॥ केनचिद् वस्त्रमाल्यादिना ॥ ४७–५० ॥ येनाविचारितेन, मार्गेण क्रमाद् यान्ति तानहमनुयामि ॥ ५१ ॥ अत्र हेतुः—फलमनालोच्येति । मेधया अविचारजनितनिश्चयेन । अनेन विचारेण सह गत्वा । यावद्विचारो न नश्येत्तावदिति तात्पर्यम् ॥५२॥

---

१. तथा–क० । २. सुखिनाम् । न क्षण–क० । ३. 'कण्ठे' नास्ति–ख० ।

इति व्यवस्य सहसा जामदग्न्यः शुभाशयः ।
प्रतस्थे तद्गिरिवराद् गुरुदर्शनकाङ्क्षया ॥५४॥
गन्धमादनशैलेन्द्रं प्राप्य शीघ्रमपश्यत ।
गुरुं पद्मासनासीनं भूभास्वन्तमिव स्थितम् ॥५५॥
प्रणनाम पादपीठपुरतो भुवि दण्डवत् ।
शिरसाऽपीडयत् पादपद्मं निजकराश्रितम् ॥५६॥
अथैवं प्रणतं रामं दत्तात्रेयः प्रसन्नधीः ।
आशीर्भिर्योजयामास समुत्थापयदादरात् ॥५७॥
वत्सोत्तिष्ठ चिरादद्य त्वां पश्यामि समागतम् ।
ब्रूहि स्वात्मभवं वृत्तं [1]निरामयतया स्थितम् ॥५८॥
अथोत्थाय गुरूक्त्या स गुर्वादिष्टाग्र्यविष्टरः ।
उपविश्य प्रसन्नात्मा बद्धाञ्जलिपुटोऽब्रवीत् ॥५९॥
श्रीगुरो करुणासिन्धो त्वत्कृपामृत आप्लुतः ।
कथं स परिभूयेत विधिसृष्टैरथामयैः ॥६०॥
त्वत्कृपात्मामृतकरमण्डलान्तः स्थितं तु माम् ।
सन्तापयेत् कथं व्याधिश्चण्डांशुरतिभीषणः ॥६१॥
आन्तरं बाह्यमपि ते कृपयानन्दितं मम ।
सदा स्थितं किन्तु भवत्पादाब्जवियुतिं विना ॥६२॥
नान्यद्रुजावहं किञ्चिदासीन्मे लेशतः क्वचित् ।
तद्भवच्चरणाम्भोजदर्शनादद्य वै पुनः ॥६३॥

**विचिकित्सा सन्देहः । गुरुवागेव प्लवो नौः [2]तमाश्रितः ॥ ५३-५७ ॥ आत्मभवं शरीरादौ भवमुत्पन्नम् ॥५८-५९॥ अथेति अप्यर्थः । विधिसृष्टैरपीत्यर्थः ॥ ६०-६१ ॥ आन्तरं मनः । बाह्यं शरीरम् । भवत्पादाब्जयोर्वियुतिर्वियोगः ॥६२-६३॥**

---

१. निरामयास्थितम्-क० । २. तामाश्रितः-क० ।

सम्पूर्णता समापन्ना सर्वथा श्रीगुरो· ननु ।
तत् किञ्चिच्चिरसंवृत्तं हृदि मे परिवर्तते ॥६४॥
तत्प्रष्टुं त्वाभिवाञ्छामि चिरसंशयितान्तरः ।
आज्ञप्तो भवताद्याहं पृच्छामि विचिकित्सितम् ॥६५॥
संश्रुत्यैवं भार्गवोक्तिं दत्तात्रेयो दयानिधिः ।
सम्प्रहृष्टमना राममूचे प्रीत्याथ भार्गवम् ॥६६॥
पृच्छ भार्गव यत्तेऽद्य प्रष्टव्यं चिरसम्भृतम् ।
तव भक्त्या प्रसन्नोऽस्मि प्रब्रवीमि तवेप्सितम् ॥६७॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये ज्ञानखण्डे
भार्गवप्रश्ने प्रथमोऽध्यायः ॥



आनन्दस्य सम्पूर्णता । चिरकालाद्धृदि संवृत्तम् उत्पन्नं प्रष्टव्यमिति ॥ ६४ ॥ प्रष्टव्यार्थं चिरात् संशयितम् आन्तरं मनो यस्य ॥ ६५-६७ ॥

इति [1]श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां
तात्पर्यदीपिकायां प्रथमोऽध्यायः ॥



१. श्रीत्रिपुरारहस्ये–ग० घ० ।

# अथ द्वितीयोऽध्यायः

[1]इत्याज्ञप्तो जामदग्न्यः प्रणम्याऽत्रिसुतं मुनिम् ।
प्रश्रयावनतो भूत्वा संप्रष्टुमुपचक्रमे ॥ १ ॥
भगवन् गुरुनाथार्य सर्वज्ञ करुणानिधे ।
पुरा मे नृपवंशेषु क्रोधः कारणतो ह्यभूत् ॥ २ ॥
तद्भूयो निहितं क्षात्रं सगर्भं सस्तनन्धयम् ।
मया त्रिःसप्तकृत्वो वै क्षत्रासृग्भरिते ह्रदे ॥ ३ ॥
सन्तर्पिताः पितृगणास्तुष्टा मद्भक्तिगौरवात् ।
मत्क्रोधं शामयामासुः शान्तः पित्राज्ञयाप्यहम् ॥ ४ ॥
सम्प्रत्ययोध्यामध्यास्ते यः श्रीरामो हरिः स्वयम् ।
क्रोधान्धस्तेन भूयोऽहं सङ्गतो बलदर्पितः ॥ ५ ॥
तेन दर्पाद्भगवता च्यावितश्च पराजितः ।
जीवन् कथञ्चिन्निर्यातो ब्रह्मण्येनानुकम्पिना ॥ ६ ॥
अथ मामुपसंप्राप्तो निर्वेदः [2]परिभावितम् ।
ततोऽत्यन्तं पथि मया बहुधा परिदेवितम् ॥ ७ ॥
संवर्तमवधूतेन्द्रं मार्गेऽकस्मात् समासदम् ।
भस्मच्छन्नाग्निवद् गूढं कथञ्चिदविदं तदा ॥ ८ ॥

अत्राध्याये वेदमितैः पद्यैः कर्तव्यदूषणम् ।
क्रियते सुविचारस्य जनिस्तुतिरपीर्यते ॥

पृच्छेत्यःज्ञप्तः। प्रश्रयः विनयः ॥१॥ स्वस्य निर्वेदप्राप्तिप्रकारमाह—पुरेति ॥ २ ॥ तत् क्रोधाद्धेतोः ॥ ३–६ ॥ परिदेवितं प्रलपितम् ॥ ७ ॥

---

१. अस्य श्लोकस्य पूर्वार्धोत्तरार्धयोः क० ग० पुस्तकयोर्विपर्यस्तः पाठः ।
२. परिभावितः—घ० ।

सन्तप्त इव नीहारं तं सर्वाङ्गसुशीतलम् ।
सङ्गम्यैवातिशिशिरभावमासादयं तदा ॥ ९ ॥
मया स्वस्थितिमापृष्टः प्राहामृतसुपेशलम् ।
सुसारपिण्डवत् सर्वं निष्कृष्य प्रत्यपादयत् ॥१०॥
नाहं तदशकं स्प्रष्टुं रङ्को राज्ञीं यथा तथा ।
भूयः संप्रार्थितः सोऽथ भवन्तं मे विनिर्दिशत् ॥११॥
¹तद्भवच्चरणद्वन्द्वं तत आसादितं मया ।
अन्धो जनसमायोगमिवात्यन्तसुखावहम् ॥१२॥
तन्मे न विदितं किञ्चित् संवर्तमुनिराह यत् ।
श्रुतं माहात्म्यमखिलं त्रिपुराभक्तिकारकम् ॥१३॥
सा भवद्रूपिणी देवी हृदि नित्यं समाहिता ।
एवं ऽपि वर्तमानस्य किं फलं समवाप्यते ॥१४॥
भगवन् कृपया ब्रूहि यत्संवर्तः पुरावदत् ।
अविदित्वा च तन्नास्ति क्वचिच्च कृतकृत्यता ॥१५॥
तदुक्तमविदित्वा तु यद्यच्च क्रियते मया ।
तद्बालक्रीडनमिव प्रतिभाति समन्ततः ॥१६॥

समासदमासादितवान् ॥ ८ ॥ कीदृशं संवर्तं कथंविधो राम आसादितवान्? तदाह—सन्तप्तेति । सङ्गमफलमाह—सङ्गम्येति ॥ ९ ॥ पेशलं सुन्दरम् । सर्वं प्रश्नार्थम् ॥ १० ॥ तत् संवर्तोक्तम् । रङ्कः दरिद्री ॥ ११–१२ ॥ तत् संवर्तोक्तं श्रवणाधिकारं स्वस्मिन्नाह—श्रुतमिति ॥ १३ ॥ भवद्रूपिणी गुरुरूपिणी । फलस्य देवताकारचित्तवृत्तेः प्राप्तत्वात् पुनरुपासनं पिष्टपेषणवदित्याह—एवमिति ॥ १४ ॥ किं संवर्तोक्तेन, उपासनमेव कुर्विति चेदाह—अविदित्वेति ॥ १५ ॥ तदविदित्वोपासनमन्यद्वा कर्म सर्वं व्यर्थमित्याह—तदुक्तमिति ॥ १६ ॥

१. 'तन्मे, अन्धो, तद्भव' इति पङ्क्तिक्रमः—घ० ।

पुरा मया हि बहुशः क्रतुभिर्दक्षिणोच्छ्रयैः ।
प्रभूतान्नगणैरिष्टा देवाः शक्रमुखा ननु ॥१७॥
तदल्पफलमेवेति श्रुतं संवर्तवक्त्रतः ।
मन्ये तदहमल्पं यद् दुःखमेवेति सर्वथा ॥१८॥
असुखं नहि दुःखं स्याद् दुःखमल्पं सुखं स्मृतम् ।
यतः सुखात्यये दुःखं भवेद् गुरुतरं किल ॥१९॥
नैतावदेव चैतस्मादधिकं चास्ति वैभवम् ।
मृत्यूपयोगो यद्भूयो न तन्न स्यात् कदाचन ॥२०॥
एवमेव भवेद्यन्मे क्रियते त्रिपुराविधौ ।
बालक्रीडेव मे भाति सर्वं तन्मानसं यतः ॥२१॥
एतद्यदुक्तं भवता कर्तुं [1]तत् स्यादितोऽन्यथा ।
नियतं चाप्यन्यथा तद् वचोभेदसमाश्रयात् ॥२२॥

ननु न व्यर्थं कर्मादीनां फलसत्त्वादिति चेन्नेत्याह—पुरेति । दक्षिणानाम् उच्छ्रय आधिक्यं येषु ॥ १७ ॥ तदल्पेति । एवंविधोत्तमकर्मणामल्पफलत्वे किमन्येषामिति भावः । अल्पफलत्वेऽपि न फलाभाव इत्याशङ्क्याल्पफलस्य दुःखमूलत्वेन दुःखात्मतैवेत्याह—मन्य इति ॥ १८ ॥ एतदेव निरूपयति—असुखमिति । तत्र हेतुः—यत इति ॥१९॥ ननु कृतकर्मधारयाल्पसुखधारा[2]प्राप्तेः किं ज्ञानेनेति चेदाह—नैतावदेवेति । भयमेवाह—मृत्यूपेति । मृत्युग्रसनं कर्मभिर्दुर्निवारमिति भावः ॥ २० ॥ ननु कर्मैवंविधमेव । उपासनं तु परदेवतासम्बन्धान्नैवमित्याशङ्क्योपासनमपि शुष्ककर्मतुल्यमेव फलत इत्याह—एवमिति । मे मया त्रिपुरोपासनविधौ क्रियमाणं कर्मवदेवेत्यर्थः । अत एव बालक्रीडेवेति । तत्र हेतुः—मानसं यत इति ॥२१॥ उपासनस्य कर्मतुल्यतामाह—एतदिति । यद् उपासनम् ।[1] वचोभेदः शास्त्रभेदः । शास्त्राणां विविधत्वेन भवदुक्तप्रकारेणान्यथा वा नियमेनानियमेन वा कर्तुं शक्यमित्यर्थः ॥२२॥

---

१. तस्या–क० । २. सुखाधार–ख० ।

आलम्बभेदतश्चापि विविधं प्रतिपद्यते ।
कथमेतत् क्रतुसममसत्यफलसम्मितम् ॥२३॥
अप्यसत्यात्मकं यस्मात् कथं सत्यसमं भवेत् ।
अथापि [1]नित्यं कर्तव्यमेतन्नास्यावधिः क्वचित् ॥२४॥
लक्षितो मे स [2]भगवान् संवर्तः सर्वशीतलः ।
कर्तव्यलेशविषमविषज्वालाविनिर्गतः ॥२५॥
हसन्निव लोकतन्त्रमभयं मार्गमाश्रितः ।
वने दावाग्निसङ्कीर्णे हिमाम्बुस्थगजोपमः ॥२६॥
सर्वकर्तव्यवैकल्यामृतसंस्वादनन्दितः ।
कथमेतां दशां प्राप्तो यच्च मामाह तत्पुरा ॥२७॥

शालिग्रामनार्मदाद्यालम्बनभेदेन चान्यथा कर्तुं शक्यम् । एवमनेकधा प्रतिपद्यमानत्वात् क्रत्वादिकर्मसममेतदुपासनमसत्यफलत्वेन सम्मितं निश्चितम् । क्रतुसमं कथं न भवेदिति शेषः ॥ २३ ॥ मानसत्वात् स्वरूपतोऽप्यसत्यं यस्मात्तस्मात् कथं सत्यफलजनकं भवेत् । "नास्त्यकृतः कृतेन" [ मुण्ड० १।२।१२ ] इति वचनादिति भावः । शास्त्रस्येश्वरसङ्कल्परूपत्वेनाचिन्त्यत्वान्नैवं वक्तुं युक्तमिति चेदाह—अथापीति ॥ २४ ॥ ननु यावज्जीवं कुर्वत एव परश्रेयःप्राप्तिरिति चेदाह—लक्षित इति । मे मया । न तेन श्रेयः प्राप्तमिति चेदाह—सर्वशीतल इति । न प्रत्यक्षदृष्टे विप्रतिपत्तिरित्याशयः । कुत एवं स सर्वशीतलस्त्वया ज्ञातः । तदाह—कर्तव्येति । यतो विनिर्गतः, ततः शीतलः॥२५॥ न च स केवलं मूढः पापफलभाक्, यतोऽभयं मार्गमाश्रितो लोकव्यवहारं हसन्निवास्ते । तस्य सर्वशीतलत्वे दृष्टान्तः—वन इति॥२६॥ कर्तव्यवैधुर्यमात्रेण कथं स महासुखी ? तदाह—सर्वेति । कर्तव्यतैव महादुःखहेतुः । व्यवहारे भ्रान्तिदर्शनात् तदभावादेव सुखम् । सुषुप्तौ

---

१. नित्य–क० । २. भगवन्–क० घ० ।

सर्वमेतत् सुकृपया गुरो मे वक्तुमर्हसि ।
कर्तव्यकालभुजगनिगीर्णं मां विमोचय ॥२८॥
इत्युक्त्वा चरणौ मूर्ध्ना गृहीत्वा दण्डवन्नतः ।
अथ दृष्ट्वा तथाभूतं भार्गवं [1]मुक्तिभाजनम् ॥२९॥
दयमानस्वभावोऽथ दत्तो वक्तुमुपाक्रमत् ।
वत्स भार्गव धन्योऽसि यस्य ते बुद्धिरीदृशी ॥३०॥
अब्धौ निमज्जतो नौकासम्प्राप्तिरिव सङ्गता ।
एतावदेव सुकृतिः क्रियाभिरुपसङ्गतः ॥३१॥
स्वात्मानमारोहयति पदे परमपावने ।
सा देवी त्रिपुरा सर्वहृदयाकाशरूपिणी ॥३२॥
अनन्यशरणं भक्तं प्रत्येवंरूपिणी द्रुतम् ।
हृदयान्तः परिणता मोचयेद् मृत्युजालतः ॥३३॥
यावत् कर्तव्यवेतालान्न बिभेति दृढं नरः ।
न तावत् सुखमाप्नोति वेतालाविष्टवत् सदा ॥३४॥

सुखदर्शनादिति भावः । एतां दशां कर्मत्यागादभयदशां संवर्तः प्राप्तः ॥ २७ ॥ किमेतेन ते प्रयोजनमिति चेदाह—कर्तव्येति ॥ २८ ॥ तथाभूतम् आर्तं मुमुक्षुम् ॥ २९ ॥ कर्तव्यस्य दुःखहेतुत्वबुद्धिः ॥ ३० ॥ बुद्धिं स्तौति—अब्धाविति । ते सङ्गतेत्यन्वयः । उपासनं बालक्रीडनवद् व्यर्थमिति रामेणोक्तं फलप्रदर्शनेन प्रत्याह—एतावदिति । बुद्धिप्राप्तिमित्यर्थः ॥३१॥ उपसङ्गत आरोहयतीति सम्बन्धः । परमपावने निर्दोषे मोक्षाख्ये । कथं क्रियाभिर्बुद्धिप्राप्त्या पदारोहस्तदाह—सेति । हृदयाकाशेऽभिव्यक्त्या तद्रूपिणी ॥ ३२ ॥ एवंरूपिणी प्रोक्तबुद्धिरूपिणी । [2]प्रोक्तबुद्ध्यादिरूपेण परिणता सैव मोचयेदिति भावः ॥ ३३ ॥ अस्या बुद्धेर्व्यतिरेकमुखेन पदसाधनतामाह—यावदिति ॥३४॥ सर्पदष्टानामिव

१. भक्ति–घ० । २. बुद्ध्या रूपेण–क० ख० ग० ।

नृणां कर्तव्यकालाहिसन्दष्टानां कथं शुभम् ।
करालगरलज्वालाक्रान्ताङ्गानामिव क्वचित् ॥३५॥
कर्तव्यविषसंसर्गमूर्च्छितं पश्य वै जगत् ।
अन्धीभूतं न जानाति क्रियां स्वस्य हितात्मिकाम् ॥३६॥
अन्यथा चेष्टते भूयो मोहमापद्यते पुनः ।
एवंविधो हि लोकोऽयं कर्तव्यविषमूर्च्छितः ॥३७॥
अनादिकालतो भीमे पच्यते विषसागरे ।
यथा हि केचित् पथिकाः प्राप्ता [1]विन्ध्यमहानगम् ॥३८॥
क्षुधाभरसमाक्रान्ताः फलानि ददृशुर्वने ।
विषमुष्टिफलान्याशु तिन्दुकस्य फलेहया ॥३९॥
भक्षयामासुरत्यन्तक्षुधानष्टरसेन्द्रियाः ।
अथ ते तद्विषज्वालाज्वलिताङ्गाः सुपीडिताः ॥४०॥
अन्धीभूता विचिन्वन्तस्तद्विषोष्णप्रशान्तये ।
अविदित्वा मुष्टिफलं तिन्दूफलनिषेवणात् ॥४१॥
मत्वा ज्वालां निजे देहे धत्तूरफलमासदुः ।
भ्रान्त्या जम्बीरबुद्ध्या तत् सर्वैरासीत् सुभक्षितम् ॥४२॥

**कर्तव्ययुतानां न सुखमित्याह—**नृणामिति ॥३५॥ **न जानाति । एवंरूपं जगत् पश्य ॥ ३६ ॥** अन्यथेति । **हितसाधनाय[2] तत्साधनं विहायान्यथा चेष्टते । अत्र हेतुर्विषमूर्च्छित इति ॥ ३७ ॥ एवं मोहो जीवस्य कदाप्रभृति[3] सम्पन्न इति चेदाह—**अनादीति । **अत्र दृष्टान्तत्वेनाख्यायिकामुपक्रमते—**यथेति ॥ **३८–३९ ॥ ननु विषमुष्टितिन्दुकफलयोराकृतिसाम्येऽपि न रससाम्यमित्यत आह—**नष्टरसेन्द्रिया इति **॥ ४० ॥ मुष्टिफलं भक्षितमित्यविदित्वा ॥४१॥ तिन्दूफलजामेवाङ्गे ज्वालां मत्वा ।**

१. विन्ध्यं महा—क० । २. नायतसा—क० ख० ग० ।
३. भृतिसम्पन्न—क० ग० ।

उन्मत्ताश्च ततोऽभूवन् मार्गाद् भ्रष्टाश्च ते तदा ।
अन्धीभूतातिगहने पतन्तो निम्नभूमिषु ॥४३॥
कण्टकैश्छिन्न[1]सर्वाङ्गा भग्नबाहूरुपादकाः ।
अधिक्षिपन्तश्चान्योन्यं कलहं चक्रुरुच्चकैः ॥४४॥
मुष्टिभिश्च शिलाभिश्च काष्ठैर्जघ्नुः परस्परम् ।
अथ ते दीर्णसर्वाङ्गाः पुरं कञ्चित् समासदुः ॥४५॥
निशीथे दैववशतः पुरद्वारमुपाययुः ।
पुरद्वाराधिपालैस्ते प्रतिरुद्धाः प्रवेशने ॥४६॥
देशकालानभिज्ञानात् कलहं चक्रुरुच्चकैः ।
अथ ते प्रहृता द्वारपालैरतितरां यदा ॥४७॥
तदा पलायनपरा बभूवुः परितस्तु ते ।
पतिताः परिखे केचिद् भक्षिता मकरादिभिः ॥४८॥
केचित् खातेषु कूपेषु पतिताः प्राणमुत्सृजुः ।
अपरे तैर्विनिहताः केचिज्जीवग्रहं गताः ॥४९॥
एवं जना हितेच्छाभिः कर्तव्यविषमूर्च्छिताः ।
अहो विनाशं यान्त्युच्चैर्मोहेनान्धीकृताः खलु ॥५०॥
धन्योऽसि भार्गव त्वं तु यस्मादभ्युदयं गतः ।
विचारः सर्वमूलं हि सोपानं प्रथमं भवेत् ॥५१॥
परश्रेयोमहासौधप्राप्तौ जानीहि सर्वथा ।
सुविचारमृते क्षेमप्राप्तिः कस्य कथं भवेत् ॥५२॥

आसदुः प्राप्ताः । तद् धत्तूरफलम् ॥४२-४६॥ द्वाराधिपैः कलहं चक्रुः ॥ ४७ ॥ परिखाजलस्थमकरादिभिः ॥ ४८-४९ ॥ दार्ष्टान्तिके योजयति—एवमिति ॥ ५० ॥ मोहसागरोत्तीर्णत्वाद् धन्योऽसि । कोऽसावभ्युदयस्तदाह—विचार इति । मूलं भवेत् ॥ ५१ ॥ यत एवमतः सौध-

१. श्चित-क० घ० ।

त्रि० र०—२

अविचारः परो मृत्युरविचारहता जनाः ।
विमृश्यकारी जयति सर्वत्राभीष्टसङ्गमात् ॥५३॥
अविचारहता दैत्या यातुधानाश्च सर्वशः ।
विचारपरमा देवाः सर्वतः सुखभागिनः ॥५४॥
विचाराद्विष्णुमाश्रित्य जयन्ति प्रत्यरीन् सदा ।
विचारः सुखवृक्षस्य बीजमङ्कुरशक्तिकम् ॥५५॥
विराजते विचारेण पुरुषः सर्वतोऽधिकः ।
विचाराद्विधिरुत्कृष्टो विचारात् पूज्यते हरिः ॥५६॥
सर्वज्ञस्तु विचारेण शिव आसीन्महेश्वरः ।
अविचारान्मृगासक्तो रामो बुद्धिमतांवरः ॥५७॥
परमामापदं प्राप्तो विचारादथ वारिधिम् ।
बद्ध्वा लङ्कापुरीं रक्षोगणाकीर्णां समाक्रमत् ॥५८॥
अविचाराद्विधिरपि मूढो भूत्वाऽभिमानतः ।
शिरश्छेदं समगमदिति संश्रुतमेव ते ॥५९॥
महादेवोऽविचारेण वरं दत्वाऽसुराय वै ।
भस्मीभावात् स्वस्य भीतः पलायनपरोऽभवत् ॥६०॥
अविचाराद्धरिः पूर्वं भृगुपत्नीं निहत्य तु ।
शापेन परमं दुःखमाप्तम[मवापा]त्यन्तदुःसहम् ॥६१॥
एवमन्ये सुरा देवा यातुधाना नरा मृगाः ।
अविचारवशादेव विपदं प्राप्नुवन्ति हि ॥६२॥
महाभागास्ते हि धीरा यान् कुत्रापि च भार्गव ।

प्राप्तौ प्रथमं सोपानं जानीहि । अत एवाह—सुविचारेति ॥ ५२–५३ ॥ अविचारेण के हताः के वा विचारेण सुखिनस्तदाह—अविचारेति ॥५४॥ देवाः प्रत्यरीन् दैत्यादीन् जयन्ति । अङ्कुरशक्तिकमिति । न निष्फलं बीजमिति भावः ॥ ५५–६२ ॥

विजहाति विचारो नो नमस्तेभ्यो निरन्तरम् ॥६३॥
कर्तव्यमविचारेण प्राप्य मुह्यन्ति सर्वतः ।
विचार्यं कृत्वा सर्वेभ्यो मुच्यतेऽपारसङ्कटैः ॥६४॥
एवं लोकांश्चिरादेषोऽविचारः सङ्गतोऽभवत् ।
यस्याविचारो यावत् स्यात् कुतस्तावद्विमर्शनम् ॥६५॥
ग्रीष्मभीष्मकरातप्ते मरौ क्व शिशिरं जलम् ।
एवं चिराविचाराग्निज्वालामालापरीवृते ॥६६॥
विचारशीतलस्पर्शः कथं स्यात् साधनं विना ।
साधनं त्वेकमेवात्र परमं सर्वतोऽधिकम् ॥६७॥
सर्वहृत्पद्मनिलयदेवतायाः परा कृपा ।
तां विना स्यात् कथं कस्य महाश्रेयः सुसाधनः ॥६८॥
विचारार्कोऽविचारान्धमहाध्वान्तनिबर्हणः ।
तत्र मूलं भवेद्भक्त्या देवतापरिराधनम् ॥६९॥
राधिता परमा देवी सम्यक् तुष्टा सती तदा ।
विचाररूपतां याति चित्ताकाशे रविर्यथा ॥७०॥

विचारपरान् स्तौति—महेति ॥ ६३ ॥ अकर्तव्यमेव दुःखदमविचारात् कर्तव्यत्वेन प्राप्य सर्वतो मुह्यन्ति । अपारसङ्कटैः अपरिहार्यदुःखप्रापकैः सह सर्वेभ्यो दुःखेभ्यः ॥ ६४ ॥ विचाराविचारयोर्विरोधं सदृष्टान्तमाह—यस्येति ॥ ६५ ॥ ननु ग्रीष्मेऽप्यकस्माद् वृष्ट्यागम इव विचारः स्वयमेवोदेष्यतीति चेन्नेत्याह—एवमिति ॥ ६६ ॥ साधनं प्रसिद्धं कर्म स्यादिति चेन्नेत्याह—एकमेवेति । सर्वतः इतरफलसाधकेभ्यः साधनेभ्योऽधिकम् । अवश्यफलपर्यवसानादिति भावः ॥ ६७ ॥ तत् किम् ? तदाह—परा कृपेति ॥ ६८ ॥ अन्धस्य जन्मान्धस्य यन्महाध्वान्तं सूर्याद्यैरनिवार्यम् । तत्र कृपायाम् ॥ ६९ ॥ देवताराधनाद् विचारोदयप्रकारमाह—राधितेति । कृपया स्वयमेव विचार-

तस्मान्निजात्मरूपां तां त्रिपुरां परमेश्वरीम् ।
सर्वान्तरनिकेतां श्रीमहेशीं चिन्मयीं शिवाम् ॥७१॥
आराधयेदकापटचात् सद्गुरुद्वारतः क्रमात् ।
आराधनेऽपि मूलं स्याद्भक्तिः श्रद्धा च निर्मला ॥७२॥
तत्रापि मूलं माहात्म्यश्रवणं परिकीर्तितम् ।
अतस्ते प्रथमं राम माहात्म्यं सम्प्रवर्तितम् ॥७३॥
तेन श्रुतेनाधुना त्वं प्राप्तवानसि मङ्गलम् ।
[1]विचारः श्रेयसो मूलं यस्मात्ते नहि भीरितः ॥७४॥
विचारोदयपर्यन्तं भयमस्ति महत्तरम् ।
अविचारात्मदोषेण ग्रस्तस्य प्रतिवासरम् ॥७५॥
यथा हि सन्निपातेन ग्रस्तस्यौषधसेवनात् ।
अपि तावद्भवेद् भीतिर्यावद्धातोरशुद्धता ॥७६॥
प्राप्ते विचारे परमे फलितं जीवितं नृणाम् ।
यावत्सु जन्मसु नृणां विचारो न भवेत् परः ॥७७॥

**रूपा भवतीत्यर्थः । कृपोत्पत्तेः पूर्वं सैवाविचाररूपा चासीदिति तात्पर्यम् । अत एवोक्तं चण्डीस्तवे—"संसारबन्धहेतुश्च सैव सर्वेश्वरेश्वरी" [ १।५८ ] इति ॥ ७० ॥ तदप्याराधनं नेन्द्रचन्द्रादिरूपायाः, किन्त्वन्तर्यामिरूपाया इत्याह**—निजात्मेति ॥ ७१ ॥ **आराधनप्रकारमाह**—अकापट्यादिति । **कापट्यम् फलाभिसन्धिः ॥ ७२ ॥ तत्रापि भक्त्यादौ । सम्प्रवर्तितं श्रावितम् ॥ ७३-७५ ॥ अत्र दृष्टान्तः**—यथेति । **सन्निपातमहादोषवतो महौषधसेवनादपि यावद् धातुशुद्धिर्न भवति तावद् भयमस्त्येव, क्वचिद्विपर्ययदर्शनात्; एवं देवताराधनपरस्यापि विचारोदयपर्यन्तमविचारेण भयमस्तीति भावः ॥ ७६ ॥ परो मोक्षसाधनः**

---

१. विचारं—क० ग० घ० ।

तावन्तो जन्मतरवो वन्ध्या विफलहेतुतः ।
स एव सफलो जन्मवृक्षो यत्र विमर्शनम् ॥७८॥
कूपमण्डूकसदृशा ये नरा निर्विमर्शनाः ।
यथा कूपे समुत्पन्नो भेको नो वेद किञ्चन ॥७९॥
शुभं वाप्यशुभं वापि कूपे एव विनश्यति ।
तथा जना अपि वृथोत्पन्ना ब्रह्माण्डकूपके ॥८०॥
शुभं वाप्यशुभं वापि न विदुः स्वात्मनः क्वचित् ।
उत्पद्योत्पद्य नश्यन्ति न जानन्ति स्वकं हितम् ॥८१॥
सुखबुद्धिं च दुःखेषु सुखे दुःखविनिश्चयम् ।
प्राप्याविचारमाहात्म्यात् पच्यन्ते सृतिपावके ॥८२॥
दुःखेन क्लिश्यमानाश्च न कथञ्चित् त्यजन्ति तत् ।
यथा पादशताघातैस्ताडितोऽपि महाखरः ॥८३॥
रासभीमनुयात्येव तथा संसरणं जनः ।
त्वं तु राम विचारात्मा पारं दुःखस्य सङ्गतः ॥८४॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे विचारमाहात्म्ये
द्वितीयोऽध्यायः ॥

॥७७-७८॥ ते कूपमण्डूकसदृशाः ॥ ७९–८१ ॥ दुःखसाधनेषु पुत्रादिषु सुखसाधनत्वबुद्धिम् । सुखसाधने[1] वैराग्यादौ दुःखसाधनत्वविनिश्चयम् । सृतिर्जन्मादिरूपः संसारः ॥ ८२ ॥ तद् धनादिरूपं दुःखसाधनम् । अत्र दृष्टान्तः—यथेति ॥ ८३ ॥ तथेति । संसरणं [2]घोरसंसारप्रवृत्तिम् । भूयः क्लिश्यमानोऽपि न त्यजतीत्यर्थः ॥ ८४ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
द्वितीयोऽध्यायः ॥

१. साधनत्वैरा–क० । २. घोरं संसारे–क० ।

# अथ तृतीयोऽध्यायः

दत्तात्रेयप्रोक्तवचः श्रुत्वाऽत्यन्तसुकौतुकी ।
जामदग्न्यः पुनरपि पप्रच्छ विनयान्वितः ॥१॥
भगवन् गुरुनाथोक्तं भवता यत्तथैव तत् ।
अविचारात् परो नाशः संप्राप्तः सर्वथा जनैः ॥२॥
विचारेण भवेच्छ्रेयस्तन्निदानमपि श्रुतम् ।
माहात्म्यश्रुतिरित्येवं[1] तत्र मे संशयो महान् ॥३॥
कथं वा तदपि प्राप्यं साधनं तत्र किं भवेत् ।
स्वाभाविकं तद्यदि स्यात्तत्सर्वैर्न कुतः श्रुतम् ॥४॥
अहं वाद्यावधि कुतः प्रवृत्तिं नाप्तवानिह ।
दुःखं मत्तोऽधिकं प्राप्ता विहताश्च पदे पदे ॥५॥
न कुतः साधनं प्राप्ता एतन्मे कृपया वद ।

अत्राध्याये धामपद्यैर्माहात्म्यश्रवणेऽपि वै ।
[2]सत्सङ्गः कारणमिति चाख्यानेन निरूप्यते ॥

पूर्वाध्याये माहात्म्यश्रवणाद् भक्तिस्तत उपासनं ततो विचारोदय इत्युक्तम् । तत्र माहात्म्यश्रवण एव किं कारणमिति पप्रच्छेत्याह हारितायनः[3]—दत्तात्रेयेति ॥ १-२ ॥ तत्र माहात्म्यश्रुतौ ॥ ३ ॥ तदपि माहात्म्यश्रवणमपि । प्राणिमात्रस्याशनायापिपासादिवत् स्वाभाविकमेवैतदिति चेदाह—तत्सर्वैरिति ॥ ४ ॥ शौर्यवीर्यादिवत् त्वादृशानामेवायं स्वभाव इति चेदाह—अहं वेति । इह माहात्म्यश्रवणे । दुःखप्राप्तिरेवात्र मूलमिति चेदाह—दुःखमिति ॥ ५ ॥ अहं यथा रामेण विहतः पराजित

---

१. रित्येव—क०, रिवेयम्—ख० । २. तत्सङ्गः—क० । ३. ताय नमः—क० ।

इत्यापृष्टः प्राह भूयो हृष्टो दत्तो दयानिधिः ॥६॥
शृणु राम प्रवक्ष्यामि निदानं श्रेयसः परम् ।
सद्भिः सङ्गः परं मूलं सर्वदुःखनिबर्हणम् ॥७॥
परमार्थफलप्राप्तौ बीजं सत्सङ्ग उच्यते ।
त्वं चापि तेन हि सता संवर्तेन महात्मना ॥८॥
सङ्गतः सन्निमां प्राप्तो दशां श्रेयःफलोदयाम् ।
सन्त एव हि संयाता दिशन्ति परमं सुखम् ॥९॥
विना सत्सङ्गतः केन प्राप्तं श्रेयः परं कदा ।
लोकेऽपि यादृशं सङ्गं यो यः प्राप्नोति मानवः ॥१०॥
तत्फलं स समाप्नोति सर्वथा नहि संशयः ।
[1]अत्र ते कीर्तयिष्यामि शृणु राम कथामिमाम् ॥११॥
पुरा दशार्णाधिपतिर्मुक्ताचूड इतीरितः ।
तस्य पुत्रौ हेमचूडमणिचूडौ बभूवतुः ॥१२॥
सुरूपौ सुगुणौ चोभौ सर्वविद्याविशारदौ ।
कदाचिन्मृगयोत्साहात् सेनाभिः परिवारितौ ॥१३॥
सह्याचलवनं भीमं सिंहव्याघ्रादिसङ्कुलम् ।
महाबलौ विविशतुर्धनुर्बाणधरौ किल ॥१४॥
अथ तत्र मृगान् सिंहान् वराहान् महिषान् वृकान् ।
जघ्नतुर्निशितैर्बाणैर्लाघवात् कार्मुकच्युतैः ॥१५॥

एवमन्ये पदे पदे विहता अपि कुतो न माहात्म्यं श्रुतवन्तः, एतद्वदेत्यर्थः ॥ ६ ॥ निदानमादिकारणम् । परं मूलमादिकारणम् ॥ ७ ॥ तच्च राम एव निदर्शयति—त्वं चेति । सत्सङ्गं स्तौति—सन्त इति ॥ ९–१० ॥ तत्फलं सङ्गानुरूपं सदसद्वा । पूर्वाध्याये संवर्तोपदिष्टं विज्ञानं संवर्तस्य तादृशस्थितिं च वदेत्युक्तम् । तत्सर्वं सत्सङ्गफलत्वेन

१. अत्रेति—क० ।

पांशुभिर्नभ आक्रान्तमभूद् दर्शनिशोपमम् ।
न दृश्यते तत्र शिला वृक्षः पुरुष एव वा ॥१७॥
कुतो नीचोच्चतां पश्येदेवं ध्वान्तावृतो गिरिः ।
निहता शर्करावर्षैः सेनात्यन्तं पलायिता ॥१८॥
वृक्षान् केचिच्छिलाः केचिद् गुहाः केचिदुपासदुः ।
अश्वारूढौ राजपुत्रावपि दूरं पलायितौ ॥१९॥
हेमचूडः क्वचित्तत्र [1]प्रपेदे तापसाश्रमम् ।
कदलीखर्ज्जूरवनैराक्रान्तमतिसुन्दरम् ॥२०॥
तत्रापश्यच्छुभां काञ्चित् कन्यामग्निशिखामिव ।
प्रद्योतमानां वपुषा तप्तहेमसुवर्चसाम् ॥२१॥
तां दृष्ट्वा राजपुत्रोऽपि पद्मामिव सुरूपिणीम् ।
स्मयमान इवाऽपृच्छत् का त्वं पद्मानने वने ॥२२॥
निर्जने भीतिजनने [2]निर्भयेव समास्थिता ।
कस्य त्वमपि केनात्र निवसस्येकला कथम् ॥२३॥
पृष्टैवं प्राह सा कन्या राजपुत्रमनिन्दिता ।
स्वागतं ते राजपुत्र विष्टरं प्रतिपद्यताम् ॥२४॥
तपस्विनामयं धर्मः पूजनं ह्यतिथेस्तु यत् ।
श्रान्तं त्वामभिपश्यामि व्यथितं चण्डवायुना ॥२५॥
एवं विनिघ्नतोर्वन्यान् मृगान् राजकुमारयोः ।
चण्डवायुः प्रादुरासीच्छर्कराश्मप्रवर्षणः ॥१६॥

वक्तुमाख्यायिकामुपक्रमते—अत्रेति ॥ ११-१८ ॥ उपासदुः संश्रिता बभूवुः ॥ १९-२२ ॥ केन हेतोर्निवससि ? कथमेकला निवससीति सम्बन्धः ॥ २३ ॥ विष्टरम् आसनम् ॥ २४ ॥ मत्प्रश्नस्योत्तरमनुक्त्वा कुत आदौ पूजनं क्रियत इति चेदाह— तपस्विनामिति । तत्रैव[3] हेत्व-

१. प्रदेशे—घ० । २. निर्भये वश—क० । ३. तत्र—क० ।

बध्वा खर्जूरवृक्षेऽश्वमत्रासीनो गतश्रमः ।
मद्वृत्तमर्हसि श्रोतुमित्युक्तः स तथाऽकरोत् ॥२६॥
फलानि भोजयामास पाययामास सद्रसम् ।
एवं तं विश्रमं प्राप्तं राजपुत्रमनिन्दिता ॥२७॥
प्राह सा मधुसंस्रावपेशलाकारया गिरा ।
राजपुत्र व्याघ्रपादो मुनिः शिवपदाश्रयः ॥२८॥
येन लोकाः पुण्यतमा जिताः स्वतपसो बलात् ।
परावरज्ञो ह्यनिशं पूजितो मुनिनायकैः ॥२९॥
तस्याहं धर्मतः पुत्री हेमलेखेति विश्रुता ।
विद्युत्प्रभाख्या विद्याध्री सा सर्वाङ्गमनोहरा ॥३०॥
इमां वेणामनु नदीं स्नातुमभ्याययौ क्वचित् ।
तदा तत्राजगामार्थात् सुषेणो वङ्गभूपतिः ॥३१॥
स ददर्श विगाहन्तीं नदीं तां लोकसुन्दरीम् ।
क्लिन्नांशुकान्तरत्यन्तव्यक्तपीनकुचद्वयाम् ॥३२॥
कामबाणहतस्तत्र तां प्रार्थयदथापि सा ।
सौन्दर्यमोहिता तस्य तदुक्तिं सममंसत ॥३३॥
सङ्गम्याथ तया राजा ययौ स्वनगरं प्रति ।
दधार सापि विद्याध्री गर्भं राजर्षिवीर्यतः ॥३४॥
भीताऽपचारात् पत्युः सा गर्भं त्यक्त्वात्र संययौ ।
अमोघवीर्याद् राजर्षेर्जाताहं कन्यका ततः ॥३५॥

न्तरमाह—श्रान्तं त्वामिति ॥ २५–२६ ॥ सद्रसं स्वादूदकम् ॥ २७ ॥ पेशलाकारया शोभनया ॥ २८ ॥ परावरज्ञो ब्रह्मज्ञः ॥ २६ ॥ स्वस्य धर्मपुत्रीत्वमेव निरूपयितुमाह—धर्मत इति । न तनुजेत्यर्थः । विद्युदिति ॥ ३०–३२ ॥ अथ सापीत्यन्वयः । सममंसत अङ्गीचकार ॥ ३३–३४ ।

मां ददर्श व्याघ्रपादः सन्ध्योपास्त्यर्थमागतः ।
दयया मामुपादायाऽपालयज्जननी यथा ॥३६॥
धर्मेण यः पालयिता प्रोच्यते हि पितैव सः ।
अहं तस्य धर्मपुत्री पितृसेवापरायणा ॥३७॥
तस्य माहात्म्यतो मेऽत्र भयं नास्त्येव कुत्रचित् ।
नायं सुरासुरैर्वापि कदाचिद् दुष्टबुद्धिभिः ॥३८॥
प्रवेष्टुमाश्रमोऽर्हः स्यात् प्रविशन्नाशमाप्नुयात् ।
एतन्मेऽभिहितं वृत्तं तिष्ठ किञ्चिन्नृपात्मज ॥३९॥
आयास्यति स भगवान् पिता मे तं निशामय ।
प्रणम्य तं प्राप्य चेष्टं ततः कल्ये प्रयास्यसि ॥४०॥
हेमलेखावचः श्रुत्वा तत्सौन्दर्येण मोहितः ।
भीतः किञ्चित् प्रवक्तुं तां विमना इव चाभवत् ॥४१॥
अथालक्ष्य राजपुत्रं कामस्य वशमागतम् ।
प्राह सा विदुषी भूयो राजपुत्र धृतिं भज ॥४२॥
आगच्छति पिता सद्यस्ततोऽभिलषितं भज ।
एवं वदन्त्यां तस्यां स व्याघ्रपादो महामुनिः ॥४३॥
आजगाम [1]वनात् पत्रपुष्पादेः कृतसञ्चयः ।
मुनिं समागतं दृष्ट्वा राजपुत्रः समुत्थितः ॥४४॥

[2]अत्र वेणातीरे । अमोघेति । "राजर्षेरमोघवीर्यत्वादहं गर्भे परिपाकं विनैव तद्वीर्यात् कन्यका जातेति भावः ॥ ३५-३७ ॥ कथमेकला निवससीत्यस्योत्तरमाह—तस्येति ॥ ३८-३९ ॥ राजपुत्रस्य स्वस्मिन्नभिप्रायमालक्ष्य स्वाङ्गीकारं[3] द्योतयन्त्याह—प्राप्य चेष्टमिति । आवयोरनुरूपत्वाद् मां तुभ्यं दास्यत्येवेत्याशयः । कल्ये उषसि ॥ ४० ॥ मुनि-

---

१. वनाद्यत्र पुष्पा—क० । २. 'अत्र'...'रमोघ' नास्ति—क० ।
३. स्वाङ्गीकारे—क० ।

प्रणम्य नाम संश्राव्योपविष्टस्तेन देशितः ।
अथ दृष्ट्वा राजपुत्रं कामेन विकृताकृतिम् ॥४५॥
ज्ञात्वा योगदृशा सर्वं मत्वा युक्तं च तत्तदा ।
दारक्रियार्थं तस्मै तां हेमलेखां ददौ मुनिः ॥४६॥
तुष्टो राजकुमारोऽपि तामादाय पुरं ययौ ।
मुक्ताचूडोऽतिसन्तुष्टो महोत्सवविधानतः ॥४७॥
विवाहमकरोत्तस्य विधानेन क्षितीश्वरः ।
अथ राजकुमारोऽपि तया क्रीडापरः सदा ॥४८॥
सौधेषु वनराजीषु पुलिनादिषु संबभौ ।
हेमलेखां राजपुत्रो भोगेष्वनतिकामिनीम् ॥४९॥
उदासीनां सदा दृष्ट्वा पप्रच्छ रहसि क्वचित् ।
किं प्रिये नानुरक्तासि प्रिये मय्यनुरागिणि ॥५०॥
कुतो भोगेषु नात्यन्तमासक्तासि शुचिस्मिते ।
किं भोगास्ते मनोयोग्या न सन्त्यत्र कुतस्त्विदम् ॥५१॥
अत्युत्तमेषु भोगेषु नासक्तेव विभासि मे ।
त्वय्यासक्तिविहीनायां कथं मे सुखदा रतिः ॥५२॥
आसक्ते मयि चापि त्वं भास्यन्यगतमानसा ।
भाषितापि मया भूयो न शृणोष्येव किञ्चन ॥५३॥

माहात्म्याद्धीतः । किञ्चित् स्वाभिप्रायम् ॥४१-४४॥ देशित आज्ञप्तः ॥ ४५ ॥ सर्वं तयोरभिप्रायम् । तत् तस्मै कन्यादानम् ॥ ४६-५० ॥ कुतः कस्माद्धेतोः । भोगाः भोगसाधनानि । कुत इदमौदासीन्यम् ॥ ५१ ॥ भोगा अनुत्तमा एवेत्याशयेनाह—अत्युत्तमेष्विति । अत्युत्तमेऽलभ्येऽपि भोगे आसक्तेव न विभासि । किं मदासक्त्या तवेति चेदाह—त्वयीति । परस्परासक्त्यतिशयेनैव रतिः सुखदेत्याशयः ॥ ५२ ॥ कथमनासक्तिर्मयि त्वया निश्चिता तदाह—आसक्त इति ।

आगतं कण्ठसंलग्नं चिरादपि विभाव्य च ।
कदा नाथागतं चेति पृच्छस्यविदिता यथा ॥५४॥
पेशलेषूपभोगेषु दुर्लभेषु क्वचिन्न ते ।
मन आसज्जते कस्मान्न किञ्चिदनुमोदसि ॥५५॥
मया विरहितां त्वां वै निमील्य नयने स्थिताम् ।
यदा यदोपगच्छामि पश्यामि च तदा तदा ॥५६॥
विमुख्यां त्वयि भोगेषु विषयेषु सुखं मम ।
कथं भवेद्दारुयोषासङ्गतस्येव तद्वद ॥५७॥
न तवाभिमतं त्यक्त्वा किञ्चिन्मम समीहितम् ।
सर्वथा त्वामनुगतो ज्योत्स्नां कुमुदवत् किल ॥५८॥
तदेवं ते कुतश्चित्तं ब्रूहि प्राणाधिकप्रिये ।
येन शुद्धयेत्तु मच्चित्तं शापितासि मया प्रिये ॥५९॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे सत्सङ्गमाहात्म्ये
तृतीयोऽध्यायः ॥



[1]मयि आसक्ते त्वदेकभावे सत्यपि त्वमन्यगतमानसेव भासीति शेषः। अन्यगतमानसत्वं वा कथं त्वयाऽवगतमिति चेदाह—भाषितेति ॥ ५३ ॥ चिरात् कण्ठसंलग्नमपि कदा आगतमिति पृच्छसि ॥ ५४ ॥ पेशलेषु सुन्दरेषु मनो [2]नासज्जत इत्यपि कथं विदितमिति चेदाह—न किञ्चिदिति। यतो न किञ्चिदलभ्यमपि भोग्यमहो अतिसुन्दरमिति ना[अ]नुमोदसि ॥ ५५–५७ ॥ न च त्वामननुगतोऽस्मीत्याह —न तवेति ॥ ५८ ॥ एवं विषयविमुखम् ॥ ५९ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
तृतीयोऽध्यायः ॥



---

१. अपि–क० ।  २. न सज्जत–क० ।

# अथ चतुर्थोऽध्यायः

प्रियस्य कण्ठासक्तस्य निशम्यैवं वचो हि सा ।
ईषत्स्मितानना प्राह राजपुत्रमनिन्दिता ॥ १ ॥
बुबोधयिषती राजपुत्रं युक्त्याऽब्रवीदिदम् ।
राजपुत्र शृणु वचो नाहं त्वयि विरागिणी ॥ २ ॥
किं स्यात् प्रियतमं लोके किन्नु स्यादप्रियं त्विति ।
विचारपरमा नित्यं नान्तमेत्यत्र मे मतिः ॥ ३ ॥
ध्यायाम्येतच्चिरान्नित्यं स्त्रीस्वभाववशादहम् ।
नैतज्जानामि तत्त्वं मे वक्तुमर्हसि तत्त्वतः ॥ ४ ॥
एवं प्रोक्तो हेमचूडः प्रहस्य प्राह तां प्रियाम् ।
नूनं स्त्रियो मूढधिय इति सत्यं न संशयः ॥ ५ ॥
प्रियाप्रिये हि जानन्ति पशुपक्षिसरीसृपाः ।
यतस्तेषां दृश्यते हि प्रियेष्वप्रियकेषु च ॥ ६ ॥

अध्याये मानपमितेऽस्मिन्नाख्यानेन सुस्फुटम् ।
वैरस्यं भोगजालेषु वैराग्याय निरूप्यते ॥

अनिन्दितेति । न तस्या विदितवेद्याया विषयवैमुख्यं मौढ्यादिनेति भावः ॥ १ ॥ बुबोधयिषती एनं [1]बोधयिष्यामीतीच्छायुता । युक्त्येति । केवलस्ववचसि तस्यानाश्वाससम्भवादिति भावः । इदं वक्ष्यमाणम् ॥ २ ॥ यदि नासि विरागिणी तर्हि कुत एवमिति चेदाह—किं स्यादिति । विचार एव परमो मुख्यध्येयो यस्याः । अन्तं निश्चयम् ॥ ३ ॥ किमेतद्ध्यानेन ते फलमिति चेदाह—स्त्रीस्वभावेति । तत्त्वमिति । प्रियाप्रियस्वरूपस्य तत्त्वं याथार्थ्यम् ॥ ४-५ ॥ कुतो मूढधिय इति चेदाह—प्रियेति ।

१. ष्यती–क० ।

प्रवृत्तिश्च निवृत्तिश्च किमत्र बहु चिन्तनम् ।
सुखं यस्मात् तत् प्रियं स्यात् दुःखं यस्मात्तदप्रियम् ॥ ७ ॥
किमत्र मुग्धभावेन नित्यं चिन्तयसि प्रिये ।
श्रुत्वा प्रियवचः प्राह हेमलेखा पुनः प्रियम् ॥ ८ ॥
सत्यं स्त्रियो मुग्धभावा नास्त्यासां सद्विमर्शनम् ।
तथाप्यहं बोधनीया त्वया सम्यग्विमर्शिना ॥९॥
सुबोधिता त्वया चाहं चिन्तामेतां विसृज्य तु ।
त्वया भोगेषु सततं भवाम्यनुदिनं ततः ॥१०॥
राजन् सुखञ्च दुःखञ्च याभ्यां भवति ते ननु ।
प्रियाप्रिये विनिर्दिष्टे त्वया सूक्ष्मविमर्शिना ॥११॥
एकमेव सुखं दुःखं कालदेशाकृतेर्भिदा ।
जनयेदत्र तत् कस्मात् प्रतिष्ठाऽध्यवसायिनी ॥१२॥
यतो वह्निः कालभेदात् पृथगेव फलप्रदः ।
तथा देशविभेदेनाप्याकारस्य विभेदतः ॥१३॥

यत्तिर्यञ्चोऽपि जानन्ति तत्र कोऽयं विचार इति भावः ॥ ६ ॥ कथं त्वयैतत् पश्वादिज्ञानं विज्ञातमिति चेदाह—प्रवृत्तीति । प्रियाप्रिययोः प्रवृत्तिनिवृत्तिभ्यामनुमीयत इत्यर्थः । अत्र तिरश्चामपि प्रसिद्धेऽर्थे । ननु तर्हि प्रियाप्रिययोर्लक्षणं वदेति चेदाह—सुखमिति ॥ ७ । अत्र प्रसिद्धेऽर्थे ॥ ८ ॥ सद्विमर्शनं सम्यग्विचारः ॥ ९ ॥ भोगेष्वासक्ता भवामि । ततः बोधनानन्तरम् ॥ १० ॥ तल्लक्षणं दूषयितुमनुवदति—राजन्नित्यादि ॥ ११ ॥ भिदा भेदेन । एकमेव वस्तु कालादिभेदेन सुखं दुःखञ्च जनयेत् । अत्र एवम्भूते वस्तुनि । प्रतिष्ठा सुखसाधनमेवेत्यव्यभिचारिप्रतिष्ठितस्वरूपता । अध्यवसायिनी निश्चयवती ॥ १२ ॥ तदेव निरूपयति—यत इति । पृथक्फलस्य सुखादेः प्रद एव ॥ १३ ॥

शीतकाले प्रियो वह्निरूष्मे त्वप्रिय एव हि ।
हिमोष्णदेशभेदेन प्रियश्चाप्रिय एव च ॥१४॥
शीतप्रकृतिजीवानां प्रियोऽन्येषां तथेतरः ।
अथाप्यधिकभावेनाल्पभावेनैवमीरितः ॥१५॥
एवं शीतं धनं दाराः पुत्रा राज्यं तथेतरत् ।
अथाप्येवं महाराजो दारपुत्रधनैर्वृतः ॥१६॥
शोचत्यनुदिनं कस्मान्न शोचन्तीतरे कुतः ।
योऽयं भोगः सुखार्थोऽस्ति सोऽप्यनन्तो भवेन्ननु[1]॥१७॥
न केनचित्तदखिलं प्राप्तं यस्मात् सुखं भवेत् ।
यत्किञ्चिल्लाभतो [2]यत्स्यात् सुखं तत्रापि संशृणु॥१८॥
न तत् सुखं भवेन्नाथ यतो दुःखविमिश्रितम् ।

एतदेव विविच्याह—शीतेति ॥ १४ ॥ प्रकृतिरूपाकारभेदेऽपि तथेत्याह—शीतेति । वह्नेरल्पानल्परूपाकारभेदेऽपि तथेत्याह—अथेति । एवं सुखासुखयोः साधकत्वेन प्रियोऽप्रियश्च ॥ १५ ॥ उक्तमर्थमन्यत्रातिदिशति—एवमिति । इतरत् पश्वादि । एवं न कस्यचित् सुखमात्रसाधनत्वमित्युक्त्वा सुखसाधनत्वं नास्त्येवेत्याह—अथापीति । सर्वसुखसाधने सत्यपीत्यर्थः । महाराजो मुक्ताचूडः ॥ १६ ॥ दाराद्यखिलसुखसाधनयुक्तोऽपि कस्मादनुदिनं शोचति । इतरे सुखसाधनरहिता विरागिणः । ननु मत्पितुरखिलविषयाप्राप्त्या शोकः । अतोऽखिलविषयाणां सम्भूय सुखसाधनत्वमिति चेदाह—योऽयमिति ॥ १७ ॥ तस्यानन्त्येन प्राप्त्यसम्भवान्नेत्याह—न केनचिदिति । मास्त्वखिललाभस्तथापि कदाचित् किञ्चिल्लाभे कस्यचित् सुखं भवत्येवेति चेदाह—तत्रापीति । तत्सुखविषयेऽपीत्यर्थः ॥ १८ ॥ दुःखविमिश्रितमिति । प्रकाशान्धकारयोरिव सुखदुःखयोर्विरुद्ध-

१. न तु—क० ख० । २. यस्मात्—क० ।

दुःखं तु द्विविधं प्रोक्तं बाह्यमान्तरमित्यपि ॥१९॥
बाह्यं शरीरसम्भूतं धातुदोषादिसम्भवम् ।
आन्तरं मानसं प्रोक्तं तच्च वाञ्छासमुद्भवम् ॥२०॥
महत्तरं मानसं स्याद्येन ग्रस्तमिदं जगत् ।
वाञ्छैव दुःखविटपिबीजं सुदृढशक्तिकम् ॥२१॥
यया किङ्करतां प्राप्ताः कुर्वन्त्येव दिवानिशम् ।
इन्द्रादयोऽपि विबुधाः स्वर्निवासाः सदोदिताः ॥२२॥
सुखं वाञ्छावशेषेऽपि यदस्ति नृपसम्भव ।
तद् दुःखमेव जानीहि यत् कृमिष्वपि सम्भवेत् ॥२३॥

स्वभावत्वान्नैकदा सम्भवः । अतस्तत्काले दुःखस्यानुभूयमानत्वान्न त्वदभिमतं सुखमिति भावः । ननु न[1] तत्काले दुःखानुभवोऽस्तीत्याशङ्क्य तद्दुःखमुपपादयितुं विभजति—दुःखं त्विति ॥ १९ ॥ धातवो वातपित्तादयः । आदिना स्फोटाभिघातादिः ॥ २० ॥ शरीरान्मानसं महत्तरम् । कुतो महत्तरत्वं तदाह—येनेति । बीजस्वभावादपि तस्य महत्तरत्वमाह—वाञ्छैवेति । सुदृढशक्तिकम्, अवश्यफलपर्यवसायीति भावः । नैवं धातुदोषादिः, तस्य सुप्रतीकार्यत्वात् ॥ २१ ॥ अत एवामृताशिनामपि सा दृश्यत इत्याह—ययेति । वाञ्छयेत्यर्थः । स्वर्गात्मकगुणोत्तरदेशसेवनेन सदोदयनिमित्तामृतपानेन वा तां प्रतीकर्तुमसमर्था एव देवा इत्याशयः ॥ २२ ॥ ननु, मन्दान्धकारे प्रकाशान्धकारयोरविरुद्धयोरिव वाञ्छाकाले सुखदुःखयोः सहभाव इष्यत इति चेदाह—सुखमिति । दुःखमिश्रितस्य सुखस्य कृमिष्वपि दुःखप्रकृतिकेषु सम्भवान्न तन्मुख्यं सुखम् । किन्तु [2]मन्दान्धकारस्थप्रकाशाभासवत् सुखाभास एवेत्याशयः ॥२३॥

---

१. 'न' नास्ति—क० । २. मदा—क०, महा—ग० घ० ।

वरं तिर्यक्कीटकृमिप्रभृतीनां सुखं तु यत् ।
स्वल्पवाञ्छासम्मिलितं नृणां किं स्यात् सुखं वद ॥ २४ ॥
वाञ्छाशतसमाविष्टो यदि किञ्चिदुपेत्य तु ।
सुखी भवेदिह तदा को हि न स्यात् सुखी वद ॥ २५ ॥
अखिलाङ्गे वह्निदग्धे सूक्ष्मपाटीरबिन्दुना ।
यदि शीतलदेहः स्यात्तदा सोऽपि सुखी भवेत् ॥ २६ ॥
प्रियायाः सम्परिष्वङ्गात् सुखं प्राप्नोति वै नरः ।
तत्रैवाङ्गस्य विषमबन्धाद् दुःखं भवेन्ननु ॥ २७ ॥
रत्यावेशात् परिश्रान्तिः सर्वेषां जायते किल ।
अनन्तरं भारवाहपशोरिव परिश्रमः ॥ २८ ॥

ननु तत्सुखाभासमपि इतरजन्तुभ्यो मर्त्यस्योत्तममेवेति चेन्नेत्याह—वरमिति । तिर्यक् पशुः । कीटाः सपक्षाः । कृमयोऽपक्षाः । [1]प्रभृतिना [2]वयांसि । तिर्यगादीनां स्वल्पवाञ्छासम्मिलितत्वात् प्रभातान्धकारमिलितप्रकाशाभासवत् सुखाभासम् । नृणां तु अनन्तवाञ्छामिलितत्वाद् गाढान्धकारस्थखद्योतप्रकाशवत् कार्याक्षमत्वात् तन्न सुखाभासमपीति भावः ॥ २४ ॥ यद्येवंविधसुखेनापि सुखित्वे न कोऽपि दुःखी भवेदित्याह—वाञ्छेति । किञ्चित् स्रक्चन्दनादि ॥ २५ ॥ एवं तर्हि महादुःखेऽपि सुखी स्यादित्याह—अखिलेति । पाटीरबिन्दुश्चन्दनबिन्दुः । २६ ॥ ननु प्रियापरिष्वङ्गे हि बाह्यसर्वविस्मृतेः केवलं सुखमस्तीति चेदाह – प्रियाया इति । तत्रैव परिष्वङ्गकाल एव । विषमः पीडाकरो बन्धः परस्पराङ्गसंश्लेषः । तद्दुःखयुतत्वान्न तदपि केवलं सुखमिति भावः ॥ २७ ॥ परिष्वङ्गादौ दुःखमस्तीत्यत्र सर्वेषामनुभवं निदर्शयति—रतीति । रत्यावेशादनन्तरम् । इयं परिश्रान्तिर्दुःखमूलेत्यत्र दृष्टान्तः—भारेति । इयं परिश्रान्तिर्दुःखजन्या,

१. तत्प्रभृतीनां—क० ख० । २. 'वयांसि' नास्ति—ख० ।

कथं पश्यसि तत् सौख्यं नाथैतन्मे समुच्यताम् ।
यावत् सुखं प्रियासङ्गे नाडीसंघट्टसम्भवम् ॥ २९ ॥
तवास्ति[1] तावन्न किमु शुनामस्तीह तद्वद ।
यत्ततो ह्यतिरिक्तं ते दृष्टसौन्दर्यसम्भवम् ॥ ३० ॥
तत् केवलाभिमानोत्थं स्वाप्नस्त्रीसङ्गमे यथा ।
पुरा कश्चिद्राजसुतो मन्मथाधिकसुन्दरः ॥३१॥
कांञ्चित् सुरूपिणीं प्राप्तः स्त्रियं सर्वमनोहराम् ।
अत्यन्तमनुरक्तः स तस्यां राजकुमारकः ॥३२॥
सा त्वन्यस्मिन् राजसुत भृत्ये संसक्तमानसा ।
स भृत्यो राजपुत्रं तं वञ्चयामास युक्तितः ॥३३॥
मदिरां मोहनार्थाय तस्मै दत्वातिमात्रकम् ।
ततो मदान्धाय चेटीं काञ्चित् प्रेष्य कुरूपिणीम् ॥३४॥
बुभुजे तां तस्य पत्नीं सर्वलोकैकसुन्दरीम् ।
एवमेव चिरं तत्र मदान्धो नृपतेः सुतः ॥३५॥

परिश्रान्तित्वात्, भारवाहपशुपरिश्रान्तिवत् ॥ २८ ॥ एवमस्य दुःखयुक्तत्वात्तत्सौख्यं कथं पश्यसि ॥ २९ ॥ नाडीसंघट्टः आनन्देन्द्रियसंघर्षः, तज्जनितं सुखं शुनामप्यस्तीति न तत्सुखं बुधैरभिलषणीयमिति भावः। ततः नाडीसंघट्टजात्। अतिरिक्तम् अधिकम्। दृष्टसौन्दर्यसम्भवं सौन्दर्यदर्शनजम् ॥ ३० ॥ सौन्दर्यदर्शनादिजसुखस्याभिमानोत्थत्वे आख्यायिकामाह—पुरेति ॥ ३१-३३ ॥ युक्तिमेवाह—मदिरामिति। अतिमात्रं पुष्कलम् ॥ ३४ ॥ स्वस्मै मदान्धाय प्रेषितां चेटीं दासीं राजकुमारो बुभुजे। तस्य राजकुमारस्य पत्नीम्। स भृत्यो बुभुजे इति तात्पर्यम् ॥ ३५ ॥ राजकुमारो

---

१. तदास्ति—क० ।

प्रत्यहं चेटिकां गच्छन् स्वात्मानं सममंसत ।
धन्योऽहमीदृशीं लोकसुन्दरीं प्राणप्रेयसीम् ॥३६॥
उपगच्छाम्यहं नित्यं न मेऽस्ति सदृशः क्वचित् ।
एवं वृत्ते चिरे काले कदाचिद् दैवयोगतः ॥३७॥
भृत्यो निधाय पानं स कार्ये चात्यन्तिके ययौ ।
अथ राजकुमारस्तत्पानं नात्यन्तिकं पपौ ॥३८॥
निमित्ततो ययौ शीघ्रं रत्युत्सुकितमानसः ।
शयनीयं मनःकान्तं सर्वभोगर्द्धिसंयुतम् ॥३९॥
शचीगृहं देवपतिरिव नन्दनसंस्थितम् ।
परार्द्ध्यपर्यङ्कगतां तां चेटीमुपसङ्गतः ॥४०॥
कामवेगेन विवशो बुभुजेऽत्यन्तहर्षतः ।
उपलभ्याथ रत्यन्ते चेटीं तां विकृताकृतिम् ॥४१॥
शङ्कितोऽमर्षितश्चापि किमेतदिति चिन्तयन् ।
क्व सा मम प्रियतमेत्येवं तामन्वपृच्छत ॥४२॥
पृष्टैवं तेन सा चेटी विमदं तं [1]निशाम्य तु ।
भीता न किञ्चित्तं प्राह वेपमाना तदा ततः ॥४३॥

धन्योऽहमित्याद्यात्मानमभिमनुते ॥ ३६-३७ ॥ स भृत्यः । आत्यन्तिके आवश्यके कार्ये सति । आत्यन्तिकं पुष्कलम् ॥ ३८ ॥ निमित्ततः केनचिन्निमित्तेन । न पपौ ॥ ३९ ॥ नन्दनवन[2]संस्थितं शचीगृहम् । परार्द्ध्यमुत्तमम् । तां भृत्यप्रेषिताम् ॥ ४० ॥ कामवेगेन तामपरीक्ष्यैव ॥ ४१ ॥ केयमिति शङ्कितः । अनया प्रतारितोऽहमिति मर्षितः । नेयं मां प्रतारयितुं समर्था, अतः किमेतदिति चिन्तयन् क्व सेत्याद्यन्वपृच्छत् ॥ ४२ ॥ तं कुमारम् । ततः चेटीवृत्तात् । आलक्ष्येति सम्बन्धः ॥ ४३ ॥

---

१. निशम्य–क० ख० ।   २. 'वन' नास्ति–क० ख० ग० ।

आलक्ष्य राजपुत्रोऽपि वैषम्यं चात्मवञ्चनम् ।
वामेन जग्राह कचे चेटीं क्रोधारुणेक्षणः ॥४४॥
[1]कृपाणिमाददे दक्षहस्तेन नृपसम्भवः ।
तर्जयंस्तां प्रत्युवाच वद वृत्तं यथातथम् ॥४५॥
नो चेन्न स्याज्जीवितं ते क्षणमात्रमपि द्रुतम् ।
सैवं निशम्य तद्वाक्यं भीता प्राणपरीप्सया ॥४६॥
जगौ यथावत्तत् सर्वं चिराद् वृत्तं समास्थितम् ।
प्रादर्शयच्चापि तस्मै तां भृत्येन सुसङ्गताम् ॥ ४७ ॥
क्वचिद्भूमौ कटे भृत्यं कृष्णं पिङ्गललोचनम् ।
प्रांशुं मलिनसर्वाङ्गं रूक्षवक्त्रं जुगुप्सितम् ॥ ४८ ॥
समाश्लिष्य रतिश्रान्तां सर्वाङ्गैः प्रेमभावतः ।
मृदुबाहुलतावृत्तग्रीवस्य वदने स्वकम् ॥ ४९ ॥
निवेश्य वक्त्रकमलं पद्भ्यामाश्लिष्य गाढतः ।
तस्योरुयुग्मं तद्धस्तसंसक्तगुरुसुस्तनीम् ॥ ५० ॥
वासन्तिकामिव लतां वृतां कुसुमकोरकैः ।
रोहिणीं राहुणोपेतामिवापश्यन्नृपात्मजः ॥ ५१ ॥
एवंविधां समालोक्य निद्रयाऽपगतस्मृतिम् ।
मोमुह्यमानश्चात्यन्तं क्षणं पश्चाद् धृतिं भजन् ॥ ५२ ॥
यत् प्राह राजतनयस्तन्मत्तः श्रूयतां ननु ।
धिङ्मामनार्यमत्यन्तं मूढं मदविमोहितम् ॥ ५३ ॥

**वैषम्यमनर्हं वचनम् ॥ ४४ ॥ कृपाणिं खड्गम् ॥ ४५ ॥ अतो द्रुतं वदेति योजना ॥ ४६ ॥ तत् प्रियावृत्तम् । वृत्तम् अतीतम् । समास्थितं तया समाचरितम् ॥ ४७ ॥ प्रांशुम् उच्चम् ॥ ४८ ॥ सर्वाङ्गैः समाश्लिष्य । लतया वृता वेष्टिता ग्रीवा यस्य ॥ ४९–५१ ॥ एवंविधां भृत्यसङ्गताम् ।**

---

१. कृपाण–ख० ।

धिग् ये स्त्रीष्वभिसंप्रीता धिक् तांश्च पुरुषाधमान् ।
न कामिन्यः कस्यचित् स्युर्वृक्षस्येव च शारिका: ।। ५४ ।।
किमहं मां प्रवक्ष्यामि मुग्धं महिषपोतवत् ।
जानन्तमेनां प्राणेभ्यः प्रेष्ठां सुचिरकालतः ।। ५५ ।।
न स्त्रियः कस्यचिद्वा स्युर्वेश्या इव विटस्य हि ।
यः स्त्रीषु विश्रब्धमनाः स एव वनगर्दभः ।। ५६ ।।
या स्थितिः शारदाभ्रस्य क्षणिका ह्यनवस्थिता ।
ततोऽपि पेलवा स्त्रीणां स्थितिरत्यन्तचञ्चला ।। ५७ ।।
नाहमद्यावधि ह्येवं स्त्रीस्वभावमहोऽविदम् ।
यन्मां सर्वात्मनासक्तं त्यक्त्वा भृत्यमनुव्रता ।। ५८ ।।
अन्यासक्ता गूढभावा मयि छद्मानुरागिणी ।
प्रदर्शयन्ती भक्तिं स्वां नटीव विटमण्डले ।। ५९ ।।
नाविदं लेशतोऽप्येनां मदिरामत्तमानसः ।
छायेव मां सङ्गतेति मत्वा विश्रब्धमानसः ।। ६० ।।
अप्रेक्षणीयां चेटीं तां वञ्चितश्चिरसङ्गतः ।
नूनं मत्तो मूढतमः को भवेज्जगतीतले ।। ६१ ।।
य एवं विस्रम्भपूर्वमनया चिरवञ्चितः ।

क्षणमत्यन्तं मोहं प्राप्तः ।। ५२-५३ ।। पुरुषाधमान् धिक्[1] । शारिका इति । यत्रेप्सितं फलं तत्र गच्छन्तीति भावः ।। ५४ ।। महिषपोतः सद्योजात[2] महिषः, तद्वन्मुग्धम् अतिजडमिति तात्पर्यम् ।। ५५ ।। एवमेव सर्वाः स्त्रिय इत्याह— नेति । वनगर्दभ इति । पुरगर्दभो हि जनसङ्गात् किञ्चिदन्यभावज्ञः कदाचित् स्यादिति तात्पर्यम् ।। ५६ ।। पेलवा लघुतरा ।। ५७-५८ ।। छद्मानुरागे दृष्टान्तः—नटीवेति ।।५९-६०।। अनया वञ्चितोऽहं चेटीं सङ्गतः ।। ६१ ।। तत्र हेतुः—य एवमिति ।

---

१. धिग् धिक्—ख० ग०, धिक्, धिग् माम्—घ० । २. जातो—क० ।

अहोऽयं भृत्यहतकः सर्वाङ्गविकृताकृतिः ॥ ६२ ॥
किमस्मिन्ननया दृष्टं सौन्दर्यं सर्वतोऽधिकम् ।
यतो मां निजसौन्दर्याहृतलोकावलोकनम् ॥ ६३ ॥
अनुरक्तं सर्वथैव त्यक्त्वैनमुपसङ्गता ।
एवं प्रलप्य बहुधा निर्विण्णोऽतितरां तदा ॥६४॥
राजपुत्रो वनं प्रागात् सर्वसङ्गविवर्जितः ।
तस्माद् राजकुमारैतत्सौन्दर्यं मनसोत्थितम् ॥६५॥
यथा त्वं मयि चात्यन्तसौभगेक्षणपूर्वकम् ।
रतिं विन्दस्यतितरां तथा वा तद्विशेषतः ॥६६॥
विन्दन्ति रतिमत्यन्तं योषित्सु विकृतास्वपि ।
अत्र ते प्रत्ययं वक्ष्ये शृणु प्रिय समाहितः ॥६७॥
विलोक्यते या हि योषित् सा बहिः सुव्यवस्थिता ।
या च तत्प्रतिबिम्बात्मरूपिणी चित्तसंश्रया ॥६८॥
सङ्कल्परूपिणी तस्याः सौष्ठवं मनसोल्लिखन् ।
पौनःपुन्येन तदनु वाञ्छामुपसमागतः ॥६९॥

हतकः अतिनिन्दितः ॥ ६२ ॥ सौन्दर्येण आहृतं लोकानामवलोकनं निरीक्षणं येन ॥ ६३ ॥ सर्वथाऽनुरक्तम् । निर्विण्णो विरक्तः ॥ ६४ ॥ यस्मात्तेन राजकुमारेण मोहितेनातिबीभत्सरूपां चेटीं चिरं [1]संगच्छता इयं सैव लोकसुन्दरीत्यभिमानमात्रेण तत् सुखं चिरं प्राप्तं तस्मादित्यर्थः । मनसोत्थितं मनसा परिकल्पितम् ॥ ६५ ॥ एतदेव दृष्टान्तेन द्रढयति—यथेति । तद्विशेषतः ततोऽप्यधिकरूपेण ॥ ६६ ॥ अत्र सौन्दर्यस्य मानसत्वे । प्रत्ययं निश्चयानुकूलां प्रक्रियाम् ॥ ६७ ॥ बहिः चित्तादन्यत्र ॥ ६८ ॥ तस्याः सौष्ठवं । सौन्दर्यं पौनःपुन्येनोल्लिखन् । तदनु सम्यगुल्लेखानन्तरम् । तद्विषयवाञ्छाम् ॥ ६९ ॥

१. गच्छता—क० ख० ग० ।

क्षुब्धेन्द्रियो नरस्तस्यां रतिमाप्नोति सर्वतः ।
अक्षुब्धे त्विन्द्रिये न स्यात् सुन्दर्यामपि वै रतिः ॥७०॥
तत्र मूलं समुल्लेखः सौष्ठवस्य पुनः पुनः ।
अतः क्षोभो नैव दृष्टो बालानां योगिनामपि ॥७१॥
तथा च यो यो यस्यां तु रतिं विन्दति मानवः ।
सुन्दर्यां वापि चान्यस्यां तत्र सौष्ठवमुल्लिखेत् ॥७२॥
दृश्यन्ते योषितोऽत्यन्तबीभत्साकारविग्रहाः ।
तरुणैः सङ्गतास्ताश्च दृश्यन्तेऽपत्यहेतुतः ॥७३॥
विरूपतोल्लेखनं वाप्यनुल्लेखस्तु सौष्ठवे ।
यदि स्यात्तत् कथं नृणां रतिस्तासु हि सम्भवेत् ॥७४॥
किं वक्तव्यमहो नृणां कामिनां क्षिप्तचेतसाम् ।
जघन्याङ्गेऽपि सौन्दर्यं भासते सर्वतोऽधिकम् ॥७५॥

क्षुब्धम् उपस्थेन्द्रियं यस्य । सर्वतोऽन्यवाञ्छाभ्यो निवृत्त इति शेषः । पुरुषस्य वाञ्छासहस्रसमाक्रान्तस्य स्त्रीसौन्दर्याद्युल्लेखनेन दृढतरः स्त्रीरतिवाञ्छोदयो यदा तदा अन्यवाञ्छा न्यग्भवन्तीति[1] भावः । एवं क्षोभाभावे न क्वचिद्रतिरित्याह—अक्षुब्धेति ॥ ७० ॥ तत्र क्षोभे । एतद्व्यतिरेकमुखेन द्रढयति—अत इति ॥ ७१ ॥ सौन्दर्योल्लेख एव क्षोभहेतुर्न सौन्दर्यमित्याह—तथा चेति । सौष्ठवं स्थितमस्थितं वा ॥ ७२ ॥ अत्र निदर्शनमाह—दृश्यन्त इति । बीभत्साकारो विग्रहोऽवयवसंस्थानं यासां ताः । एवंविधा जगति या दृश्यन्ते तास्तरुणैः संगताश्च दृश्यन्ते । ननु संगतेः रहसि सम्भवात् कथमन्यैः संगता दृश्यन्त इति चेदाह—अपत्यहेतुत इति ॥ ७३ ॥ ननु तत्र सौष्ठवोल्लेखनं विनापि सङ्गतिः स्यादिति चेदाह—विरूपेति । सौष्ठवेऽनुल्लेखः सौष्ठवविषयकानुल्लेखः । तासु विरूपासु ॥ ७४ ॥ ननु विरूपायां

1. भवती—क० ख० ।

मलमूत्रपरिक्लिन्नं यदङ्गं तत्र सौभगम् ।
पश्येच्चेत् कुत्र नो पश्येत् सौन्दर्यं तन्ममेरय ॥ ७६ ॥
तस्मात् सौन्दर्यमेतद्वै राजपुत्र निशामय ।
अभिमानमृते नैष सुखहेतुर्भवेत् क्वचित् ॥ ७७ ॥
क्षौद्रमाधुर्यवद् देहे सौन्दर्यं सहजं यदि ।
तद्बालानां कुमाराणां कुतो नो भाति तद्वद ॥ ७८ ॥
देशभेदेषु दृश्यन्ते विविधाकृतयो नराः ।
एकपादैकनयना लम्बकर्णा हयाननाः ॥७९॥
कर्णप्रावरणाः फालवक्त्रा निर्गतदंष्ट्रकाः ।
विनसा दीर्घनासाश्च लोमच्छन्ना विलोमकाः ॥८०॥
पिङ्गकेशाः श्वेतकेशा विकेशाः स्थूलकेशकाः ।
श्वित्रवर्णाः काकवर्णाः पिङ्गला लोहिताङ्गकाः ॥८१॥
एवं बहुविधा मर्त्याः सजातिवनितासु ते ।
रतिं विन्दन्ति त्वमिव राजपुत्र निशामय ॥८२॥
सुखसाधनभूतेषु मुख्यं यत् स्त्रीवपुः स्थितम् ।
सर्वप्रियं यत्र सर्वे मुह्यन्ति विबुधा अपि ॥८३॥

कथं सौन्दर्योल्लेखनमित्याशङ्क्य नैतत् कामिनां चित्रमित्याह— किमिति । क्षिप्तं विक्षिप्तं चेतो येषाम् । जघन्ये निकृष्टेऽपानोद्गारधूपिते मूत्रादिक्लिन्ने क्लिन्ननाडीव्रणसुषिरतुल्ये योन्याद्यङ्गेऽपि । सर्वतो मुखादिभ्योऽधिकम् ॥ ७५–७६ ॥ तस्मात् सौन्दर्यस्य मनःकल्पितमात्रत्वात् ॥ ७७ ॥ न क्षौद्रमाधुर्यवत् सौन्दर्यं स्वाभाविकमिति प्रकारान्तरेण सौन्दर्यस्य मानसत्वं साधयति—क्षौद्रेति ॥ ७८ ॥ नास्ति विरूपासु कामिनां रतिः। क्वचिद् दृश्यमानापि न पूर्णसुखावहेत्याशङ्क्य देशान्तरस्थित्याख्यानेन परिहरति—देशेति ॥ ७९–८१ ॥ निशामय पश्य ॥ ८२ ॥ शरीरप्रकृतिं वर्णयितुमाह—सुखेति ॥८३–८४॥

पुंसां वपुस्तथा स्त्रीणां प्रियमत्यन्तसुन्दरम् ।
विमर्शय सुबुद्ध्या त्वं राजपुत्र यथास्थितम् ॥८४॥
मांसलिप्तमसृक्क्लिन्नं शिराबद्धं त्वगाततम् ।
अस्थिपञ्जरकं लोमच्छन्नं पित्तकफाहितम् ॥८५॥
मलमूत्रकुसूलं तच्छुक्रशोणितसम्भवम् ।
मूत्रद्वारसमुद्भूतमहो प्रियमिहेष्यते ॥८६॥
य एवमतिबीभत्से वितन्वन्ति रतिं नराः ।
विट्क्रिमिभ्यः कुतस्तेषां भवेदन्तरमीरय ॥८७॥
राजपुत्र तनुरियं प्रिया हि नितरां तव ।
विभावय विवेकेन धातूनां च पृथक्स्थितिम् ॥८८॥
एवमन्यत्रोपयोज्ये मधुराम्लादिषड्रसे ।
परिणामस्वभावं तु सूक्ष्मदृष्ट्या विभावय ॥८९॥
भक्षितस्यापि सर्वस्य विड्भावः परिणामके ।
सर्वथा नात्र सन्देहः सर्वैरेव विभावितः ॥९०॥
वदैवं संस्थिते लोके किं प्रियं स्यात् किमप्रियम् ।
इत्युक्तो हेमचूडोऽथ वैरस्यं विषये विदन् ॥९१॥
श्रुत्वाऽपूर्वं वाक्यजालं विस्मितोऽभवदञ्जसा ।
विचार्य भूयस्तत्सर्वं यदुक्तं हेमलेखया ॥९२॥

पित्तकफाभ्याम् आहितं युक्तम् ॥ ८५–८७ ॥ धातूनां त्वगसृगादीनां पृथक्स्थितिम् । विवेकेन विचारदृष्ट्या[1] । विभावय । एवं विभावने क्वं सौन्दर्यादिकमिति भावः ॥ ८८ ॥ एवं शरीरे प्रियत्वं सुखसाधनत्वरूपमपास्य भोज्ये निराकरोति—एवमिति । शरीरादन्यत्र । उपयोज्ये भोज्ये ॥ ८९ ॥ परिणामस्वभावमेवाह—भक्षितेति ॥ ९०–९१ ॥ अपूर्वं कदाप्यश्रुतम् ॥ ९२ ॥ जातो निर्वेदः अलंबुद्धि-

१. दृशा–क० ।

भोगेषु जातनिर्वेदः परं वैराग्यमाप्तवान् ।
अथ क्रमेण पृष्ट्वा तां प्रियां ज्ञात्वा च तत्पदम् ॥९३॥
केवलां चितिमात्मस्थां त्रिपुरामात्मरूपिणीम् ।
बुध्वाऽभवद् विमुक्तात्मा स्वात्मभूताखिलेक्षणः ॥९४॥
जीवन्मुक्तः समभवत् ततस्तस्यानुजोऽपि हि ।
मणिचूडोऽविदद् भ्रातुर्मुक्ताचूडोऽपि पुत्रतः ॥९५॥
मुक्ताचूडप्रिया चापि स्नुषया ज्ञानमासदत् ।
मन्त्रिणश्चापि पौराश्च बभूवुर्ज्ञानशालिनः ॥९६॥
न तत्र नगरे कश्चिदविद्वान् समजायत ।
आसीद् ब्रह्मपुरप्रख्यं शान्तसंसृतिवासनम् ॥९७॥
विशालनगरं तच्च जगत्यत्युत्तमं बभौ ।
यत्र कीराः शारिकाश्च पञ्जरस्थाः पठन्ति वै ॥९८॥
चितिरूपं स्वमात्मानं भजध्वं चेत्यवर्जितम् ।

र्यस्य । परं तीव्रम् । तत्पदम् आत्मपदम् ॥ ९३ ॥ आत्मस्थां सर्वान्तराम् । आत्मरूपिणीम् प्रत्यग्रूपाम् । स्वात्मभूतमखिलेक्षणं यस्य ॥९४-९५॥ मुक्ताचूडप्रिया हेमचूडमाता । स्नुषया हेमलेखया । उपदिष्टमिति शेषः । परस्परोपदेशेन ज्ञानशालिनः ॥ ९६ ॥ ब्रह्मपुरप्रख्यं सत्यलोकतुल्यम् । संसृतेर्वासना कामक्रोधादि ॥ ९७॥ अत्युत्तमत्वे हेतुः—यत्रेति ॥९८॥ यत् पठन्ति तदाह—चितिरूपमिति । हे जनाः ! विषयभजनं त्यक्त्वा स्वमात्मानं भजध्वम् । विषयभजनस्य दुःखमूलत्वादिति तात्पर्यम् । कथंविधमात्मानं तदाह—चितिरूपम् । चितिः प्रज्ञानं तदेव रूपं यस्य । नात्र भजनं बाह्यपूजनादिकम्, किन्तु "तस्य पूजनमहन्तया [1]स्थितिः" [चि० स्त० ५] इति नीत्या सोऽहमस्मीति निष्प्रकम्प[१]-

1. 'मतिः' इति मुद्रितचिद्विलासस्तवपाठः, योगिनीहृदयदीपिकायामुद्धृतेऽस्मिन् श्लोकेऽपि 'मतिः' इत्येव पाठः । द्रष्टव्यम्—पृ. २५०
१. कम्पत्वनि—क० ख० ।

नास्ति चेत्यं चितेरन्यद् दर्पणप्रतिबिम्बवत् ॥९९॥

निश्चयवत्त्वमेव। तच्चास्माकं देहादिसंघातान्तर्भावे[1] नास्त्येवेति चेदाह—चेत्यवर्जितमिति। चेत्यैर्देहाद्यैश्चित्प्रकाश्यैर्वर्जितम्। कुत एवमिति चेदाह—नास्तीति। चेत्यं देहाद्यं शशशृङ्गादिवन्नास्त्येवेति भावः। शशशृङ्गादिवन्नास्ति चेत् कथं प्रकाशत इति चेत्? चितिरेव प्रकाशते नान्यदित्याह—चितेरन्यदिति। चितिरेव चेत् कथं देहाद्यात्मना भानमिति चेदाह—दर्पणप्रतिबिम्बवत्।

अत्रेदमागमतत्त्वम्—चितिरेवात्मतत्त्वम्, इदम्प्रत्ययाविषयत्वात्। अन्यदनात्मरूपम्, इदंप्रत्ययविषयत्वात्। [2]तदात्मतत्त्वं स्मृत्यनुसन्धानानुरोधेनैकमनेकावस्थास्वनुगतम्। तस्य चितिमात्ररूपत्वेन भेदकधर्माप्रसिद्ध्या[3] सुरासुरनृदेहादिष्वप्येकत्वमेव। कालदेशादीनां तदन्तः सर्वात्मना निमग्नानामन्यथा नरशृङ्गकल्पानां न तद्भेदकत्वशङ्कापि युक्ता। एवंविधमनवच्छिन्नचिदेकरसमात्मतत्त्वमेव शास्त्रप्रसिद्धः परमशिवः। तत्स्वातन्त्र्यशक्त्या मायाभिधयाऽघटितघटनाचतुरया स्वस्वरूपगोपनपरया अविद्यात्मकमलावभासनपूर्वकमिदं द्वैतावभासनम्। तच्च भासमानं द्वैतं दृश्यं न बीजादङ्कुरवत् कारणाच्छिन्नादारब्धम्। नापि मृत्पिण्डपरिणामघटवत् कारणपरिणामात्मकम्, अविकृतकारणस्वरूपानुगमात्। नापि रज्जौ सर्प इव विवर्तितम्, चितिचेत्ययोर्द्वित्वग्रहात्। अतो दर्पणस्य नैर्मल्यशक्त्या अविकृते स्वस्मिन् प्रतिबिम्बावभासनवच्चितिः स्वशक्त्या चेत्यावभासनम्। न च बिम्बस्य स्वसमानाकारस्य दर्पणप्रतिबिम्बेऽपेक्षणादत्रापि चिति प्रतिबिम्बदृश्यापेक्षितस्व[4]समानाकारबाह्यदृश्यसिद्धिरिति शङ्क्यम्, यतो दर्पणप्रतिबिम्बे बाह्यं बिम्बं नोपादानम्; कार्येऽननुगमात्, किन्तु निमित्तम्। निमित्तञ्च घटादौ दण्डादिः। तच्च व्यभिचरितम्, कर-

---

१. भावो—क० ख०। २. यत्तदा—क० ख०।

३. प्रसिद्धासुरा—क० घ०। ४. समाकार—ख० ग० घ०।

चितिश्चेत्यं चितिरहं चितिः सर्वं चरांचरम् ।
यतः सर्वं चितिमनु भाति सा तु स्वतन्त्रतः ॥१००॥

परावर्तितचक्रादिना घटोत्पत्तेः। तथा च चिति दृश्यप्रतिबिम्बने मायाख्या स्वातन्त्र्यशक्तिर्निमित्तत्वेनाभ्युपगतैवेति नानुपपत्तिः। नहि प्रतिबिम्बविधां विनाऽन्यथा दृश्यावभासनं युज्यते, दृश्यस्य चिद्बाह्यत्वे प्रकाशानुपपत्तेः, [१]चित्सम्बन्धानुपपत्तेः, सम्बन्धस्यापि दृश्यत्वेनानवस्थादिना तदसिद्धेः[२]। चित्सम्बन्धानपेक्षणे सदा दृश्यस्यावभासोऽनवभासो वा स्यात्। इत्थमेव [1]प्रकटताद्यखिलपक्षप्रतिक्षेपः। एतद्विस्तारः प्रत्यभिज्ञादौ[2] द्रष्टव्यः। [3]तस्मात् प्रतिबिम्बविधयैव दृश्यावभासनमिति ॥ ९९ ॥

बहुविधोऽपि प्रतिबिम्बो दर्पण एवेत्यत आह—चितिरिति। चेत्यं दृश्यम्। चराचरं [४]मत्तोऽन्ये प्रमातारः। सर्वं चितिरित्यत्र हेतुः—यत इति। यथा दर्पणमनुगतं गृहीत्वैव सर्वे प्रतिबिम्बाः प्रकाशन्त इति प्रतिबिम्बा दर्पणात्मकाः, एवं सर्वमिदं चेत्यादि चितिमनुगतां गृहीत्वैव भातीति चितिरेवेति भावः। ननु सा चितिः कामनुगतां गृहीत्वा भातीति चेत्तस्याश्चिदात्मत्वादेव नान्याऽनुगत्यपेक्षेत्याह—सा त्विति। यतः स्वतन्त्रप्रकाशत्वमेव चित्त्वमिति भावः ॥ १०० ॥

यतः प्रतिबिम्बात्म जगच्चितेर्नान्यदस्ति, अतो दर्पणाच्चितेरधिकं सामर्थ्यमाह— सर्वभासिनीमिति। दर्पणः केवलं प्रतिबिम्बाश्रय एव, न भासक इति भावः। भ्रान्तेरुत्सर्जनमप्रामाण्यग्रहः। अत एव चिति-

---

1. ज्ञाततापरपर्यायायाः प्रकटतायाः स्वरूपं कुमारिलभट्टप्रतिपादितं तद्दर्शनप्रतिपादकग्रन्थेषु द्रष्टव्यम्।
2. आदिना अभिनवगुप्तविरचिततन्त्रालोकादीनां ग्रहणं कर्तव्यम्।

१. 'चित्संबन्धानुपपत्तेः' नास्ति—क० ख०। २. सिद्धिः—घ०।
३. तस्मात्तत्—घ०। ४. अतो—ख०।

अतश्चिर्ति जनाः सर्वे भासिनीं सर्वसंश्रयाम् ।
भजध्वं भ्रान्तिमुत्सृज्य चितिमात्रसुदृष्टयः ॥१०१॥
कदाचिदेवं कीराणां श्रुत्वा वाक्यं महोदयम् ।
ब्राह्मणा वामदेवाद्या नामाचख्युः पुरस्य तु ॥१०२॥
यतोऽत्र विद्यां तिर्यञ्चोऽप्याहुस्तस्मादिदं पुरम् ।
प्रसिद्धविद्यानगरमिति नाम्ना प्रसिध्यतु ॥१०३॥
तदद्यापि च तेनैव नाम्ना तन्नगरं स्थितम् ।
राम तस्मात्तु सत्सङ्गो मूलं सर्वशुभोदये ॥१०४॥
सङ्गेन हेमलेखायाः सर्वे विद्याविदोऽभवन् ।
तस्मात् सङ्गः परं मूलं राम जानीहि श्रेयसः ॥१०५॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे हेमचूडोपाख्याने
सत्सङ्गफलं चतुर्थोऽध्यायः ॥

—:*:—

मात्रसुदृष्टय इति । सुदृष्टिः सत्यदृष्टिः । सर्वं ज्ञानं धर्मिण्यभ्रान्तमिति न्यायात् ॥ १०१ ॥ महतो मोक्षस्योदयो यस्मात् ॥ १०२–१०३ ॥ तत् तस्मान्नामकरणाद्धेतोः ॥ १०४ ॥ उपसंहरति—तस्मादिति ॥ १०५ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
चतुर्थोऽध्यायः ॥



# अथ पञ्चमोऽध्यायः

एवं सत्सङ्गमाहात्म्यं श्रुत्वाऽत्रिसुतभाषितम् ।
प्रहृष्टमानसो भूयः प्रष्टुमेवोपचक्रमे ॥१॥
सत्यं प्रोक्तमिदं नाथ भवता शुभकारणम् ।
सत्सङ्गरूपमेतच्च प्रत्यक्षेणैव भावितम् ॥२॥
यो यथा सङ्गमाप्नोति फलं तस्य तथा भवेत् ।
स्त्रियोऽपि हेमलेखायाः सङ्गात् सर्वे महाफलाः ॥३॥
भूय इच्छाम्यहं श्रोतुं हेमचूडस्तया कथम् ।
बोधितस्तन्ममाचद्दव विस्तरेण दयानिधे ॥४॥
एवं रामेणानुयुक्तो दत्तात्रेय उवाच तम् ।
शृणु भार्गव वद्द्यामि कथां परमपावनीम् ॥५॥
एवं तस्या वचः श्रुत्वा विषयान् विरसान् विदन् ।
तेषु सञ्जातनिर्वेदो विमना इव संबभौ ॥६॥
चिरस्थितविषयजवासनानां वशं गतः ।
त्यक्तुं वा संग्रहीतुं वा नाशकत् सहसा हि सः ॥७॥

अत्र रावायपद्यैस्तु हेमलेखाऽऽत्मसंस्थितम् ।
बन्धं मोक्षं चाह गूढवाक्यैः प्रियहितेप्सया ॥

रामः श्रुत्वा ॥ १ ॥ भावितमनुभूतं संवर्तसङ्गात् ॥ २ ॥ सर्वे विशालनगरवासिनः ॥ ३–४ ॥ अनुयुक्तः पृष्टः । संसृतिदोषशामकत्वात् परमपावनीम् ॥ ५ ॥ एवं विषयवैरस्यप्रतिपादकम् । संजातो निर्वेदो विषयभोगेऽलंबुद्धिर्यस्य । एवं सन् । विमना इव खिन्न इव ॥ ६ ॥ वैमनस्ये हेतुमाह—चिरेति । विषयान् त्यक्तुं संग्रहीतुं भोक्तुं वा ॥ ७ ॥ प्रियावचनं श्रुत्वा न किञ्चित् प्रोवाच । अतिलज्जितः, स्त्रिया निरुत्तरी-

प्रियां न किञ्चित् प्रोवाच राजपुत्रोऽतिलज्जितः ।
कांश्चिच्च दिवसानेवमनयच्चिन्तयाकुलः ॥८॥
विषयेषु प्रसक्तेषु स्मृत्वा तत् प्रिययोदितम् ।
विगर्हन्नेव स्वात्मानं बुभुजे वासनावशः ॥९॥
वासनावेगवशतो विषयाननुगच्छति ।
दृष्ट्वैव विषयान् दोषान् प्रियाप्रोक्तान् विचिन्तयन् ॥१०॥
शोकसंविग्नहृदयो विषीदति मुहुर्मुहुः ।
एवं तस्याभवच्चित्तं चलद्दोलास्थितं यथा ॥११॥
भोज्यं वस्त्रं भूषणं वा योषिद् वाहनमेव वा ।
मित्राणि वापि सुहृदो [1]नेषत्तं सुखयन्ति वै ॥१२॥
नष्टाखिलार्थ इव स शोचत्येव निरन्तरम् ।
वासनाविवशः सर्वं त्यक्तुं नाशकदञ्जसा ॥१३॥
नोपभोक्तुं तथा शक्तो दोषदृष्टियुतस्ततः ।

कृतत्वात् । एवं त्यागभोगयोरशक्तः सन् ॥ ८ ॥ कथमुभयत्राशक्तिः, एकतरपक्षस्यावश्यकत्वादिति चेदाह—विषयेष्विति । प्रसक्तेषु उपस्थितेषु । यत् प्रिययोक्तं वैरस्यकारणं तत् स्मृत्वा । धिङ्मामीदृशं विषयं स्वीकरोमीति स्वात्मानं विगर्हन्नेव बुभुजे । ननु कुतो न परिहरति ? तदाह—वासनावश इति ॥ ९ ॥ उपस्थितविषयभोगप्रकारमुक्त्वाऽनुपस्थितविषयेष्वाह—वासनेति । अनुगच्छति विषयसमीपं प्राप्नोति । प्रियाप्रोक्तान् विषयदोषान् ॥१०॥ शोकेन संविग्नं प्रक्षुभितं हृदयं मनो यस्य । विषीदति दुःखं प्राप्नोति । चलद्दोलास्थितं वासनया विषयेषु पतति, विषयप्राप्तौ तद्दोषस्मृत्या तत उच्चलति ॥११॥ एवं वासनादोषदृष्टिभ्यां युतं हेमचूडं भोज्यादीनि [2]नेषदपि सुखयन्तीत्याह—भोज्यमिति ॥१२-१३॥ वासनया दोषदृष्ट्या च युक्त इति त्यक्तुं

---

१. नैतत्तं–क० ख०, नैव तं–ग० । २. 'नैषत्' इति सार्वत्रिकः पाठः ।

एवं तं शोकवशतो विवर्णवदनेक्षणम् ॥१४॥
हेमलेखा समालक्ष्य कदाचित् सङ्गता रहः ।
किं नाथ पूर्ववत्त्वं नो लक्ष्यसेऽत्यन्तहर्षितः ॥१५॥
शोचन्तमिव पश्यामि कुत एवं तव स्थितिः ।
कच्चिच्छारीर आप्मा[1] ते नामयैर्बाध्यते सदा ॥१६॥
भोगेषु रोगभीतिं वै प्रवदन्ति मनीषिणः ।
त्रिदोषसम्भवे देहे दोषवैषम्यसम्भवाः ॥१७॥
आमयाः प्रायशः सर्वदेहान् व्याप्यैव संस्थिताः ।
सर्वथा ह्यप्रतीकार्यं वैषम्यं दोषजं ननु ॥१८॥
अशनाद् वसनाद् वाचो दर्शनात् स्पर्शनादपि ।
कालाद् देशात् कर्मतश्च दोषा वैषम्यमाप्नुयुः ॥१९॥

भोक्तुं वा न शक्तः, परस्परप्रतिबन्धादिति भावः ॥ १४ ॥ रहः विविक्ते । तं परीक्षितुं पृच्छति—किं नाथेति ॥ १५ ॥ शारीरेति । शरीरतादात्म्यापन्न आत्मा । केवलयोः शरीरात्मनोर्दुःखाभावःदिति भावः ॥ १६ ॥ मम महाराजकुमारस्य भिषक्श्रेष्ठैः सेवितस्य कुत आमयसम्भावनेति चेदाह—भोगेष्विति । शुभभोगेष्वित्यर्थः । त्रयाणां वातपित्तकफदोषाणां सम्यग् भवः स्थितिर्यत्र ॥ १७ ॥ विषमाशनादिभिर्दोषवैषम्यस्योक्तभोगवतामावश्यकत्वेन तद्देहेष्ववश्यं रोगव्याप्तिरिति भावः । ननु मादृशां कथं दोषवैषम्यं तत्प्रतीकारपराणामिति चेदाह—सर्वथेति । दोषवैषम्यजनितो रोगः प्रतीकार्यः, न तु केवलं दोषवैषम्यम्; रोगप्रागवस्थास्थकेवलदोषवैषम्यस्य प्रायो दुर्लक्ष्यत्वादिति भावः ॥१८॥ दोषेषु जायमानवैषम्यनिमित्तान्याह—अशनादित्यादि । अशनस्य शीतोष्णादिगुणः प्रसिद्धः । एवं पट्टोर्णादिवसनस्य । वाचो बहुलस्य [2]प्रयुक्तस्योष्णगुणः । वह्निजलादिदर्शनस्पर्शनयोः, ग्रीष्म-

१. च्छरीरमात्मा—क० ख० । २. प्रयुक्तस्य यो गुणः—क० ख० ।

अतस्तस्योद्भवो लोके सर्वथाऽलक्ष्यतां गतः ।
इत्यतः सति वैषम्ये चिकित्सा सम्प्रकीर्तिता ॥२०॥
नोक्ता चिकित्साऽनुत्पत्तौ वैषम्ये केनचित् क्वचित् ।
तद्वद प्रिय कस्माद्धि शोकस्य तव सम्भवः ॥२१॥
इति श्रुत्वा हेमलेखां प्राह राजसुतस्ततः ।
प्रिये शृणु प्रवक्ष्यामि यन्मे शोकस्य कारणम् ॥२२॥
त्वदुक्त्या यत् पुरा मेऽभूत् सुखदं तद्धतं ननु ।
न पश्याम्यधुना किञ्चिदपि मे सुखवर्द्धनम् ॥२३॥
राज्ञा वितीर्णो विषयः सुखदोऽपि समन्ततः ।
वध्यं न सुखयेद् यद्वत्तथा तस्मान्न मे सुखम् ॥२४॥
विषयान् सेवमानोऽहं सदा विष्टिगृहीतवत् ।
तत् पृच्छामि प्रिये ब्रूहि किं कृत्वा सुखमेम्यहम् ॥२५॥

हेमन्तादिकालस्य जाङ्गला[1]नूपादिदेशस्य च शीतोष्णादि प्रसिद्धम् । [2]कर्मतोऽपि खननादितश्च यद्वा पापकर्मतो[2] दोषवैषम्यम् ॥ १९ ॥ अतो दोषवैषम्यहेतोरनेकत्वात् । तस्य वैषम्यस्य । ननु सूक्ष्मदृग्भिर्वैषम्योद्भवो ज्ञातुं शक्य इति चेन्नेत्याह—इत्यत इति । यतो वैषम्योद्भव आदावलक्ष्यः, अतो हेतोः, चिकित्सा शास्त्रे संप्रकीर्तिता ॥२०॥ वैषम्यविषयानुत्पत्तौ चिकित्सा नोक्ता ॥ २१ ॥ ततः प्रश्नानन्तरम् ॥ २२ ॥ तत् सम्प्रति त्वदुक्त्या हतम् । कुत इति चेदाह—नेति ॥ २३ ॥ नष्टं चेदन्यत् सुखसाधनं सम्पादयेति चेदाह—राज्ञेति । न तत् स्वरूपतो नष्टम् । अपि तु वध्याय राज्ञा दत्तविषयाद्यथा तस्य सुखं न, एवं साधनं सदपि न तस्मान्मे सुखम् ॥ २४ ॥ ननु विषयैर्न ते सुखं चेत्तान् परित्यजेति चेन्मया न परित्यक्तुं शक्यत इत्याह—विषयानिति । विष्टिगृहीतवत् । राजकार्यार्थं राजभटैर्गृहीता जनास्तत्कार्यं त्यक्तु-

१. लारूपा-क० ख० । २. कर्मणो-ख० ग० घ० ।

एवं तेन समापृष्टा हेमलेखा तदाऽब्रवीत् ।
नूनमेष सुनिर्वेदमागतो मद्वचःश्रुतेः ॥२६॥
अस्ति बीजं श्रेयसोऽस्मिन् यत एवंविधो भवान् ।
येषु श्रेयो ह्यसम्भाव्यं त एवं वाक्यगुम्फनैः ॥२७॥
न ह्यण्वपि विशेषेण विशिष्यन्ते कदाचन ।
चिरं संराधिता हृत्स्था प्रसन्ना स्वात्मदेवता ॥२८॥
त्रिपुरा येन [१]तस्यैव भवेदेवंविधा स्थितिः ।
इत्यालोच्यातिविदुषी बुबोधयिषती प्रियम् ॥२९॥
गोपयन्ती स्ववैदुष्यं प्राहान्यव्यपदेशतः ।
शृणु राजकुमारेदं यन्मे वृत्तं पुरातनम् ॥३०॥

मसमर्थाः कुर्वन्ति यथा, एवं वासनाभिर्गृहीतोऽहं सदा विषयान् सेवमानो दुःखं [1]प्राप्त इति शेषः ॥ २५ ॥ स्वमनस्यब्रवीत् । श्रुतेः श्रवणात् ॥ २६ ॥ एवंविधः प्राप्तविषयवैरस्यः । एवं मदुक्तसदृशैर्वाचां गुम्फनैर्निबिडसमुदायैः ॥ २७ ॥ अण्वपि स्वल्पमपि, पूर्वस्थितिं लेशतोऽपि न परित्यजन्तीति भावः । एवं वचःश्रुतिरेव वैरस्ये कारणं चेत् कुतो न सर्वेषां वैरस्योत्पत्तिरिति चेन्मूलकारणाभावादित्याह—चिरमिति ॥ २८ ॥ एवंविधा विषयवैरस्यवती । देवताराधनरूपमूलकारणाभावान्न सर्वेषामियं स्थितिरिति भावः ॥ २९ ॥ गोपयन्तीति । स्ववैदुष्यप्रकटने विद्वत्ताभिमानशङ्काऽस्यस्य भवेत्ततो मद्वाक्ये नाश्वासो भवेदिति । अतः स्ववैदुष्यगोपनमिति भावः । अन्नान्यव्यपदेशेन स्वस्याः संसारबन्धनान्मुक्तिप्रकारमाह—शृण्विति । पुरातनं बन्धस्या[2]नादिकालत्वात् ॥ ३० ॥ पुरेति । कस्याश्चित् सृष्टेरादिकाले बन्धस्यानादित्वेन सर्वादिकालासम्भवात् । जननी स्वप्रकाशशुद्धचितिः ।

1. प्राप्तवानित्यर्थे कर्तरि क्तः ।
2. अनादिः कालो यस्येति बहुव्रीहिगर्भितं वाक्यम् । बन्धस्यानादिकालित्वादित्यर्थः ।
१. तेष्वेव—क० ख० ।

पुरा मे जननी काञ्चित् क्रीडनाय सखीं ददौ ।
सा स्वभावसती काञ्चिदसतीमनुसङ्गता ॥३१॥
सा विचित्रविधाश्चर्यसृष्टिसामर्थ्यसंयुता ।
अलक्षिता मे जनन्या सख्या मे सङ्गताऽभवत् ॥३२॥

सखीं बुद्धिम् । काञ्चिदिति । अज्ञातकुलगोत्रेव निरूपणाल्लिङ्गदेहावयवत्वेनानादित्वं बुद्धेर्द्योतितम् । शुद्धचितेर्जननीत्वं स्वस्या जीवचितेस्तदंशभूतत्वात् । सुखदुःखाद्यनुभवक्रीडाया बुद्ध्यधीनत्वात् क्रीडनाय सखीं ददावित्युक्तम् । प्रलये बुद्धेर्लीनत्वात् सृष्ट्यादौ कर्मपरिपाकनिमित्तकबुद्ध्याविर्भावादपूर्ववत्[1] प्राप्तत्वादुक्तं ददाविति । सा बुद्धिः । सत्त्वगुणप्रधानत्वात् प्रकाशरूपत्वात् स्वभावेन सती । स्वसत्तायां वृत्त्यन्तरानपेक्षणात् स्वतः सती । बाह्यपक्षे स्वभावतः सती साध्वीत्यर्थः । असतीमविद्याम् । अनुसङ्गता । आत्माकारतां केवलां परित्यज्याविद्याकार्यदृश्यात्मतां प्राप्तेत्यर्थः । काञ्चिदिति तस्या अनिर्वचनीयताद्योतकं विशेषणम् । आगमपक्षे तु चितेः परिच्छिन्नत्वज्ञानमेवाज्ञानम् । एतच्च [2]"अज्ञानं बन्धः" [१।२] इति शिवसूत्रे वृत्तिकृता स्पष्टं निरूपितम् । एतत्पक्षेऽनिर्वचनीयत्वाभावेन काञ्चिदित्यज्ञानस्यापरिच्छेद्यशक्तित्वं ज्ञेयम् । तदुक्तम्— [1]"भ्रान्तेर्महती शक्तिर्न विवेक्तुं शक्यते नाम" [ प० सा० २८ ] इति । पक्षद्वयेऽप्यसतीत्यसत्यात्मकत्वाज्ज्ञेयम् ॥ ३१ ॥ सा अविद्या । मे जनन्या शुद्धचिता अलक्षिता सती मे सख्या बुद्ध्या । मन्मातुः परोक्ष एव सा असती मत्सख्या सङ्गताऽभवदित्यर्थः । विद्याविद्ययोर्विरोधादविद्या कार्यविषया, बुद्धिः केवलशुद्धचिद्विषयिणीति तात्पर्यम् । आगमपक्षे तु शुद्धचिन्मात्रस्फूर्तिदशा शक्तितत्त्वम् । चिदचिदोरिदं सर्वमहमिति सामानाधिकरण्य-

---

1. "रज्ज्वां नास्ति भुजङ्गस्त्रासं कुरुते च मृत्युपर्यन्तम् ।" इत्ययं श्लोकस्य पूर्वार्द्धः ।

१. पूर्वेव-ग० घ० । २. ज्ञानं-ग० घ० ।

असच्चारित्रयाऽत्यन्तं सङ्गता मम सा सखी ।
प्राणेभ्योऽपि प्रियतमा सदा तद्वशगा ह्यहम् ॥३३॥
न तां विहाय मे संस्था क्षणार्द्धं वा क्वचिद्भवेत् ।
सा निर्मलस्वभावेन मां वशीकृत्य संस्थिता ॥३४॥
निरन्तरं तद्गतात्मस्वभावाऽभवमञ्जसा ।
सा तया दुष्टया युक्ता नट्या चित्रस्वभावया ॥३५॥

स्फूर्तिदशा शुद्धविद्यातत्त्वम्। परिच्छिन्नचिन्मात्रस्फूर्तिदशा अविद्यातत्त्वम् । परिच्छिन्नचितश्चेत्यस्य च स्फूर्तिदशा बुद्धितत्त्वमिति प्रक्रिया। तथा च बुद्धेः शुद्धचिदविषयकत्वादलक्षितेति ज्ञेयम् ॥ ३२ ॥ बुद्धिर्दृश्यपरा सदाऽभवदित्याह—असदिति । असद् मिथ्यारूपं [१]चारित्रं यस्याः सा अविद्या । मम प्राणेभ्योऽपि प्रियतमा । अतस्तद्वशगाऽहमभवम्, परस्परतादात्म्याध्यासात् ॥ ३३ ॥ न तामिति । तां बुद्धिम्। संस्था स्थितिः । बुद्ध्यसत्त्वे [1]बुद्ध्यवच्छिन्नो जीवो बुद्धिप्रतिबिम्बो जीव इत्युभयपक्षेऽपि जीवस्य स्थितिर्न भवेदिति स्पष्टमेव। आगमपक्षे तु व्याधकुलसंवर्द्धितराजकुमारवत् स्वस्वातन्त्र्यसमाच्छादितमाहैश्वर्यो महेश्वर एव जीवः। तस्य बुद्धिं विना संस्था सम्यक्स्थितिः भेदव्यवहारो न भवेदिति तात्पर्यम्। सा बुद्धिः। निर्मलस्वभावेन सत्त्वप्रधानरूपेण युता। मां जीवाख्यां परिच्छिन्नां प्रतिबिम्बभूतां वा तादात्म्यापन्नां वा। बाह्यपक्षे तु मां शुद्धकुलप्रसूतिम्। सा निर्मलस्वभावेन तुल्यशीलत्वाद्वशीकृत्य संस्थितेति युक्तमेवेति भावः ॥ ३४ ॥ तद्गतात्मस्वभावा बुद्धिसम्मिलितस्वरूपा। बाह्यपक्षे तु तद्गत-

---

1. 'बुद्ध्यवच्छिन्नो जीवः' इति वाचस्पतिमिश्रस्य भामतीप्रस्थानमाश्रित्य, 'बुद्धिप्रतिबिम्बो जीवः' इति च स्वयंप्रकाशयतिनो विवरणप्रस्थानमाश्रित्योक्तम्। अस्य विस्तरः सिद्धान्तलेशसंग्रहेऽप्पयदीक्षितविरचिते द्रष्टव्यः।

१. चरित्रं–क० ।

परोक्षवृत्तिमानीता स्वपुत्रेणाभियोजिता ।
तस्याः पुत्रोऽतिमूढात्मा मदिराघूर्णितेक्षणः ॥३६॥
बुभुजे तां समाक्रम्य सर्वदा मत्समक्षतः ।
सा तेनाक्रान्तसर्वाङ्गी भुज्यमानानुवासरम् ॥३७॥
न मां जहौ कदाचिच्च तत्स्पृष्टा तेन चाप्यहम् ।
ततः पुत्रः समुत्पन्नो मूढस्य सदृशाकृतिः ॥३८॥

चित्तेत्यर्थः । सा मत्सखी बुद्धिः । तया अविद्यया । दुष्टयेति । स्वनाश-हेतुत्वात् । चित्रम् आश्चर्यमयमघटमानं[1] स्वभावः स्वरूपं यस्याः । स्वलीलाप्रदर्शनेनार्थहरत्वान्नटयेति ॥३५॥ परोक्षवृत्तिं स्वर्गादिपरोक्ष-काम्यैकरूपताम् । आनीता प्रापिता । तया असत्या । मत्सखी बुद्धिः । अविद्यया स्वर्गादिकाम्यतत्परा बुद्धिरासीदिति भावः। बाह्यपक्षे असत्या परोक्षवृत्तिं रहसि स्थितिम् आनीता स्वपुत्रेणाभियोजिता मत्सखी जातेति। स्वस्या अविद्यायाः पुत्रो मोहः, तेनाभियोजिता। अविद्यया काम्य-तत्परतायां सद्विचारप्रतिबन्धकमोहात्मकवृत्तिविशेषं प्राप्ता बुद्धिरिति भावः । तस्या अविद्याया [2]मौढ्ये हेतुः—मदिरेत्यादि ।। एतद्विशेषणं मोहिता मे बुद्धिः पापाचाराऽभवदिति द्योतनाय ॥ ३६ ॥ तां मत्सखीं बुद्धिम् । पापाचरणेन मोहप्रचुरा बुद्धिर्जातेत्याह—समाक्रम्येति । मत्समक्षत इति । बुद्धेश्चित्प्रकाशाधीनप्रकाशत्वादिति तात्पर्यम् । सा बुद्धिः । तेन मोहेन ॥ ३७ ॥ सा सखी मां कदाचिदपि प्रियसङ्गम-कालेऽपि न जहौ । चित्प्रकाशाश्रयेणैव बुद्धिवृत्तीनामवभासनादिति तात्पर्यम् । यस्मान्मां न जहौ तत् तस्माद्धेतोः । तेन सखीप्रियेण मूढात्मना । स्पृष्टा जाता । घटावच्छिन्नाकाशस्यायःपिण्डतादात्म्या-पन्नवह्नेर्वा वर्तुलाद्याकार इव बुद्ध्या परिच्छिन्नाया वा तादात्म्या-पन्नायां वा चितेर्मोहादिरूपतेति भावः । ततः चिरसङ्गानन्तरम् ।

---

१. मघटितज्ञानं—क० ख० । २. मौर्ख्यं—ख० ।

तरुणः सोऽभवत्तूर्णमतिचञ्चलसंस्थितिः ।
पितुर्मौढ्येन संयुक्तः पितामह्या गुणेन च ॥३९॥
अनेकचित्रनिर्माणसामर्थ्येन समावृतः ।
पितामह्या शून्यनाम्न्या पित्रा मूढाभिधेन च ॥४०॥
अस्थिराह्वः शिक्षितोऽभूत् स्वयं चातिविशारदः ।
गतिमप्रतिबद्धां वै शीघ्राच्छीघ्रां समासदत् ॥४१॥
एवं मम सखी स्वच्छस्वभावा जन्मतः सती ।
असतीसङ्गतोऽत्यन्तं मालिन्यं समुपागता ॥४२॥

मूढस्य मोहस्य स्वसदृशाकारो मनोरूपः पुत्रो जातः। यद्यपि मनः पूर्वमेवास्ति, तथापि वीर्यात्मना पितृदेहे स्थितपुत्र इव प्राक् सूक्ष्मरूपं मनः। बुद्धौ मोहसम्बन्धानन्तरमेव विकल्पाद्याधिक्यात् पितुः प्रसूतः पुत्र इव मनः पुष्टमासीदिति तात्पर्यम्। अलस्वरूपत्वेन सदृशाकृतिर्ज्ञेया॥ ३८ ॥ तरुणो व्यवहारक्षमः। पितुर्मोहस्य मौढ्येन जडत्वगुणेन। पितामह्या अविद्याया अनेकनिर्माणे उपादानं स्वातिरिक्तमनपेक्ष्य यत् सामर्थ्यं तेन गुणेन च समावृतः॥ ३९॥ एतेषां नामकथनपूर्वकं मनसो गुणानाह—पितामह्या इति। मनसः पितामही अविद्या। विचारे कृते तत्स्वरूपविलयाच्छून्यनाम्नी सा। पिता मोहः। मूढताप्रयोजक इति मूढाभिधः सः। आभ्यामस्थिराह्वः शिक्षितोऽभूदिति सम्बन्धः॥ ४०॥ पितृशिक्षया मूढतां प्राप्तः पितामहीशिक्षया विचित्रनिर्माणसामर्थ्यं प्राप्तः। स्वयमतिचतुरोऽप्रतिबद्धां गतिं प्राप्तवान्। शीघ्राच्छीघ्राम्, अतिशीघ्रामित्यर्थः। एवं बुद्धेर्मोहवशान्मनः प्ररूढं सदतिचञ्चलत्वात् क्वचिदस्थिरम् अनन्तविचित्रकल्पनापरं मूढत्वाद्विचारविमुखं चासीदिति [1]विशिष्टग्रन्थतात्पर्यम्॥४१॥ एवमुक्तप्रकारेण। मम सखी बुद्धिः। असतीसङ्गतः अविद्यासङ्गेन। अत्यन्त-

१. शिष्ट—क०, वशिष्ट—ग०।

सख्या प्रियेण पुत्रेणासत्स्वभावयुतेन सा ।
चिरसङ्गात्तेषु दृढानुरागेण समायुता ॥४३॥
जहौ मय्यनुरागं तु सर्वथा क्रमतः सखी ।
अहं स्वभावसरला हातुं तत्सङ्गमञ्जसा ॥४४॥
अनीशा तत्परैवासं सर्वथा तामनुव्रता ।
अथ तस्याः प्रियो मूढो भुञ्जानस्तां तु सर्वदा ॥४५॥
प्रसह्य मां समाक्रान्तुमुद्युक्तः सर्वथाऽभवत् ।
नाहं स्वभावसंशुद्धा वस्तुतस्तद्वशं गता ॥४६॥

मालिन्यं स्वस्वभावावरकं तामसं मोहं समुपागता। सख्या अविद्यया। असत्स्वभावेन प्रियेण मोहेन पुत्रेण मनसा च। दृढसङ्गात् सदा तद्रूपेण परिणतत्वात्। बुद्धिः स्वीयं सत्स्वरूपं परित्यज्य मोहात्मना मनःकल्पितवस्तुसौन्दर्यादिव्यवसायात्मना च सदा स्थितेति भावः ॥ ४३ ॥ जहाविति। कालक्रमतो मूढादिषु दृढानुरागान्मय्यनुरागं प्रीतिं जहौ। परिच्छिन्नचितिरूपकर्तृभोक्त्रात्मकजीवस्वरूपविचारोऽपि बुद्धेर्नासीदिति तात्पर्यम्। नन्वेवं सति त्वयापि [1]तदनुरागस्त्यक्तः स्यादिति चेन्नेत्याह—अहमिति। स्वभावतः सरला। निसर्गऋजुचित्तेत्यर्थः। कुटिलानां हि सनिमित्ता प्रीतिः। सरलानामन्यप्रीत्याद्यनिमित्तैव प्रीतिरिति तात्पर्यम् ॥ ४४ ॥ मत्प्रीतेरनिमित्तत्वात् प्रीतिं त्यक्तुमनीशा, अत एव तत्परा सती सर्वथा तामनुव्रता। तत्समानशीलाऽभवमित्यर्थः। मम चिन्मात्ररूपत्वात् प्रतिबिम्बभूतैर्बुद्धिधर्मैर्योगाद् बुद्ध्यनुकृतिं प्राप्तेति भावः। अथ एवं बुद्ध्यनुकारप्राप्त्यनन्तरम् ॥ ४५ ॥ मत्प्रियामनुगतेयमिति मत्वा मामपि हठेन भोगायाक्रान्तुं स मूढ उद्युक्तोऽभवत्। एवं जातेऽपि स्वभावशुद्धा अहं न तद्वशं गता। बुद्धेर्विषयवासनानिबिडत्वेऽपि न जीवतादात्म्यमप-

---

१. तदानु—क० ख० ।

तथापि लोके मेऽत्यन्तं परीवादो महानभूत् ।
मूढेन सर्वथेयं च भुज्यते इति सर्वतः ॥४७॥
अस्थिराख्यं स्वपुत्रं सा मयि न्यस्य सखी मम ।
प्रियेण संपरिष्वक्ता सर्वथा तत्पराऽभवत् ॥४८॥
अथास्थिरो मया सम्यग् लालितः पोषितस्ततः ।
प्रौढस्त्रियं पितामह्या अनुमत्योपसङ्गतः ॥४९॥
सा प्रिया तस्य चपलाभिधाना हि प्रतिक्षणम् ।
प्रियस्य सम्मतं रूपं भिन्नं भिन्नं मनोहरम् ॥५०॥
गृह्णात्याश्चर्यजननं प्रियमेवं स्वके वशे ।
चक्रे साऽत्यन्तनिपुणा स्वनैपुण्यवशात् खलु ॥५१॥

गच्छति । एवं बुद्धितादात्म्यापन्नचितेर्बुद्धिवृत्तिरूपमोहसम्पर्काभासेऽपि दर्पणस्य [1]प्रतिबिम्बेनेव न वस्तुतो मोहसम्पर्क इति भावः ॥ ४६ ॥ परीवादोऽपवादः । परीवादस्वरूपमेवाह—मूढेनेति । सर्वतः सर्वत्र । अविवेकिनो बुद्धिधर्मानात्मन्यारोपयन्तीति तात्पर्यम् ॥ ४७ ॥ सा बुद्धिः सखी । तत्परा मूढपरा । मनःकल्पितमपि [2]निश्चेतुमसमर्था बुद्धिर्मोहैकरूपाऽभवदिति भावः ॥ ४८ ॥ अथ मयि पुत्रन्यासानन्तरम् । पितामह्या मूढमातुः, अविद्याया इति यावत् । स्त्रियं कल्पनाम् । बुद्धेरतिमोहात्मताप्राप्त्यनन्तरं चित्तादात्म्यापन्नं मनः कल्पनायां समर्थं सत् कल्पनैकपरमभवदित्याशयः । कल्पनेऽविद्यानुकूलेति तदनुमतिर्ज्ञेया ॥ ४९ ॥ कल्पनायाश्चपलेति नाम । प्रियस्य मनसः ॥ ५० ॥ स्वनैपुण्यवशाद्वशे चक्रे । मनो विचित्रकल्पनापरं प्रतिक्षणमभवदित्याशयः

१. दर्पणप्रतिबिम्बन्यायेन—क० ख० । अस्मिन् पाठे पूर्वतनं 'दर्पणस्य' इति पदमनावश्यकम् ।

२. निश्चेष्टु—क० ।

अस्थिरोऽपि क्षणेनैव त्वसंख्यशतयोजनम् ।
प्रयात्यायाति च सदा न श्रान्तिमुपगच्छति ॥५२॥
समीहते यत्र गन्तुमस्थिरश्च यदा यदा ।
तस्येष्टं च स्वरूपं तु कृत्वा सा चपलापि हि ॥५३॥
तत्र तत्र स्थिता भूत्वा रमयत्येव स्वं प्रियम् ।
एवं सा चपला सम्यगस्थिरेण युता सती ॥५४॥
सुषुवे पञ्चतनयान् मातापितृपरायणान् ।
ते समर्थाः पञ्चविधा मयि सख्या निवेशिताः ॥५५॥
अहं सख्यनुरक्ता तानकुर्वं बलवत्तरान् ।
अथ ते पञ्चतनयाश्चपलायाः पृथक् पृथक् ॥५६॥
चक्रुरायतनं श्रेष्ठं विचित्रमतिविस्तृतम् ।
पितरं स्ववशे चक्रुर्मात्रा सम्यग् विभाविताः ॥५७॥

॥ ५१ ॥ अस्थिरो मनः ॥ ५२ ॥ समीहत इति । यत्र यत्र मनो गच्छति तत्र तत्र विचित्रानेककल्पनां करोत्येवेति भावः ॥ ५३ ॥ रमयत्येवेति । स्वयमेव मनोराज्यादिकमन्तःसङ्कल्प्य तत्प्रयुक्तसुखाभासं प्राप्नोतीति भावः । युता सती तनयान् सुषुवे इति योजना ॥ ५४ ॥ सुषुव इति । तनयान् ज्ञानेन्द्रियाणि । मनसो निर्विकल्पत्वे इन्द्रियवृत्त्यनुदयाद् मनसा विकल्पनायामिन्द्रियप्रसृतिः[1] । इन्द्रियप्रसरस्य मनःकल्पनोपयुक्तत्वान्मातापितृपरायणानिति ज्ञेयम् । सख्या मयि निवेशिता इति चित्तादात्म्यापत्तिरुक्ता ॥ ५५ ॥ तान् पुत्रान् बलवत्तरान् । चित्तादात्म्यप्रकर्षेण स्वतन्त्रप्रकाशतुल्यानिति भावः ॥ ५६ ॥ विचित्रं [2]विविधगन्धाद्युपलब्धिस्थानम् । अतिविस्तृतम् असंख्यविषयग्रहणेऽपि तदुदरापूर्तेः । सर्वव्यवहारस्य तदधीनत्वात् श्रेष्ठम् आयतनं चक्रुरिति । तत्तद्गोलकाधिष्ठिता बभूवुरित्याशयः ।

---

१. प्रसूतिः—ख० ग० घ० । २. विविधं—क० ।

आनयन्ति स्वायतनं पितरं तं क्षणे क्षणे ।
तत्रास्थिरो ज्येष्ठसुतायतनं विनिविश्य तु ॥५८॥
अशृणोद्विविधान् शब्दान् सुस्वरानितरानपि ।
क्वचिन्मधुरसङ्गीतं क्वचिद्वाद्यं [1]सुमञ्जुलम् ॥५९॥
ऋचो यजूंषि सामानि मन्त्रानाथर्वणानपि ।
शास्त्रागमेतिहासांश्च भूषणानां च सिञ्जितम् ॥६०॥
भृङ्गसङ्घस्य गीतं च पिकपञ्चमसुस्वरम् ।
एवं मनोहरान् शब्दान् शृण्वन् पुत्रनिदेशतः ॥६१॥
प्रीतः पुत्रवशं प्रागादथ पुत्रोऽन्यथाऽदिशत् ।
विरुद्धान् कर्णकटुकानशृणोद् भैरवान् रवान् ॥६२॥
सिंहादिगर्जितं मेघनिर्घोषमशनेस्तथा ।
ब्रह्माण्डभेदनं गर्भस्रावणं सुभयङ्करम् ॥६३॥
एवं[2] श्रुत्वा सुचकितश्चात्यत्राप्यशृणोत्तथा ।
रुदितं विप्रलपितं शोचितादिविचित्रितम् ॥६४॥
द्वितीयसुतनीतोऽथास्थिरस्तद्भुवनं ययौ ।
तत्रापश्यद् मृदुस्पर्शान्यासनानि शुभानि च ॥६५॥

मात्रा कल्पनया विभाविताः पोषिताः । विकल्पपरं मनः सदेन्द्रियद्वारेण बहिर्मुखमभवदिति तात्पर्यम् ॥ ५७ ॥ पितुर्वशीकरणमेव विविच्य दर्शयति—आनयन्तीति । ज्येष्ठसुतः श्रोत्रेन्द्रियम् ॥ ५८ ॥ इतरान् विस्वरान् । एतदेवाह—क्वचिदिति ॥ ५९–६० ॥ मनः श्रोत्रेन्द्रियमाविश्य श्रोत्रद्वारा तत्तच्छब्दाकारेण परिणतमिति भावः ॥ ६१ ॥ पुत्रवशं श्रोत्रे दृढनिवेशम् । अन्यथाऽदिशदिति । मनसो बाह्यविषयग्रहणस्येन्द्रियाधीनत्वादिन्द्रियादेशेनाऽशृणोरिति ॥ ६२ ॥ अशनिनिर्घोषविशेषणं ब्रह्माण्डेत्यादि ॥ ६३–६४ ॥ द्वितीयसुतस्त्वगिन्द्रियम् ॥ ६५–

१. सुमङ्गलम्—क० ग० घ० ।
२. अत्र श्लोके पूर्वार्द्धोत्तरार्द्धयोर्विपर्यस्तः पाठः—क० ।

शयनानि च वासांसि कठिनस्पर्शकान्यपि ।
शीतस्पर्शानि वस्तूनि तथोष्णस्पर्शकानि च ॥६६॥
अनुष्णाशीतस्पर्शानि विचित्राण्यभिवीक्ष्य तु ।
हितान् दृष्ट्वा प्रमुदितो विषण्णस्त्वहितानपि ॥६७॥
अथ तृतीयतनयभवनं प्राप्य सोऽस्थिरः ।
अपश्यद्रुचिराकारान् भावान् विविधवर्णकान् ॥६८॥
रक्तान् श्वेतान् पीतनीलान् हरितान् पाटलानपि ।
धूम्रान् कडारान् कपिशान् मेचकान् कर्बुरांस्तथा ॥६९॥
स्थूलान् कृशानणून् दीर्घानायतान् वर्तुलांस्तथा ।
अर्द्धवृत्तान् दीर्घवृत्तान् सुन्दरांश्च विभीषणान् ॥७०॥
बीभत्सान् भास्वरान् रौद्राननालोकांश्च दृङ्मुषः ।
क्वचिद्धितं ततोऽन्यच्च पश्यन्तं पितरं पुनः ॥७१॥
अनयत्तुर्यतनयो भवनं स्वं विचित्रितम् ।
तत्राससाद पुष्पाणि [1]फलान्यन्नानि च क्रमात् ॥७२॥
पेयानि लेह्यचोष्याणि भक्ष्याणि रसवन्ति वै ।
सुधास्वादूनि मधुराण्यन्यान्यम्लरसानि च ॥७३॥
कटुकानि च तिक्तानि कषायाण्यपि कानिचित् ।
क्षाराणि मधुराम्लानि कट्वम्ललवणानि च ॥७४॥
कटुतिक्तानि चित्रात्मरसानि विविधान्यपि ।

६७ ॥ तृतीयश्चक्षुः ॥ ६८–६९ ॥ नेत्रस्य रूपान्यपरिमाणादिविषयत्वादाह—स्थूलानित्यादि ॥ ७० ॥ अनालोकानन्धकारान् । कीदृशान् ? दृङ्मुषः ॥ ७१ ॥ तुर्यो रासनं रसानुमितं पुष्पादि ज्ञेयम् ॥ ७२–७३ ॥ मधुराम्लानीत्यादि मिश्ररसः ॥ ७४ ॥ अन्तिमो घ्राणम् ॥ ७५–७६ ॥

---

१. फलान्यन्या—क० ख० ।

आस्वादयन्नात्मजेन समेतोऽथान्तिमः सुतः ॥७५॥
निनाय पितरं स्थाने स्वीयेऽत्यन्तविचित्रिते ।
तत्रोपालभतानेकपुष्पाणि च फलानि च ॥७६॥
[1]तृणान्यन्नान्योषधीश्च भावानन्यांश्च सर्वतः ।
सुगन्धान् पूतिगन्धांश्च मृदुगन्धोग्रगन्धकान् ॥७७॥
मोहगन्धान् ज्ञानगन्धान् मूर्छागन्धान् विचित्रितान् ।
पुत्राणां भवने चैवं प्रविशन् निविशन्नपि ॥७८॥
हितेषु रमते क्वापि विषीदत्यहिते क्वचित् ।
सदा गमागमपरः पुत्राणां भवने बभौ ॥७९॥
ते पुत्राः पितृवात्सल्यात् पितृहीना न च क्वचित् ।
स्पृशन्ति विषयांश्चित्रान् स्वल्पं वापि कदाचन ॥८०॥
अस्थिरस्तु पुत्रगृहे भुक्त्वा तान् विषयान् बहून् ।
मुषित्वान्यांश्च विषयान् गुप्त्या नयति स्वं पदम् ॥८१॥
पत्न्या चपलया साकं रहः पुत्रैर्विना स्वयम् ।
भुनक्त्यतितरां नित्यमथान्या चपला स्वसा ॥८२॥

भावान् अर्थान् । तानेवाह—सुगन्धानित्यादि ॥ ७७ ॥ मोहजनको मोहगन्धः । एवमग्रेऽपि ॥ ७८–७९ ॥ ते पुत्रा इति । मनो विहाय स्वातन्त्र्येणेन्द्रियाणां विषयग्रहणासामर्थ्यमिति भावः ॥ ८० ॥ मन इन्द्रियाभिनिविष्टं बाह्यविषयमासाद्य तत्कृतसुखादिकं तत्काल एवानुभवति । कांश्चिच्च विषयान् संस्कारद्वारेणान्तर्गुप्त्याऽप्रकटरूपेण गृहीत्वा स्वपदे हृदि स्थित्वा तं विषयं स्मृत्यादिना विकल्प्य तत्सुखमनुभवतीत्याह—अस्थिर इति ॥ ८१ ॥ रहः स्वप्नादौ । अन्या आशा ॥ ८२॥ तम् अस्थिरम् । [2]नित्यं विषयभोगेनाशा प्रवृद्धेति भावः

१. तृणान्यन्या—क० । २. नित्य—क० ।

महासना पतिं वव्रे मनःकान्तं तमस्थिरम् ।
तस्यामतितरां सक्तो यदाऽभूदस्थिरोऽपि वै ॥८३॥
तदा तस्याः प्रीतये स भोगाहरणतत्परः ।
तेनानीतं बह्वपि च भक्षित्वा क्षणमात्रतः ॥८४॥
पुनर्बुभुक्षयाक्रान्ता भोगाहरणहेतवे ।
सदा प्रियं सन्दिशति सोऽप्याहर्तुं सदेक्षते ॥८५॥
पुत्रैः पञ्चभिरानीतं प्रियेणापि सुसंभृतम् ।
भुक्त्वा क्षणेन भूयोऽपि सा बुभुक्षाप्रपीडिता ॥८६॥
भोगाहृतौ सन्दिशति प्रियं पुत्रांश्च सर्वदा ।
ततः सा स्वल्पकालेन सुषुवे पुत्रयोर्युगम् ॥८७॥
ज्वालामुखस्तयोर्ज्येष्ठो निन्द्यवृत्तस्तथापरः ।
सदा मातुः प्रियतमौ तौ पुत्रौ संबभूवतुः ॥८८॥
महाशनायामासक्तः संश्लिष्यति यदाऽस्थिरः ।
तदा ज्वालामुखज्वालालीढसर्वंकलेवरः ॥८९॥
अस्थिरः पीडितोऽत्यन्तं गाढमूर्च्छामुपैति हि ।
कदाचिन्निन्द्यवृत्तेन सङ्गतः प्रियसूनुना ॥९०॥
सर्वैर्विनिन्द्यतामेति मृततुल्यो हि जायते ।

॥ ८३ ॥ तस्यां महाशनायामत्यन्तासक्तिहेतुना तस्याः प्रीतये सदा भोगाहरणतत्परोऽभवत् ॥ ८४ ॥ दुष्पूराशाश्लिष्टं मनः सर्वदा विषयसाधनपरमभवदिति तात्पर्यम् ॥ ८५ ॥ सपत्न्याः पुत्रैरिन्द्रियैः ॥ ८६ ॥ भोगानाम् आहृतौ आहरणविषये ॥ ८७ ॥ तयोः पुत्रयोर्मध्ये ज्येष्ठो ज्वालामुखः क्रोधः । परो निन्द्यवृत्तो लोभः । मातुराशायाः । आशाधिक्यात् क्रोधलोभयोः प्रावल्यमभवदित्याशयः ॥ ८८ ॥ यदा यदा आशापरवशस्तदा तदा क्रोधलोभकृतं महादुःखं प्राप्नोतीति तात्पर्यम् ॥ ८९–९० ॥ लोभेन निन्द्यता ततो मृततुल्यता च स्पष्टा

एवं यदाऽस्थिरो जातो दुःखभोगैकतत्परः ॥९१॥
तदा सखी मे स्वभावसती पुत्रेऽस्थिराह्वये ।
अतिवात्सल्यतस्तेन सङ्गता तस्य दुःखतः ॥९२॥
दुःखभारसमाक्रान्ता निन्द्यवृत्तेन सङ्गता ।
ज्वालामुखेन च तथा पौत्रेणाश्लेषिता सती ॥९३॥
सुदग्धा निन्दिता लोकैर्मृतप्राया बभूव ह ।
तां सदानुगता चाहं लुप्तप्रायाऽभवं प्रिय ॥९४॥
एवं बहूनि वर्षाणि सख्या दुःखेन दुःखिता ।
अस्थिरोऽभूदस्वतन्त्रो महाशनापरिग्रहात् ॥९५॥
पुरं प्राप दशद्वारं केनचित् कर्मणा क्वचित् ।
तस्मिन् महाशनायुक्तो पुत्रैर्मात्रादिभिर्युतः ॥९६॥
न्यवसत् स सुखप्रेप्सुर्दुःखं भुञ्जन् दिवानिशम् ।
पुत्राभ्यां दग्धसर्वाङ्गो निन्दितश्चानुवासरम् ॥९७॥
इतस्ततः समाकृष्टः प्रियाभ्यां सर्वदा हि सः ।
पुत्राणां पञ्चभवनं प्रविशन् निविशन्नपि ॥९८॥
अत्यन्तं श्रान्तिमायाति न सुखं लभते क्वचित् ।

॥ ९१ ॥ एवं मनसोऽतिदुःखप्राप्तौ मनोबुद्ध्योरैकात्म्याद् बुद्धेरपि दुःखप्राप्तिरित्याह—तदेति । सखी बुद्धिः । पुत्रे मनसि ॥ ९२–९३ ॥ तां सखीम् । स्वोपाधेर्बुद्धेः रजस्तमोव्याप्तत्वेन स्वरूपस्यानवभासा-ल्लुप्तप्रायत्वं ज्ञेयम् ॥ ९४ ॥ दुःखिताऽभवमिति सम्बन्धः ॥ ९५ ॥ पुरं शरीरं ब्रह्मरन्ध्रेण सह दशद्वारम् । केनचिद् प्रारब्धेन कर्मणा । बाह्यपक्षे तु युद्धादिकर्मणा । क्वचित् प्रलयानन्तरं सृष्टिकाले ॥ ९६ ॥ सुखप्रेप्सुरिति । सुखस्येच्छामात्रम्, दुःखमेव प्राप्यत इति भावः ॥ ९७ ॥ प्रियाभ्यां विकल्पाशाभ्याम् । पुत्राणाम् इन्द्रियाणाम् ॥ ९८ ॥ पुत्रस्य मनसः । सखी बुद्धिः ॥९९॥ सात्त्विकांशापगमान्मूर्च्छितकल्पा ।

एवं पुत्रस्य दुःखेन सखी मेऽत्यन्तदुःखिता ॥९९॥
अभून्मूर्च्छितकल्पा सा एवं तत्पुर आवसत् ।
ज्वालामुखनिन्द्यवृत्तयुता या सा महाशना ॥१००॥
शून्याख्यया पोषिता च मूढेन श्वशुरेण च ।
तथा सपत्न्या चपलाख्ययाऽत्यन्तं समेधिता ॥१०१॥
अस्थिरं स्ववशे चक्रे पतिं [1]तत्पुरसंस्थिता ।
सखीप्रीत्या तत्र चाहमवसं तत्परा सती ॥१०२॥
सखीदुःखाद्गतप्राया सर्वेषां रक्षणोद्यता ।
यद्यहं तत्र न स्यां वै क्षणमात्रमपि प्रिय ॥१०३॥
न भवेत्तत्र चैकोऽपि मया सर्वं हि रक्षितम् ।
शून्यया शून्यतां प्राप्ता मूढेन मूढतामपि ॥१०४॥
अस्थिरेणास्थिरत्वं च चापल्यं चपलायुता ।
ज्वालामुखाज्ज्वलत्तां च निन्द्यवृत्तात्तदात्मताम् ॥१०५॥
सखीसंयोगतश्चैवमभवं तत्तदाकृतिः ।
सखीं यदि विमुञ्चामि सा नश्येत् क्षणमात्रतः ॥१०६॥

तत्पुरे देहे । महाशना आशा ॥ १०० ॥ शून्याख्यया भर्तुः पितामह्या अविद्यया ॥ १०१ ॥ अविद्यामोहकल्पनाभिः प्ररूढया आशया मनः समाक्रान्तमित्येतदाह—अस्थिरमिति । सखीति । बुद्धितादात्म्यापन्नायाश्चितो बुद्ध्यनुकृतिर्नियतैवेति भावः ॥ १०२ ॥ यद्यहमिति । दर्पणं विना प्रतिबिम्बवद् अधिष्ठानमन्तरा न किञ्चिदारोपितं भवेदिति भावः ॥ १०३ ॥. सर्वाधिष्ठानत्वात् स्वस्य [1]सर्वानुकृतिमाह—शून्ययेत्यादि । शून्यया युता ॥ १०४–१०५ ॥ मम चिद्रूपाया अनेकरूपता

1. सर्वस्य अनुकृतिम् अनुसृतिम्, सर्वरूपतया प्रतिभासमित्यर्थः ।

१. यत्–घ० ।

मां सङ्गतेन तेषां वै समाहुर्व्यभिचारिणीम् ।
जना मूढाः सर्वं एव कुशला निर्मलां विदुः ॥१०७॥
महासती मे जननी विशुद्धा निर्मलाकृतिः ।
आकाशादपि विस्तीर्णा सूक्ष्मा च परमाणुतः ॥१०८॥
सर्वज्ञानाप्यकिञ्चिज्ज्ञा सर्वकर्त्र्यपि निष्क्रिया ।
सर्वाश्रयाप्यनाधारा सर्वाधाराप्यनाश्रिता ॥१०९॥

बुद्धितादात्म्यादेवेत्याह--सखीसंयोगत इति । सखीमिति । अहं बुद्धेरप्यधिष्ठानमिति मां विना बुद्धिरपि न भवेदित्याशयः ॥ १०६ ॥ तेषां बुद्ध्यादीनां सङ्गतेन सहभावेन मां शुद्धामपि व्यभिचारिणीमाहुः सर्वे जनाः । अत एव ते मूढाः । शुद्धाखण्डचिद्रूपमप्यात्मानं क्षणिकदृश्याकारानुकारमात्रेण क्षणिकमाहुर्बौद्धादय इति तात्पर्यम् । कुशलाः सूक्ष्मधियस्तु स्मृत्यनुसन्धानादिमूलसर्वव्यवहारानुपपत्त्या तन्मतमुपेक्ष्य निर्मलां कालदेशादिपरिच्छेदमलनिर्गतां मां विदुः ॥ १०७ ॥ ननु कथं ते दुष्टसङ्गताया निर्मलत्वमिति चेन्मातुः सकाशात् प्राप्तमहामन्त्रमाहात्म्यादिति वक्तुमादौ मातरं स्तौति—महासतीत्यादि । बाह्यपक्षे महासती महापतिव्रता । अत एव शुद्धा मानसदोषरहिता । निर्मलाकृतिः [1]शारीरदोषरहिता च । आकाशादपि विस्तीर्णा [2]यशसा । परमाणुतः सूक्ष्मबुद्ध्याद्युपेतत्वात् सूक्ष्मा । आन्तरपक्षेऽनवच्छिन्नसत्तारूपेति महासती । विशुद्धा शुद्धचिदेकरूपत्वादेकरसेत्यर्थः । निर्मलाकृतिः अज्ञानादिस्वरूपावरकमलानाक्रान्ता । कारणत्वेन भासकत्वेन च व्यापकत्वादाकाशादपि विस्तीर्णा । परमाणोरप्यन्तरनुस्यूतत्वाद् दुर्ज्ञेयत्वाच्च परमाणुतः सूक्ष्मा ॥ १०८ ॥ बाह्यपक्षे स्वभावतः सर्वज्ञानापि तत्प्रयुक्ताभिमानाभावादकिञ्चिज्ज्ञेव तिष्ठतीति । एवमग्रेऽपि । सर्वेषां पोषकत्वेनाश्रया । सर्वकलानामाधारापि । आन्तर-

१. शरीर—क० । २. या सा—क० ख० ।

सर्वरूपाप्यरूपा सा सर्वयुक्ताप्यसंयुता ।
सर्वत्र भासमानापि न ज्ञेया केनचित् क्वचित् ॥११०॥
महानन्दाप्यनानन्दा मातापितृविवर्जिता ।
मादृश्यस्तनयास्तस्याः सन्ति संख्याविवर्जिताः ॥१११॥
यथा तरङ्गा जलधेरसंख्यः सोदरीगणः ।
सर्वास्ता मत्समाचारा राजपुत्र भवन्ति वै ॥११२॥
महामन्त्रवती चाहं सर्वैरेतैः सखीगणैः ।
सङ्गता तत्परा चापि मातृतुल्या स्वरूपतः ॥११३॥

पक्षे तु सर्वज्ञत्वादिकं दृश्यकृतमिति स्वतः किञ्चिज्ज्ञत्वादिकम् । सर्वत्र भासमानत्वात् सर्वाधारा ॥१०९॥ बाह्यपक्षे सर्वरूपा सर्वावयवसौन्दर्यवती[1] सर्वैर्धनधान्यादिभिर्युक्ता सर्वत्र कारुण्यसौशील्यादिस्त्रीगुणैर्भासमाना प्रसिद्धापि क्वचित् केनचिन्न ज्ञेया, सदान्तःपुरस्थत्वात् । आन्तरपक्षे तु सर्वप्रतिबिम्बरूपस्यापि दर्पणस्य यथा प्रतिबिम्बरूपराहित्यमेवं नेयम् । सर्वत्र प्रतिबिम्बांशे भासमानोऽपि दर्पणो न केनचित् प्रतिबिम्बव्यतिरेकेण ज्ञायते, एवं भावेषु सर्वत्र भासमाना चितिर्भावव्यतिरेकेण न ज्ञायते ॥ ११० ॥ बाह्यपक्षे महानानन्दो विभवनिमित्तो यस्याः । एवंविधाप्यानन्दनिमित्तहर्षानुत्सेकादन्यैरलक्ष्यमाणानन्दत्वादनानन्दा । मातापितरौ वर्जितौ यया । महासतीत्वेन पतिपरायणत्वात् त्यक्तमातापितृस्नेहेति तात्पर्यम् । आन्तरपक्षे महानन्दरूपापि स्वरूपातिरिक्तानन्दायोगादनानन्दा । नित्यत्वान्मातापितृविवर्जिता । संख्याविवर्जिता असंख्याः ॥ १११ ॥ यथा तरङ्गा असंख्यास्तथा मे असंख्यः सोदरीगणः । एतद्दृष्टान्तेन वस्तुतो जनन्यव्यतिरिक्तत्वं कन्यानामुक्तं ज्ञेयम् । समाचाराः सखीकुटुम्बपरायणाः ॥ ११२ ॥ एवं दुष्टैः सङ्गता तत्पराऽप्यहं तेषां दोषैरस्पृष्टा ।

---

१. वत्—क० ।

अस्मिन् पुरे सखीपुत्रो यदा श्रान्तो भवत्यलम् ।
तदा मातुः समुत्सङ्गेऽस्थिरः शेते सुनिर्भरम् ।।११४।।
अस्थिरस्तु यदा सुप्तस्तदा तस्य सुतादयः ।
स्वापं समधिगच्छन्ति नान्यो जागर्ति कश्चन ।।११५।।
तदा तद्रक्षति पुरमस्थिरस्य प्रियः सखा ।
प्रचाराख्यः प्रतिचरन् पूर्वद्वारयुगे मुहुः ।।११६।।
अस्थिरस्यापि या माता सखी मे तनयेन सा ।
तस्याः सखी च या श्वश्रूरसती या स्वभावतः ।।११७।।
सा समाच्छाद्य तान् सर्वान् पुत्रेण सह रक्षति ।
एवं सर्वेषु सुप्तेषु प्राप्य स्वां मातरं तदा ।।११८।।

कुत एवमिति चेदेवंविधमेव मन्त्रसामर्थ्यं ममास्तीत्याह—महामन्त्रेति । आन्तरपक्षे तु महामन्त्रो मायाशक्तिः । तयाऽहमघटितमपि शुद्धस्वरूपे संसारावभासनं सम्पादयामीति तात्पर्यम् ॥ ११३ ।। एवं प्रसङ्गात् स्ववृत्तमभिधाय पुनः सखीपुत्रादिवृत्तं निरूपयति—अस्मिन्निति । महाशनानिमित्तं विषयाहरणादिना यदा श्रान्तस्तदा शेते । आन्तरपक्षे तु परिपक्वकर्मणां भोगेन क्षयादन्येषामपरिपाकाद् मध्ये मातुर्बुद्धे-रुत्सङ्गे मनः शेते लयं प्राप्नोति ।। ११४ ॥ सुता इन्द्रियाणि क्रोधलोभौ च। आदिपदेन पत्नी माता च। आन्तरपक्षे तु मनसि विलीने इन्द्रियादि सर्वं विलीनमिति तात्पर्यम् ।। ११५ ।। तदा सर्वस्वापकाले सुषुप्तौ । प्रचारः प्राणः । मनःप्राणयोरन्यतररोधे द्वयोः रोधसम्भवात् प्रियत्वं सखित्वं प्राणस्य। पूर्वद्वारयुगं नासापुटद्वयम्। मे सखी अस्थिरमाता या सा तनयेन तनयादिना सह यदा सुप्ता तदेति शेषः । तस्याः अस्थिरमातुः या सखी श्वश्रूश्च शून्यनाम्नी अविद्या ॥ ११७ ॥ सर्वान् अस्थिरादीन् सुप्तान् । पुत्रेन मूढाख्येन [1]सहिता रक्षति ।

१. सह–क० ।

आनन्दिताऽहं भवामि मात्राश्लिष्टा चिरं ननु।
पुनस्तानुत्थितान् शीघ्रमनुसंयामि चान्वहम् ॥११९॥
अस्थिरस्य सखा योऽयं प्रचाराख्यो महाबलः।
स सर्वानस्थिरमुखान् पोषयत्यनुवासरम् ॥१२०॥
स एको बहुधा भूत्वा पुरं च पुरवासिनः।
व्याप्य रक्षत्यनुदिनं सर्वान् संश्लेषयत्यपि ॥१२१॥
तं विना ते हि विश्लिष्टा नष्टाः स्युरपि सर्वथा।
सूत्रेण हीना मणयो मालाबद्धा यथा पृथक् ॥१२२॥
स [1]एवं मां च सङ्गम्य सर्वैः संयोजयत् परम्[2]।
मया संजीवितोऽत्यन्तं सूत्रधारो हि तत्पुरे ॥१२३॥

आन्तरपक्षे मोहात्मिकया अविद्यया सर्वमावृतं भवतीति तात्पर्यम् ॥ ११८ ॥ आन्तरपक्षे तु सुषुप्तौ परिच्छेदकोपाधिलयात् पूर्णरूपतासम्पत्त्या आनन्दिता आनन्दरूपा भवामीति तात्पर्यम्। अनुसंयामि तत्तत्तादात्म्यं प्राप्नोमीत्यर्थः ॥ ११९ ॥ प्रचाराख्यः प्राणः। अस्थिरमुखान् मनःश्रोत्रादीन्। पोषयतीति। प्राणसमेधितजठराग्निपाचितान्नरसमूलकसामर्थ्यवत्त्वान्मनःप्रभृतीनामिति भावः ॥ १२० ॥ स प्राणः। बहुधा प्राणादिवृत्तिभेदेन। संश्लेषयति स्वस्वविषयैः संयोजयति ॥ १२१ ॥ मनःप्रभृतिषु क्रियाशक्तिरूपेणायमेव प्रोत इत्याह दृष्टान्तेन— तं विनेति। विश्लिष्टाः विषयासंबद्धाः[3]। नष्टाः कार्याक्षमत्वेन नष्टप्रायाः। मालाकारतया बद्धा मणयः। तेषां पृथग्भूतानां मालाकारता यथा नश्यतीति भावः ॥ १२२ ॥ मां सङ्गम्य मत्तादात्म्यं प्राप्य। सर्वैर्मां संयोजयति। अन्तःकरणादीनां चित्तादात्म्यं प्राणद्वारकमेवेति तात्पर्यम्। एतच्चाग्रे भविष्यति[1]। सूत्रधार इति। यथा सूत्रधारो नाट्यप्रवर्तकः,

---

1. "अक्षान्तःकरणादीनां प्राणसूत्रं यदान्तरम्" [ २।१३५ ] इत्यादिना।

१. एव–क०। २. पुरम्–क०। ३. यसम्बन्धाः–क०।

जीर्णे तु तत्पुरे चान्यत्पुरं तां नयति द्रुतम् ।
एवं प्रचारं संश्रित्य पुराणामधिपोऽभवत् ॥१२४॥
बहूनामस्थिरो नूनं विचित्राणां क्रमेण वै ।
सतीपुत्रोऽप्यस्थिरः स संश्रितोऽपि महाबलम् ॥१२५॥
मया च भावितोऽत्यन्तं सर्वथा दुःखभागभूत् ।
चपलामहाशनाभ्यां पत्नीभ्यां सुसमागमात्[1] ॥१२६॥
ज्वाला[2]मुखनिन्द्यवृत्ताभिधपुत्रयुगेन च ।
अन्यैः पुत्रैः पञ्चभिः स सर्वत्राभिविकर्षितः ॥१२७॥
महाक्लेशपरीतात्मा सुखलेशविवर्जितः ।
इतस्ततः क्वचित् पुत्रैः पञ्चभिः स विकर्षितः ॥१२८॥
क्वचिच्चपलयाऽत्यन्तं चालितः खेदमीयिवान्[3] ।
क्वचिन्महाशनाहेतोरशनार्थं प्रधावति ॥१२९॥
क्वचिज्ज्वालामुखाद्दिप्तो निर्दग्धापादमस्तकः ।
महामूर्च्छां समायाति चाविदंस्तत्प्रतिक्रियाम् ॥१३०॥

एवं प्राण एव मनःप्रभृतिव्यापारप्रवर्तकः ॥ १२३ ॥ तत्पुरे शरीरे । तान् बुद्ध्यादीन् । नयतीति । उत्क्रमणकाले बुद्ध्यादीनां प्राणे लयात् प्राणो नयतीति भावः । अधिपः अस्थिराभिधं मनोऽभवत् ॥ १२४ ॥ बहूनां पुराणामिति पूर्वेण सम्बन्धः । महाबलं प्राणम् ॥ १२५ ॥ त्वया महामन्त्रवत्या भावितस्य महाबलसंश्रयस्य सतीपुत्रस्यापि [4]दुःखभाक्त्वं कुत इति चेत्, पत्न्याद्यसत्समागमादित्याह—चपलेत्यादि ॥ १२६ ॥ अभिविकर्षित इति । विकल्पेन आशोदयः, तत इन्द्रियार्थेषु प्रवृत्तिः, तन्निमित्तः क्रोधलोभोदयः, तेन दुःखभागभूदित्याशयः॥१२७॥ महाक्लेशप्राप्तिप्रकारमाह— इत इत्यादि ॥ १२८ ॥ खेदमीयिवान्[3] दुःखं प्राप्तवान् ॥ १२९ ॥ तत्प्रतिक्रियां क्रोधप्रतिक्रियां शान्तिम् ॥ १३० ॥

१. गमात्–क० ख० । २. मुखा–घ० ।
३. मेयिवान्–ग० घ० । ४. दुःखत्वं तु–क० ।

निन्द्यवृत्तं क्वचित् प्राप्य गर्हितो भर्त्सितः परैः।
मृततुल्यं स्वमात्मानं मन्यते शोकसन्ततः ॥१३१॥
दुष्पत्नीपुत्रसहितो मोहितो दुष्कुलोद्भवः।
पत्नीपुत्रैः समाक्रान्तो नीयमानस्तु तैः सदा ॥१३२॥
उवास तैर्विचित्रेषु पुरेषूच्चावचेषु हि।
क्वचित् कान्तारकीर्णेषु क्रव्यादकुलभूमिषु ॥१३३॥
क्वचिदत्यन्ततप्तेषु क्वचिच्छीतजडेषु च।
क्वचित् पूतिवहास्थेषु क्वचिद् गाढतमःसु च ॥१३४॥
एवं भूयोऽतिदुःखेन दुःखिते[1] तनयेऽस्थिरे।
सखी च मे दुःखमूढाऽभवद् दुःसङ्गतः सदा ॥१३५॥
स्वभावसत्यपि मुधा तामन्वहमपि प्रिय।
मूढेवात्यन्तमभवं तत्कुटुम्बपरायणा ॥१३६॥
को हि दुःसङ्गतः सौख्यं प्राप्नुयाल्लेशतः क्वचित्।
गच्छन् [2]मरुस्थले ग्रीष्मे तृष्णाशान्ति यथा[3] नरः ॥१३७॥

गर्हणभर्त्सनाभ्यां मृततुल्यमात्मानं मन्यते, तेन शोकसन्ततो[4] भवति ॥ १३१ ॥ मूढपुत्रत्वाद् दुष्कुलोद्भवत्वम् ॥ १३२ ॥ तैः सहोवास। उच्चावचेषु उत्कृष्टेष्वपकृष्टेषु च। एवंविधस्य नरकप्राप्तिमाह—क्वचिदिति। कान्तारैररण्यैः कीर्णेषु व्याप्तेषु पुरेषु। क्रव्यादकुलं मांसाशिकाकादिसमुदायः, [5]तदाश्रितेषु। महारण्यस्थं काकादिव्याप्तं च स्वदेहं पश्यतीति तात्पर्यम् ॥ १३३ ॥ पूतीति। दुर्गन्धवहात्मकनदीस्थेषु। गाढतमःसु तर्वादिदेहेषु उवासेत्यन्वयः ॥ १३४-१३५ ॥ अहं स्वभावसती। वस्तुतस्तत्सङ्गाभावात् स्वच्छस्वभावापि। मुधा व्यर्थं निर्निमित्तेनेत्यर्थः ॥ १३६ ॥ ननु किमर्थं त्वया मूढत्वं प्राप्तमिति चेद्

---

१. दुःखितं–क० ख०। २. महा–क०। ३. ययौ–क० ख०।
४. सन्ततो–ख० ग०। ५. सदा–क०।

एवं चिरतरे काले संवृत्ते मम सा सखी ।
मोहिताऽत्यन्तखेदेन मया रहसि सङ्गता ॥१३८॥
मदेकसङ्गाद्युक्तिं सा प्राप्यासाद्य च सत्पतिम् ।
जित्वा स्वतनयं हत्वा बध्वा तत्तनयादिकान् ॥१३९॥
मया सङ्गम्य मन्मातृपुरमासादयद् द्रुतम् ।
मन्मातरं परिष्वज्य मुहुर्मुहुरकल्मषा ॥१४०॥

दुःसङ्गत इत्याह—को हीति ॥ १३७ ॥ एवं दुःखभोगेन। संवृत्ते अतीते । सङ्गतेति । कथञ्चित्प्राप्तेश्वरानुग्रहेण। रहसि विविक्ते विषयानवभासदशायां मया[1] सङ्गता शुद्धचिदाकाराऽभवदिति आन्तरपक्षे ज्ञेयम् ॥ १३८ ॥ मदेकसङ्गात् । शुद्धमद्रूपाभिव्यक्तेर्युक्तिं वैराग्यम्, वैराग्यात्मदर्शनयोः परस्परकारणत्वात्। तदुक्तं—"भक्तिः परेशानुभवो विरक्तिः[2] [भा० पु० ११।२।४२] इत्यादि, "परं दृष्ट्वा निवर्तते" [ भ० गी० २।५५ ] इति च। वैराग्यात् सत्पतिं विवेकम्। तनयं मनः। क्रोधलोभौ हत्वा। इन्द्रियाणि बध्वा ॥ १३९ ॥ मया सङ्गम्य सम्यगेकतां निर्विकल्पसमाधिं प्राप्य। सङ्गतेति पूर्वं श्रवणेन परोक्षज्ञानमुक्तम्। इदानीं मननिदिध्यासनाभ्या[3]मपरोक्षमिति वा विवेकः। मन्मातृपुरम् अनवच्छिन्नशुद्धचिदात्मताम् । [4]द्रुतमिति ज्ञानोत्तरक्षणे। मुहुर्मुहुर्मन्मातरं परिष्वज्येति जीवन्मुक्तिदशोक्ता ज्ञेया। मुहुर्मुहुरिति बुद्धेर्मध्ये मध्ये द्वैताभासरूपतोक्ता। अत एवाह—अकल्मषेति । दग्धपटाकारस्य[5] द्वैताभासस्य न पूर्ववत् संसारमूलवासनात्मककल्मषाधायकत्वमिति भावः। एतदेवोक्तम्—"हत्वापि स इमान् लोकान् न हन्ति न निबध्यते" [ भ० गी० १८।१७ ] इति

---

१. 'मया' नास्ति–क० । २. विमुक्तिः–ख० ।
३. भ्यां समप–क० । ४. उद्धृत–क० ।
५. स्थ–क० ।

आनन्दार्णवनिर्मग्नस्वभावाऽभवदञ्जसा ।
एवं त्वमपि दुर्वृत्तं निगृह्य सखिसम्भवम् ॥१४१॥
प्राप्य स्वमातरं नाथ सुखं नित्यं समाप्नुहि ।
एतत्ते कथितं नाथ स्वानुभूतं सुखास्पदम् ॥१४२॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे हेमचूडोपाख्याने बन्धाख्यायिका पञ्चमोऽध्यायः ॥



॥१४०॥ ननु संसारमूलवासनाभावेऽपि दृष्टदुःखं स्यादित्याशङ्क्याह—आनन्देति । वासनाहेतोरभिमानस्यैव दुःखहेतुत्वादिति तात्पर्यम् । अभवदिति प्रथमपुरुषेण बुद्धेरेव [1]बन्धमोक्षौ न ममेत्युक्तं भवति । सखिसम्भवं मनः ॥१४१॥ प्राप्येति । बुद्ध्या [2]सह परिच्छिन्नचिदेकरूपतां प्राप्येत्यर्थः ॥ १४२ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां पञ्चमोऽध्यायः ॥



---

१. एवंविधमोक्षौ—क० । २. महा—क० ।

# अथ षष्ठोऽध्यायः

एवं प्रियावचः श्रुत्वा हेमचूडोऽतिविस्मितः ।
हसन् पप्रच्छ तां कान्तामविद्वान् विदुषीं तदा ॥ १ ॥
प्रिये प्रोक्तं यदेतत्ते खचित्रमिव भाति मे ।
निरालम्बं [1]वचस्तेऽद्य जानाम्येतदशेषतः ॥ २ ॥
नूनं [2]त्वमप्सरोद्भूता ऋषिणा वर्द्धिता वने ।
[3]संस्पृष्टयौवनाद्यापि न तारुण्यमलं गता ॥ ३ ॥
वक्ष्यस्यनेकसाहस्रवर्षाणामिव संस्थितिम् ।
भूतग्रस्तोक्तिसदृशवचसा तेऽतिमात्रतः ॥ ४ ॥
असन्दर्भेण किमहं विबुद्धचामि यथार्थतः ।
वद ते सा सखी क्वास्ते बद्धश्च सखिपुत्रकः ॥ ५ ॥
पुराणि तानि वा क्कुत्र संस्थितानि तदीरय ।
अस्तु किं तेन वृत्तेन वद मे क्व च सा सखी ॥ ६ ॥

**अत्राध्याये चेतिपद्यैः श्रद्धा श्रेयःसुसाधनम् ।**
**कुतर्कस्यानर्थलाभ इति सम्यग्निरूप्यते ॥**

**खचित्रमिव । असम्भावितमिवेत्यर्थः । निरालम्बं निर्विषयम् ॥ २ ॥ कुत इति चेदाह—नूनमिति । अलम् अत्यन्तम् ॥३॥ अतिमात्रतोऽतिमात्रेण बहुलेन वचसा ॥४॥ कुतो [1]मद्वचस्य[4]सन्दर्भतेति चेदाह—वदेति ॥ ५–६ ॥ अहं मात्रा दत्तां सखीं न प्राप्तवानस्मि । मे आर्या माता, अवरोधेऽन्तःपुरेऽस्ति, तां विचारय पृच्छ । अन्यापि माता मे**

---

1. 'मद्वचसि असन्दर्भता' इतिच्छेदः ।

१. 'वचस्तेऽद्य' नास्ति–क० । २. तद–क० । ३. संसृष्ट–क० ।
४. चस्थ–क० ग० ।

सखीं न प्राप्तवान् मातुरहं तत् प्रविचारय ।
आर्यास्ति मेऽवरोधे स्वे पितुर्मेऽन्या नहि प्रिया ॥ ७ ॥
सा वा सखी मे कुत्रास्ते तत्पुत्रो वा वद द्रुतम् ।
मन्येऽहं ते वचो लोके वन्ध्यापुत्रसमाश्रयम् ॥ ८ ॥
यथाह कश्चिन्नटिको[1] विदूषकवचोविधौ ।
वन्ध्यापुत्रः समारूढः प्रतिबिम्बमहारथम् ॥ ९ ॥
शुक्त्यारोपितहैरण्यभूषणैर्भूषिताङ्गकः ।
आयुधैर्नरशृङ्गोत्थैर्युद्ध्वा गगनकानने ॥१०॥
हत्वा भविष्यद्राजानं जित्वा गन्धर्वपत्तनम् ।
मरीचिस्रोतसि स्वाप्नकामिनीभिर्हि खेलति ॥११॥
तथा तव वचो मन्ये सर्वथाऽसङ्गतं [2]ननु ।
श्रुत्वैवं प्रियवाक्यं सा चतुरा प्राह तं पुनः ॥१२॥
नाथ प्रोक्तं मया यत्ते तत् कथं स्यादपार्थकम् ।
न मादृशानां वचनं निरालम्बं क्वचिद्भवेत् ॥१३॥
मृषा हि तपसां हन्त्री सत्यशीलेषु सा कुतः ।
तपस्विनां कुले [3]कस्माच्छ्वित्रे[1] सौन्दर्यवद्भवेत्॥१४॥

नास्ति, [4]यया सखी दत्ता[5] स्यादित्याह—पितुरिति ॥ ७ ॥ लोके प्रसिद्धं वन्ध्यापुत्रसमाश्रयं वच इव ते वचः ॥ ८ ॥ तदेवाह—यथेति । नटिको नटः ॥ ९–११ ॥ तथा प्रोक्तविदूषकवाक्यवत् । असङ्गतम् ॥ १२–१३ ॥ कुतस्ते वचो मृषा नेति चेदाह—मृषेति । तपस्विनां मध्ये विशेषतः सत्यशीलेष्वस्मासु सा असम्भाव्यैवेति सदृष्टान्तमाह—

---

1. श्वित्रे, कुष्ठे इत्यर्थः ।

१. नटीको–क० । २. न तु–ख० । ३. कस्मि–घ० ।
४. यथा–क० ख० ग० । ५. दत्तास्था–क० ।

यो योजयति जिज्ञासुमन्यार्थेन ह्यसत्यतः ।
तस्य नोर्ध्वं न चाधस्ताल्लोको[1]ऽस्ति सुखसाधनम् ॥१५॥
शृणु राजसुतोक्ति[2] मे लोके तैमिरिकः क्वचित् ।
समदृष्टिं नैति शीघ्रमञ्जनानां वचोगणैः ॥१६॥
असत्यमेव जानाति हितप्रोक्तं च मूढधीः ।
[3]तत्त्वां प्रियाऽहं जिज्ञासुमसत्यैर्योजयामि किम् ॥१७॥
अप्यसत्यं मयोक्तं यत्तद्विमर्शय [4]सद्धिया ।
लोके हि कुशलो मर्त्यः सर्वव्यवहृतौ ननु ॥१८॥
परीक्ष्यैकांशतः सर्वामभिजानाति संस्थितिम् ।
निदर्शनं प्रदास्यामि तुभ्यमत्र [5]समीक्षय ॥१९॥

तपस्विनामिति ॥ १४ ॥ जिज्ञासुविषये असत्येन वचसा पुण्यलोकनाश इत्याह—य इति । अन्यार्थेन अपार्थवचसा असत्यात् । न लोकः ॥ १५ ॥ मदुक्तं सकृच्छ्रवणमात्रेण त्वया मूढेन ज्ञातुमशक्यमित्याशयेनाह—शृण्विति ॥ १६ ॥ हितेन प्रियेण प्रोक्तमपि मूढधीरसत्यमिति जानाति । तत् तस्मात् त्वयैवं यद्विज्ञातं तदनुचितमेव । यदहं तपस्विनी सत्यशीला तव प्रिया च भूत्वा [6]त्वां [7]जिज्ञासुम् असत्यैर्योजयामि किम् । न योजयाम्येवेत्यर्थः ॥ १७ ॥ ननु "असत्यं साहसं क्रौर्यं स्त्रीणां सहजसम्भवम्" इति चेत्त्वं [8]कुशलोऽस्यभिज्ञातुमत एतत् परीक्षस्वे[9]त्याह–अपीति । सद्धिया सूक्ष्मतर्कयुक्तबुद्ध्या । नन्वहं कुशलोऽप्यतीतार्थं त्वद्वचनं कथं परीक्षिष्यामीति चेदाह—लोक इति ॥ १८ ॥ लोके सत्यशीलसंस्थितिम् [10]एकांशतः क्वचिद् व्यवहारे परीक्ष्यैव

---

१. लोके–क० । २. त्तं–ख० ग० घ० ।
३. तत्त्वं प्रियाहं–क० । ४. सिद्धया–क० घ० ।
५. समीक्षया–क० । ६. 'त्वां' नास्ति–क० ख० ग० ।
७. जिज्ञासुः–क० ख० ग० । ८. कुशलोऽभि–क० ।
९. क्षस्वे–क० । १०. एवांशतः–क० ।

य: पुरा विषयः सर्वो बभूवाभीष्टसाधनम् ।
चिरान्मद्वचनात् सोऽद्य कुतो न सुखसाधनम् ॥२०॥
स एवाद्य साधयति सुखमन्येषु वै कुतः ।
एतन्निदर्शनेनैव स्वमतं वेत्तुमर्हसि ॥२१॥
शृणु राजन् यद्ब्रवीमि[1] ऋज्व्या निर्मलया धिया ।
[1]अनाश्वासो [2]रिपुर्लोके भवेदाप्तोक्तिषु स्थिरः ॥२२॥
श्रद्धा माता प्रपन्नं सा वत्सलेव सुतं सदा ।
रक्षति प्रौढभीतिभ्यः सर्वथा नहि संशयः ॥२३॥
आप्तेष्वश्रद्धिनं[3] मूढं जहाति श्रीः सुखं यशः ।
स भवेत् सर्वतो हीनो यः श्रद्धारहितो नरः ॥२४॥

जानाति। अतो मया प्रागुक्तं यत्तत्त्वया सत्यत्वेनानुभूतमिति निदर्शनं प्रदास्यामि अनुभूतं स्मारयामि। अत्र मद्वचनपरीक्षायाम् ॥ १९ ॥ य इति। यो विषयः पुरा सुखसाधनतया गृहीतः, सोऽद्य मद्वचसाऽन्यथैवानुभूयते। एवं प्रागुक्तस्य सत्यत्वादिदमपि सत्यं भवेदेवेति जानीहीति भावः ॥ २० ॥ ननु कालभेदान्न स विषयः सुखसाधनम्[4], अतो नैतत्त्वद्वचनकृतमिति चेदाह—स एवेति। एतन्निदर्शनेन मदुक्तानुभवेन। स्वमतं मदुक्तमसत्यमिति निश्चयं प्रमाणमप्रमाणं वेति वेत्तुम् ॥ २१ ॥ मद्वचने श्रद्धस्वेति [5]वक्तुं श्रद्धां स्तौति—शृण्वित्यादि। ऋज्व्या कुतर्करहितया, अत एव निर्मलया। युत इति शेषः। अनाश्वासः अश्रद्धा ॥ २२ ॥ अत एव सर्वतो हीनो भवेत् ॥ २४ ॥ अश्रद्ध इति। माता मे [6]हितमेव कुर्यादिति श्रद्धाभावे तद्दत्ताहारादेस्त्याज्यत्वेन

1. लोके आप्तोक्तिषु अनाश्वासः स्थिरो रिपुर्भवेदित्यन्वयः ।

१. यद्ब्रवी ऋज्व्या–क० ।  २. रिपुलोको–क० ।
३. द्धितं–क० ग० ।  ४. घनं मत्तो–क० ।
५. वाक्ये तु–क० ख० ।  ६. हीन–क० ।

श्रद्धा हि जगतां धात्री श्रद्धा सर्वस्य जीवनम् ।
अश्रद्धो मातृविषये बालो जीवेत् कथं वद ॥२५॥
अश्रद्धस्तरुणः पत्न्यां कथं ससुखमेधते ।
तथाऽपत्येषु स्थविरः कथमीयात् सतीं गतिम् ॥२६॥
अश्रद्धो वा भुवं कस्माद् विकर्षेत् कर्षकः किल ।
न प्रवृत्तिर्भवेत् क्वापि त्यागे वा संग्रहेऽपि वा ॥२७॥
श्रद्धावैधुर्ययोगेन विनश्येज्जगतां स्थितिः ।
एकान्तग्रहणाल्लोकप्रवृत्तिरिति चेच्छृणु ॥२८॥
एकान्तग्रहणे वापि श्रद्धा कस्मात् प्रतिष्ठिता ।

बालो न जीविष्यतीति भावः ॥ २५ ॥ मयि निद्रिते मामियं न हन्यादिति पत्न्यां श्रद्धामकुर्वतो विपरीतसम्भावनोदयात् सुखं न स्यात् । एवं स्थविरोऽपि । सतीं गतिं सुखस्थितिम् ॥ २६ ॥ अश्रद्धस्य न क्वापि प्रवृत्तिः स्यात्, इष्टसाधनत्वनिश्चयासम्भवादित्याह—अश्रद्ध इति ॥२७॥ प्रवृत्त्यभावे इष्टापत्तिरिति चेन्नैवमित्याह—श्रद्धेति । श्रद्धावैधुर्यं श्रद्धाभावः, तद्योगेन तत्सत्त्वेन हेतुना, प्रवृत्त्यभावे साधिते सतीति शेषः । जगतां प्राणिनां स्थितिः सुखाद्यनुभवात्मा व्यवहारः । नश्येद् नाशः सम्भवेत्[1] । प्रत्यक्षसिद्धा जगत्स्थितिरपह्नोतुं न शक्या । अतस्तन्मूलभूतश्रद्धासिद्धिरिति भावः। ननु न जगत्स्थितिनिमित्तप्रवृत्त्यन्यथानुपपत्त्या श्रद्धासिद्धिः, प्रवृत्तेरन्यथा सिद्धेरित्याह—एकान्तेति । एकान्तग्रहणात्, व्याप्तिग्रहादित्यर्थः । कर्षको भूविकर्षणे कृतेऽकृते च धान्यप्राप्तिमप्राप्तिञ्च भूयो गृहीत्वा कर्षणव्याप्तिं धान्यप्राप्तौ विनिश्चित्य कर्षणे प्रवर्तते, न श्रद्धया प्रवर्तत इति भावः । अत्राह—शृण्विति ॥२८॥ श्रद्धानाम सम्भावनात्मा निश्चयः, इदमित्थमेव स्यादिति । एवं सति

1. व्यवहारपदसंनिधानेन व्यवहारस्य नाशः संभवेदित्यर्थो विभक्तिविपरिणामेन संपद्यते ।

तत्राप्येकान्तशरणः श्रद्धाशरण एव हि ॥२९॥
तस्माच्छ्रद्धामृते लोकोऽवसीदेदश्वसन् ध्रुवम् ।
तस्माच्छ्रद्धां दृढां प्राप्य सुखमात्यन्तिकं व्रज ॥३०॥
श्रद्धाऽवरे न कार्येति मन्यसे यदि तच्छृणु ।
इयं च श्रद्धयैवास्ते प्रवृत्तिर्नृपतेः सुत ॥३१॥
तत् कथं ते प्रवृत्तिः स्यादिति श्रुत्वा प्रियावचः ।
हेमचूडः प्राह पुनः प्रियां कुशलभाषिणीम् ॥३२॥
नूनं प्रिये सर्वथैव श्रद्धातव्यं यदा भवेत् ।
श्रद्धा सत्सु विधातव्या [1]यया श्रेयः समाप्नुयात् ॥३३॥

एकान्तग्रहणे वा श्रद्धा तव कथं प्रतिष्ठिता स्थिता । श्रद्धामपह्नुवानस्य[2] तव केषुचित् स्थानेषु कार्यकारणयोः साहचर्यानुभवमात्रेण परोक्षे भाविकार्येऽपि कारणसाहचर्यसम्भावना कुत इत्यभिप्रायः । यद्वा सुखाद्यनुभवरूपफलादपह्नोतुमशक्यात् प्रवृत्तिः सिद्धा । सिद्धायां प्रवृत्तौ श्रद्धामूलकत्वं न भवेदेकान्तग्रहणमूलकत्वमेव भवेदिति वा श्रद्धा कुत इति—तत्रापीति । एकान्तग्रहणात् [3]प्रवृत्तिरिति स्वीकारेऽपि । एवं सत्यपि श्रद्धा त्वयाऽभ्युपगतेति भावः ॥ २९ ॥ यस्माच्छ्रद्धां विना प्रवृत्तिर्न घटते, तस्मात् श्रद्धामृते प्रवृत्त्यभावाल्लोकव्यवहारो नश्येत् । अश्वसन्निति । उच्छ्वासनिश्वासयोस्तन्निरोधे च संशयादप्रवृत्तिः स्यादिति तात्पर्यम् । यस्माच्छ्रद्धां विना व्यावहारिकमपि सुखं न भवेत्तस्मात् । मदुक्तौ श्रद्धां प्राप्य ॥ ३० ॥ ननु श्रद्धा विद्वद्वचनेषु कार्या, नावरे निकृष्टे स्त्रीमूढादिवचन इति तदाक्षेपमनूद्य परिहरति—श्रद्धेति । इयमिति । अवरे श्रद्धा न कर्तव्येत्यभ्युपगमरूपा प्रवृत्तिरपि श्रद्धयैव भवेदिति भावः ॥३१॥ यदि श्रद्धा न स्यात्तदा प्रोक्ताभ्युपगमरूपा प्रवृत्तिः कथं स्यादित्याह—तदिति ॥ ३२ ॥ सर्वथा वरावरत्वविचारं विना ।

१. यथा—क० ख० । २ ह्नुवतः—ख० ।
३. प्रवृत्तिस्वी—ग० ।

असत्सु नो विधातव्या श्रद्धा श्रेयोऽभिवाञ्छिना ।
अन्यथान्तः सुनिशिते कुटिले बडिशे यथा ॥३४॥
बहिःसमे सुपिष्टेन मीनानां नाशमाप्नुयात् ।
तस्मात् सत्स्वेव कर्तव्या श्रद्धा नासत्सु कुत्रचित् ॥३५॥
असत्सु कृत्वा श्रद्धां ये नाशमीयुः परेऽपि च ।
सत्सु श्रेयोयुजः श्रद्धावशतस्ते निदर्शनम् ॥३६॥
अतः प्रतीत्यैव युक्ता कर्तुं श्रद्धा न चान्यथा ।
तत् कथं ते प्रवृत्तिः स्यादिति प्रश्नः कथं तव ॥३७॥
इत्युक्ता हेमलेखा सा पुनराह पतिं प्रियम् ।
शृणु राजकुमारेदं प्रोच्यमानं मया वचः ॥३८॥
यदात्थ त्वं कथं प्रश्न इति तत्र ब्रवीमि ते ।
[1]अयं सन् वा ह्यसन् वायमिति ते निश्चयः कुतः॥३९॥

तदा श्रद्धा सत्स्वित्यादि, महाजनोक्तवत्, मीनानामिव नाशमाप्नुयादिति व्यवहितेन सम्बन्धः ॥ ३३ ॥ अन्यथा [1]असति बडिशे, श्रद्धया मीना यं नाशमाप्नुयुस्तं नाशमाप्नुयात्। यतोऽसति श्रद्धया नाशः, तस्मात् ॥३४-३५॥ ये मीना इवासत्सु श्रद्धया नष्टाः, ये च सत्सु श्रद्धया श्रेयोयुक्तास्ते सर्वे मदुक्तौ निदर्शनम् उदाहरणम् ॥ ३६ ॥ सदिति प्रतीत्या ज्ञात्वैव श्रद्धा कर्तुं युक्ता। एवं सति तत् कथं ते प्रवृत्तिरिति[2] प्राक्कृतः, प्रश्न आक्षेपः, कथम् ? न सर्वथाऽहं श्रद्धाप्रतिषेधपरः, सत्सु श्रद्धा कार्या नान्यत्रेति सतां महाजनानां वाक्यादेवमहं प्रवृत्त इति भावः ॥ ३७-३८ ॥ सत्सु श्रद्धा कार्येति यद्वाक्ये तव श्रद्धा सोऽयं पुरुषः सन्नेवेति कथं ते निश्चयः ॥ ३९ ॥ अन्य-

---

1. असति असज्जनस्थानीये, न त्वविद्यमाने ।

१. अर्थ-क० । २. 'इति' नास्ति-ग० ।

सत्यस्मिन् निश्चये भूयाच्छुभं सच्छ्रद्धयेह वै ।
सोऽपि लक्षणतः स्याच्चेच्छ्रद्धा लक्षणसङ्गता ॥४०॥
प्रमाणाल्लक्षणज्ञानमिति चेत्तत्र संशृणु ।
अश्रद्धस्य प्रमाणं किं भवेत्तत् सुनिरूप्यताम् ॥४१॥
अन्यथा हि प्रमाता नो विसंवाद्येत कुत्रचित् ।
तस्माच्छ्रद्धां समाश्रित्य लोकः सर्वः प्रवर्तते ॥४२॥
तत्प्रकारं प्रवक्ष्यामि शृणु निश्चलचेतसा ।
अनवस्थिततर्को वा ह्यतर्को वापि सर्वथा ॥४३॥

वाक्येनेति चेदनवस्थेत्यभिप्रेत्याह—सत्यस्मिन्निति । अयं निश्चय एव न घटत इति तात्पर्यम् । सोऽपि सन्निति निश्चयोऽपि । लक्षणतः असद्व्यावृत्तिधर्मेण । श्रद्धेति । इदमस्य लक्षणमित्यन्यवाक्येनेदं लक्षणज्ञानं भवितव्यं चेदनवस्था तदवस्थैवेति भावः ॥ ४० ॥ प्रमाणादिति । अन्वयव्यतिरेकाभ्यामित्यर्थः । अश्रद्धस्य प्रमाणं किमिति । अयमाशयः—परे ह्यागमे श्रद्धयैव प्रवृत्तिरुपपद्यते, न शुष्कतर्केण । पार्थिवत्वलोहलेख्यत्वयोः सहचारस्य भूयो गृहीतत्वेऽपि हीरके व्यभिचारदर्शनान्न केवलतर्केण किञ्चिज्ज्ञातुं शक्यत इति ॥ ४१ ॥ तस्मात् पुरुषार्थसाधनप्रवर्तकमविसंवादिप्रमाणमागमान्नान्यदित्याह—अन्यथेति । सदागमस्यैवान्यप्रमाणानामपि [1]दुष्टत्वाभावसम्भावनया सर्वथाऽविसंवादकत्वे प्रवृत्तः प्रमाता न क्वापि विसंवाद्येत प्रवृत्त्युद्दिष्ट[2]फलाप्राप्त्या परिभूयेत । यस्मादन्यप्रमाणानां विसंवादकत्वसम्भावना तस्मात् । सदागमे श्रद्धामाश्रित्यैव कृषीबलोऽप्यागमाश्रयेण सुमुहूर्तविघ्ननिरसनादिपूर्वकं प्रवर्तते । तत्र च दृश्यमानः क्वचिद्विसंवादो न प्रमाणदोषकृतः, किन्तु सामग्रीवैकल्यकृत एव । अत एव तस्यैव तत्रैव भूयः सामग्रीसाकल्यसम्पादनाभिमानेन प्रवृत्तिरुपपद्यत

१. दृष्ट—क० ख० । २. फल—घ० ।

श्रेयो न प्राप्नुयाल्लोक इह वापि परत्र वा ।
तत्रातर्कस्य कालेन भवेच्छ्रेयः कदाचन ॥४४॥
अनवस्थिततर्कस्य न श्रेयः स्यात् कथञ्चन ।
पुरा सह्यगिरौ गोदावरीतीरे हि कौशिकः ॥४५॥
न्यवसच्छान्तसुमतिर्ज्ञातलोकसतत्त्वकः ।
तस्य शिष्यास्तु [1]शतशः स्थिता गुरुसमाश्रयात् ॥४६॥
तं एकदा गुरुमनु गता लोकस्य संस्थितिम् ।
निर्णेतुं बुद्ध्यनुगुणं तदा प्रोचुः परस्परम् ॥४७॥
तत्राजगाम शुङ्गाख्यो विप्रः कश्चिन्महाबुधः ।
स सर्वेषां मतं प्रोक्तं दूषयद्बुद्धिकौशलात् ॥४८॥

इति भावः ॥ ४२ ॥ तत्प्रकारं श्रद्धया श्रेयःप्राप्तिप्रकारम् । अनवस्थिततर्कः शुष्कतर्कवान् । अतर्को मूढः ॥ ४३ ॥ श्रेयो नेति । आद्यस्यानाश्वासेनाप्रवृत्तेः । द्वितीयस्य सामग्रीवैकल्यसम्भवात् । अन्धप्रक्षिप्त[2]लोष्टाघातेन फलपातवद् द्वितीयस्य श्रेयः कदाचित् सम्भाव्यत इत्याह—तत्रेति । तयोर्मध्ये इत्यर्थः ॥ ४४ ॥ अनवस्थिततर्कस्य श्रेयो न कथञ्चिदित्यत्रेतिहासमाह— पुरेति ॥ ४५ ॥ शान्तश्चासौ सुमतिश्च । कामाद्यनाहतस्वभावः श्रद्धाभक्तिप्रचुरमतिश्च । अत एव ज्ञातलोकसतत्त्वकः । लोक्यते दृश्यते इति लोको दृश्यम् । "दृश्यस्य हि परं तत्त्वं यत्प्रकाशः परः शिवः" इत्यागमरीत्या अधिष्ठानप्रकाशमात्रं सतत्त्वं स्वरूपं ज्ञातं येन ॥ ४६ ॥ ते शिष्याः । गुरुमनु पश्चात् । गुरोः परोक्ष इति यावत् । लोकस्य स्थितिं निर्णेतुं गताः सङ्गताः सन्तः, तदा तन्निर्णयाय स्वबुद्ध्यनुगुणं यथा तथा परस्परं प्रोचुः ॥ ४७ ॥ तत्र कौशिकशिष्यसमाजे । महाबुधः शुष्कतर्कनिपुणः । यद्वा महांश्चासावबुधश्च अज्ञातलोकसतत्त्व इति भावः । स शुङ्गः । सर्वेषां कौशिक-

१. बहुशः—ग० । २. लोष्ट—ख० ग० घ० ।

अश्रद्धया हतप्रज्ञो विवादनिपुणस्तदा ।
प्रमाणात् प्रमितं सत्यमित्युक्तेषु द्विजेष्वथ ॥४९॥
अनवस्थिततर्को वै प्राह तर्कैकसंश्रयः ।
शुङ्गाख्य आक्षिपन् सर्वान् तत्र वादकथान्तरे ॥५०॥
विप्राः शृणुध्वं मद्वाक्यं सत्यं न क्वापि सिध्यति ।
प्रमितं यत् प्रमाणेन तत् सत्यमिति हीरितम् ॥५१॥
तत्र तेन दोषयुजा भवेदप्रमितं [1]ननु ।
निश्चेतव्या ततस्त्वादौ प्रमाणानामदुष्टता ॥५२॥
सा प्रमाणान्तरकृता तत्राप्येवं विचिन्त्यताम् ।

शिष्याणाम्। बुद्धिकौशलात्। नागमानुरुद्धयुक्त्याऽदूषयत्, किन्तु केवलं बुद्धिकौशलात्। शुष्कतर्कैरिति भावः ॥ ४८ ॥ कुतस्तस्यागमानादर इति चेदाह—अश्रद्धयेति । अत एव विवादनिपुणः सन्, वितण्डामाश्रित्येति यावत्। तदा कौशिकशिष्याणां दृश्यतत्त्वनिर्णयोपयुक्तकथाकाले। निर्दुष्टप्रमाणप्रमितं सत्यमिति तेषूक्तेषु। अथाहेत्यन्वयः ॥ ४९ ॥ अनवस्थिततर्कः शुङ्गाख्यः। शुष्कतर्काश्रयः। वादकथान्तरे। जल्पवितण्डाभिन्नकथामध्ये ॥ ५० ॥ शुङ्गवाक्यं विप्रा इत्यादि। भवद्भिर्यत् साध्यते सत्यम्, न तत् क्वापि कालत्रयेऽपि सिध्यतीत्याक्षेपः। प्रमितमित्यादि कौशिकशिष्यमतानुवादः। इति हि भवद्भिरीरितम् ॥ ५१ ॥ तत्र प्रमाणेषु मध्ये दोषयुक्तप्रमाणेन भातमप्रमितमसत्यं ननु। अत आदौ सत्यासत्यपरीक्षकेण पमाणानामदुष्टता निश्चेतव्येत्याह—निश्चेतव्येति। नहि भासनमात्रेण सत्यत्वं कस्यचित्, शुक्तिरजतादेः सत्यत्वप्रसङ्गात्। अतोऽदुष्टप्रमाणप्रमितस्यैव सत्यत्वात्। प्रमाणादुष्टत्वनिश्चयाधीन एव भावसत्यत्वनिश्चय इति भावः ॥ ५२ ॥ प्रमाणादुष्टत्वनिश्चयोऽपि प्रमाणान्तराधीन इत्यनवस्थया मूलक्षति-

1. न तु-ग०।

इत्येवमनवस्थानाद् न किञ्चित् प्रमितं भवेत् ॥५३॥
अतः प्रमाता प्रमितं प्रमाणं वा न सिध्यति ।
तस्माच्छून्याश्रयो ह्येष विकल्पो विविधः स्थितः ॥५४॥
सोऽपि शून्यात्मतां प्राप्तः प्रमाणाविषयत्वतः ।
तस्माच्छून्यं न किञ्चित् [1]सदित्येष प्रविनिर्णयः ॥५५॥
इति शुङ्गवचः श्रुत्वा तेषु केचिद् द्विजाधमाः ।
तं श्रिता निश्चयाभासं बभूवुः शून्यवादिनः ॥५६॥
विनाशमीयुस्तन्निष्ठाः शून्यभावं परं गताः ।

कर्या न क्वचित् सत्यत्वं सिध्यतीत्याह--सा प्रमाणेति ॥ ५३ ॥ अतः प्रमाणादुष्टत्वानिश्चयात् । प्रमितं दृश्यम् । सत्यं न सिध्यति । तस्मात् सत्यत्वासिद्धेः । अहमिदं चक्षुषा पश्यामीत्यादि विविधो विकल्पः शून्यालम्बन एव । न चानुमानादिप्रमाणैरभिमतसिद्धिः, उक्तदोषग्रस्तत्वात्, तेषां प्रत्यक्षोपजीव्यत्वाच्च । न च शून्यं वा [2]तव कथं सिद्ध्यतीति वाच्यम्, शून्यसिद्धौ प्रमाणव्यापारानुपयोगात्, इतरासिद्धिमात्रात्मकत्वात् तस्येति ॥ ५४ ॥ अत एवाह—सोऽपीति । शून्यपदार्थोऽपि शून्यतां प्राप्तः, निश्चितादुष्टप्रमाणाविषयत्वात् । तस्मात् शून्यमिति न किञ्चिद्वस्तु स्यात्, इतरासिद्धिमात्रात्मकत्वात् तस्य । यद्वा ननु प्रमातृप्रमाणप्रमेयसिद्धावपि विकल्पधारायाः स्वप्रकाशायाः सत्त्वान्न शून्यमात्रशेष इति चेदाह—सोऽपीति । विकल्पोऽपीत्यर्थः । तस्यानवस्थया प्रमाणान्तराविषयत्वात् स्वप्रकाशत्वे कर्तृकर्मभावविरोधात् सोऽपि शून्यात्मतां प्राप्तः । तस्माद्विकल्परूपमपि सन्न सिध्यतीति शून्यमेवेति प्रविनिर्णयः ॥ ५५ ॥ तेषु कौशिकशिष्येषु मध्ये । द्विजाधमाः असारहृदयाः । तं शुङ्गसिद्धान्तम् ॥ ५६ ॥ सर्वस्य शून्यतानिश्चयेन स्वात्मानमपि शून्यं मन्यमानाः शून्यभावं स्थावरतां

१. [1]स्यादि-क० ख० घ० । २. तर्केण-ख० ग० ।

ये द्विजाः सारहृदयास्ते शुङ्गस्य प्रभाषितम् ॥५७॥
निरूप्य कौशिके तेन समाहितहृदोऽभवन् ।
तस्मात् सर्वात्मना त्यक्त्वा तर्कं तमनवस्थितम् ॥५८॥
सदा सदागमायत्ततर्कः श्रेयः समाप्नुयात् ।
इति प्रोक्तो हेमचूडः प्रिययाऽत्यन्तधीरया ॥५९॥
पुनः पप्रच्छ चात्यन्तविस्मितस्तां महाशयाम् ।
अहो प्रिये ते वैदुष्यमीदृशं नाविदं पुरा ॥६०॥
धन्यासि त्वमहं चापि धन्यो यस्त्वामुपागतः ।
ब्रवीषि श्रद्धया सर्वश्रेयःसिद्धिं हि तत् कथम् ॥६१॥
कुत्र श्रद्धा विधातव्या कुत्र वा सा न शस्यते ।
आनन्त्यादागमानां वै विरुद्धार्थसमाश्रयात् ॥६२॥
आचार्यमतभेदाच्च व्याख्यातृमतभेदतः ।
स्वबुद्धेरनवस्थानात् किमादेयं न वापि किम् ॥६३॥

प्राप्ताः । न त्वभावरूपतां गताः, वस्तुतो भावस्याभावत्वानुपपत्तेः । सारहृदयाः सारं विचारपरं हृदयं मनो येषाम् ॥५७॥ तेन कौशिकोक्तेन । शङ्काया नाशात् समाहितहृदः । यतोऽनवस्थिततर्कस्यानर्थसम्पत्तिः, तस्मात् ॥५८॥ सदागमस्यायत्तोऽनुकूलस्तर्को यस्य । धीरया पण्डितया ॥ ५९ ॥ असम्भाव्यमानां योषिति विद्वत्तां दृष्ट्वा विस्मितः ॥ ६० ॥ उपागतः सङ्गतः ॥ ६१ ॥ आगमे श्रद्धा विधेयेत्युक्ते आगमानामप्य-नैक्यात् कुत्र श्रद्धा कर्तव्येति पृच्छति—कुत्रेति । सा श्रद्धा । अनैक्येऽ-प्यागमानामर्थैक्याद्यत्र क्वचिच्छ्रद्धां कुर्विति चेदाह—विरुद्धेति ॥ ६२ ॥ न विरुद्धार्थत्वं बौद्धार्हतवेदाद्यागमानामेव परस्परम्, अपि त्वेकैका-गमेऽप्याचार्यमतभेदादपि विरोध इत्याह—आचार्येति । स्पष्टं चैतत् । तथाहि—वैदिकाद्यागमाचार्याणां जैमिनिपतञ्जलिप्रभृतीनां परस्परं मत-विरोध इति । तथा जैमिनिशास्त्रव्याख्यातॄणां शबरकुमारिलप्रभृतीनां

यद्यस्याभिमतं [1]तत् स वदत्येव सुनिश्चितम् ।
अन्यच्चाप्यव्यवसितं हानिप्रदमपि प्रिये ॥६४॥
तत्रैव सति नैवान्तं कश्चिदत्रापि गच्छति ।
यः शून्यमाह तत्त्वं सोऽप्यशून्यं दूषयेत् परम् ॥६५॥
अश्रद्धेयं कुतो वा तत् सङ्गतं चागमेन हि ।
एतद् ब्रूहि प्रिये सम्यग् नह्येतत्तेऽस्त्यचिन्तितम् ॥६६॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये ज्ञानखण्डे हेमचूडोपाख्याने श्रद्धाप्रशंसनं नाम षष्ठोऽध्यायः ॥



परस्परं व्याख्याविरोधः । नन्वेवं परस्परविरोधेऽपि स्वबुद्ध्या विचार्य यच्छ्रेष्ठं तच्छ्रद्धेयमिति चेदाह—स्वबुद्धेरिति । विचारो हि तर्करूपः । तथा सति तर्कस्य बुद्धिविभवत्वेन बुद्धेः कालभेदेन स्थितिभेदादेकस्यैव पुरुषस्य कालभेदेन विविधतर्कसम्भवादनवस्थानमिति भावः ॥ ६३ ॥ आचार्यादिपरस्परविरोधमेवाह—यदिति । तत् साधनत्वेन वदति । अन्यत् अनभिमतम् । अव्यवसितं साधनत्वेनानिश्चितम् ॥६४॥ तत्र आगमेषु । एवं सति विरोधे सति । अन्तं निश्चयम् । अत्रापि विचारे कृतेऽपि ॥ ६५ ॥ शून्यवादिनापि शुङ्गेन [2]शून्यं तत्त्वमुक्तम् । अशून्यतत्त्ववादो दूषितः । आगमेन च तन्मतं सङ्गतमेव, तस्मात्तन्मतं कुतो न श्रद्धेयमेतन्मे वदेत्याह—अश्रद्धेयमिति । यद्यप्येष दुरुद्धराक्षेपः, तथाप्येतत् त्वया चिन्तितमस्तीति सम्भाव्यते, तव सर्वज्ञकल्पत्वादित्याशयेनाह—नह्येतदिति ॥ ६६ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां षष्ठोऽध्यायः ॥ ६ ॥



---

१. तत्तत् सदित्येव–ख० । २. शून्यतत्त्व–ग० ।

# अथ सप्तमोऽध्यायः

इति पृष्टा हेमलेखा भर्त्रा प्रियतरेण सा ।
प्रोवाच विदुषी सम्यग् विज्ञातलोकसंस्थितिः ॥१॥
शृणु वक्ष्ये प्रियतम [1]स्थिरस्वान्तः समादरात् ।
मनो हि मर्कटप्रायमस्थिरं सर्वदैव तत् ॥२॥
यत एवं महानर्थं प्राप्तवान् प्राकृतो जनः ।
चलन्मनः सर्वदुःखनिदानं दृष्टमेव हि ॥३॥
यतः सुषुप्तौ चलनाभावाद्विन्दति वै सुखम् ।
तस्मान्मनः स्थिरीकृत्य शृणु यत्ते ब्रवीम्यहम् ॥४॥
अनादरेण श्रुतं च भवेदश्रुतसम्मितम् ।
अफलं स्यात्तदत्यन्तं यथा चित्रतरुश्रयः ॥५॥

अत्राध्याये वेद[ध]पद्यैः श्रद्धापौरुषतर्कतः ।
शिवं ज्ञात्वाराध्य ततो लभेच्छ्रेय इतीर्यते ॥

विज्ञाता लोकस्य संस्थितिरधिष्ठानं स्वरूपं[2] वा यया ॥१॥ स्थिरस्वान्तोऽनन्यचित्तः । समादरात् इदं मया श्रोतव्यमेवेत्यभिनिवेशात् । एतद्द्वयस्यापि क्रमेण फलमाह—मन इति । न स्वभावतो मनसः स्थैर्यमिति भावः । यत एवं तत् तस्मात् स्थिरस्वान्त इति योजना ॥ २ ॥ तदस्थैर्येण किं मे भवेदिति चेदाह—यत इति । मनसश्चलनादित्यर्थः ॥ ३ ॥ मनसश्चलनादेव दुःखमिति व्यतिरेकतो दर्शयति—यत इति । सर्वोऽपि विन्दति । तस्मादिति । नित्यप्राप्तस्वरूपसुखफलविघटकस्य मनश्चलनस्य श्रवणफलविघटकत्वं सुतरां [3]भवेदेवेति तात्पर्यम् ॥४॥ अनादरेण श्रुतम् । अश्रद्धया असमाहितमनसा आपाततः श्रुतम् । अफलमिति । नास्ति फलं यस्य तत् । नह्येतद्वक्ष्यमाणं गान-

१. स्थिरशान्त–क० । २. 'स्वरूपं' नास्ति–क० । ३. भवेदिति–क० ।

अनवस्थिततर्कत्व[र्कं तं]मपहाय विनाशनम् ।
सत्तर्कमाश्रित्य जन प्राप्नुयात् सुफलं द्रुतम् ॥६॥
सत्तर्कसंश्रयेणाशु साधनैकपरो भवेत् ।
सत्तर्कजनितां श्रद्धां प्राप्येह फलभाग् नरः ॥७॥
अनवस्थिततर्कं तं विहायालोकय प्रिय ।
प्रवृत्तिमेतां जगतः श्रद्धया फलशालिनीम् ॥८॥
सुतर्कितेन कालेन कर्षकः क्ष्मां विकर्षति ।
श्रद्धयैव तथा रूप्यस्वर्णरत्नौषधादिकम् ॥९॥

मित्र श्रुतिमात्रेण फलावहम्, किन्तु [1]मननादिद्वारेण। तथा चादराभावे मननादावप्रवृत्तेः चित्रलिखितवृक्षाश्रयवद् व्यर्थं श्रवणं स्यादिति भावः। तत् श्रवणम् ॥ ५-६ ॥ ननु मम शुष्कतर्कं सन्त्यज्य त्वदुक्तौ विश्रब्धस्यापि सत्तर्कपरस्य न फलप्राप्तिर्दृश्यते? इति चेदाह—साधनैकपर इति। नन्वलं सत्तर्केण, कुतर्कस्यापि मे साधनपरत्वेनैव फलं भवेदिति चेदाह—सत्तर्केति। कुतर्कस्य वक्ष्यमाणसत्तर्कमूलकेश्वरसिद्धेर्दुर्घटत्वेन तदाराधनश्रद्धा दूरतोऽपास्तेति केवलाराधनस्य "अश्रद्धया हुतं दत्तम्''''न च तत् प्रेत्य नो इह" [भ० गी० १७।२८] इति नीत्या [2]निष्फलत्वमिति सत्तर्कजनितश्रद्धया साधनपरोऽत्र फलभाग् भवतीत्याशयः ॥ ७ ॥ तं [3]प्रसिद्धत्वेन त्वयि स्थितम्। अनवस्थिततर्करहितानां श्रद्धावतां फलशालिनीं प्रवृत्तिमवलोकय। तत्फलस्य न परोक्षत्वमिति भावः ॥८॥ तां प्रवृत्तिमेवाह—सुतर्कितेनेति। आगमाविरुद्धस्तर्कः सुतर्कः। शास्त्रोक्तहलप्रवाहणयोग्यस्तर्कितानावृष्ट्यादिसस्यप्रतिबन्धाभाववांश्च यः कालः, तेन निमित्तेन कर्षति। न तु तर्कानवस्थित्या सर्वत्राश्रद्धया त्वमिव तूष्णीं तिष्ठतीति भावः

१. मननादिविचारेण—ख० ।   २. निष्फलमिति-क० ।
३. प्रसिद्धं—क० ।

व्यवस्यन्ति सुतर्केण त्यक्त्वा तर्कानवस्थितिम् ।
तस्मात् सुतर्कश्रद्धाभ्यां व्यवस्य श्रेय आत्मनः ॥१०॥
[1]प्रयतेत्तत्साधनाय नहि तर्कानवस्थितेः ।
विरमेत् पौरुषाद् यत्नाच्छुङ्गानुगनरा इव ॥११॥
श्रद्धया पौरुषपरो न विहन्येत[2] सर्वथा ।
दृढं पौरुषमाश्रित्य न प्राप्येत कथं फलम् ॥१२॥
पौरुषात् कर्षका धान्यं वणिजो धनमेव च ।
राज्यलक्ष्मीं नृपा विप्रा विद्यां सर्वसुखाश्रयाम् ॥१३॥
शूद्रा भृतिं सुधां देवास्तापसा लोकमुत्तमम् ।
प्रापुरन्येऽप्यभिमतं पौरुषेणैव कर्मणा ॥१४॥
अनवस्थिततर्केणाश्रद्धेन पुरुषेण किम् ।
कदा किञ्चित् कथं प्राप्तं फलं वद विमृश्य तत् ॥१५॥

॥ ९ ॥ तथा पूर्वस्मादिदमतिसूक्ष्मलक्षणमपि स्वर्णादिकमेतावन्मौल्यार्हमेवंविधगुणमेतद्रोगहरमिति परीक्षका आगमतर्काभ्यामेव व्यवस्यन्ति, प्रायो न विसंवाद्यन्ते चेत्याह—व्यवस्यन्तीति । सुतर्कः पुरुषः क्वचिद्विसंवाद्यते, न त्वनवस्थिततर्कवत् सर्वशून्यत्वेनात्मापहारं प्राप्नोतीति यतः, तस्मात् । आत्मनः श्रेयो व्यवस्य निश्चित्य तत्साधनाय यतेदिति सम्बन्धः ॥ १० ॥ शुङ्गानुगता नरा इवासत्तर्केण सर्वशून्यत्वं सम्भाव्य पौरुषयत्नविमुखो न भवेदित्याह—नहीति ॥११॥ पौरुषं पुरुषयत्नः[3] । [4]फलाप्राप्त्या न विहन्येत[5] । केषाञ्चित् फलाभावो [6]ह्यदृढपौरुषादित्याह—दृढमिति ॥ १२ ॥ दृढपौरुषयोगान्ना[7]फलमिति सप्रत्ययमाह—पौरुषादिति ॥ १३–१४ ॥ किञ्चिदपि किं

१. प्रयतेत सा–क० । २. न्यते–क० । ३. प्रयत्नः–घ० ।
४. फल–क० ख० । ५. न्यते–क० । ६. ह्यदृष्ट–घ० ।
७. न फलमिति–क०, नां फलमिति–घ०, न फलं कथमिति–ख० ।

क्वचित् फलविसंवादात् सर्वत्राश्वासवर्जने ।
विजानीयाद् दैवहतं तं स्वात्मरिपुरूपिणम् ॥१६॥
अतः पौरुषमाश्रित्य श्रद्धासत्तर्कपोषितम् ।
श्रेयसां यन्मुख्यतमं साधनं तत् समाश्रयेत् ॥१७॥
तत्र दृष्टं[1] साधनानां वैचित्र्यं च पृथग्विधम् ।
तेषु यत् सर्वथा साध्यं साधयेत्तद्धि मुख्यकम् ॥१८॥
तत् सुतर्कानुभूतिभ्यां व्यवस्याशु समारभेत् ।
तत्ते सर्वं प्रवक्ष्यामि सावधानः[2] शृणुष्व तत् ॥१९॥
श्रेयस्तद्धि विजानीयाद्यस्माद् भूयो न शोचति ।

फलं कदा काले साधनं विना कथं प्राप्तम् ॥१५॥ ननु कर्षकादीनामपि क्वचित् फलाभावो दृश्यत इति चेत्तावतैवाप्रवृत्तिर्मौर्ख्यमूलैवेत्याह—क्वचिदिति। आश्वासः श्रद्धा ॥ १६ ॥ श्रद्धासत्तर्काभ्यां पोषितम्। सत्तर्केण श्रद्धोदयः श्रद्धया च पौरुषस्य वृद्धिर्भवेदिति भावः। ननु श्रेयःसाधनमपि कर्मयोगादिकं शास्त्रेषु बहुविधं प्रसिद्धम्, तत्र कतमं [मत्] साधनं समाश्रयेदिति चेदाह—श्रेयसामिति ॥ १७ ॥ [3]ननु श्रेयःसाधनस्य मुख्यत्वं किं तदिति चेदाह—तत्रेति। फलप्राप्तावित्यर्थः। पृथग्विधं दृष्टमिति शेषः। तेषु विचित्रत्वेन पृथग्दृष्टेषु साधनेषु। साध्यं फलं सर्वथा यत् साधयेत्। "नेहाभिक्रमनाशोऽस्ति" [भ० गी० २।४०] इत्यादिनीत्या फलविपर्ययो नेत्युक्तम्—सर्वथेति ॥ १८ ॥ एतदपि वा कथं निश्चेतव्यमिति चेदाह—तदिति। व्यवस्य निश्चित्य। तत्र नृदेहस्य श्रेयोनिदानस्य दुर्लभस्य मृत्युग्रस्तत्वेनाह—आश्विति। निश्चयो वा मम कथं स्यादिति चेदाह—तदिति। मुख्यं श्रेयस्तत्साधनं चेत्यर्थः ॥ १९ ॥ तत्रादौ मुख्यं श्रेयः-

१. दृष्टसाध-क०। २. धानं-ख०। ३. 'ननु' नास्ति-क०।

शोकः सर्वत एव स्याद् दृश्यते सूक्ष्मया दृशा ॥२०॥
यच्छोकैरनुसंभिन्नं न तच्छ्रेयो हि सर्वथा।
धनं पुत्रास्तथा दारा राज्यं कोशो बलं यशः ॥२१॥
विद्या बुद्धिर्दर्शनं च देहः सौन्दर्यसम्पदः।
सर्वमेतदस्थिरत्वात् कालसर्पमुखस्थितम् ॥२२॥
शोकाङ्कुरमहाशक्तिबीजात्मकतया स्थितम्।
कुत आत्यन्तिकश्रेयःसाधनत्वं समर्हति ॥२३॥
अतः परमकं श्रेय एतद्वै मुख्यतो भवेत्।
एवं धनादिविषये यदादेयत्वविभ्रमः ॥२४॥
मोहादेव समुद्भूतो मोहको हि महेश्वरः।
यो हि सर्वजगत्कर्ता तस्मात् सर्वे हि मोहिताः ॥२५॥

पदार्थमाह—श्रेय इति। ननु तादृशं धनादिकमेवेति चेन्नेत्याह—शोक इति। कथं धनादेः शोक इति चेदाह—[2]दृश्यत इति। विवेकदृशा सर्वतः शोको दृश्यते ॥ २० ॥ तदेवाह—यदिति। अनुसंभिन्नं युतम् ॥ २१ ॥ अन्तरमाह—विद्येत्यादि। दर्शनं करणम्। सौन्दर्यस्य सम्पदः प्राप्तयः। एतत् सर्वं नाशग्रस्तमिति शोकावहत्वाद् दुःख[3]युतमित्याह—सर्वमिति ॥ २२ ॥ शोकाङ्कुरोत्पादने महाशक्तियुतबीजवद् अङ्कुरशक्तेः साधारणोपायैरनाश्यत्वमिति भावः। तस्मादेवंविधस्य नैवात्यन्तिकश्रेयःसाधनत्वमित्याह—कुत इति ॥ २३ ॥ अतो धनादेर[4]साधनत्वात्। श्रेयः श्रेयःसाधनम्। एतद् वक्ष्यमाणं देवताराधनम्। कथं देवताराधने नैव श्रेयोलाभ इत्येतन्निरूपयितुमाह—एवमिति। श्रेयःसाधनत्वेनेत्यर्थः। यदिति। यो विभ्रम इत्यर्थः ॥२४॥ कोऽयं मोहक इति चेदाह—महेश्वर इति। कथम्भूतो महेश्वर इति चेज्जगत्कर्तृत्वेन सिद्धो नापह-

१. एवास्य–ख०। २. 'दृश्यत इति' नास्ति–क०।
३. 'युत' नास्ति–ग०। ४. देः साध–क०।

मोहयत्यल्पकोऽपीह विद्याभागसमाश्रयात् ।
कांश्चिदेव न सर्वान् स यस्माद्विद्या हि सा मिता ॥२६॥
अल्पविद्यं मायिनं चाप्यनुत्क्रान्ता जना यतः ।
महादेवं महामायं कः समुत्क्रान्तुमर्हति ॥२७॥
यो हि लोकेऽल्पमायां च जानाति प्रतिविद्यया ।
स मोहान्निर्गतः स्वस्थः सुखमाप्नोत्यनश्वरम् ॥२८॥
एवंविधापि विद्या तमनाश्रित्य तु मायिनम् ।
न लभ्या सर्वथा यावदप्रसाद्य तु सर्वथा ॥२९॥
तस्मान्महामायिनं तमप्रसाद्य कथं भवेत् ।
महामोहस्य तरणं तस्मात्तं सर्वथा श्रयेत् ॥३०॥
यस्तं प्रसादयेत् सम्यक् प्राप्य तस्य प्रसादतः ।
महाविद्यां स तन्मोहाद् ध्रुवमुत्क्रान्तिमेष्यति ॥३१॥
अन्येऽपि योगाः कथिताः श्रेयःसाधनकर्मणि ।

वनीय इत्याह—यो हीति ॥ २५ ॥ कथमस्यैवं सामर्थ्यमिति चेदाह—मोहयतीति । अल्पको देहादिपरिच्छिन्न ऐन्द्रजालिकः । अस्य विद्या मितेति न सर्वमोहकत्वम् ॥ २६ ॥ मायिनमप्रसाद्य तन्मोहतरणमशक्यमित्याह—अल्पविद्यमिति ॥ २७ ॥ अल्पमायाम् । निरोद्धुमिति शेषः । स्वस्थः तन्निर्मितसर्पादिभयरहितः । अनश्वरं तन्माययाऽविनाश्यम् ॥ २८ ॥ एवंविधापि अल्पमायाप्रतिरोध्री[1] विद्यापि । तम् अल्पमायिनम् । यावत् यस्मात् । अनाश्रित्य सर्वथा धनदानसेवनाद्यैरप्रसाद्य न लभ्या । सर्वथा तमप्रसाद्येत्यग्रिमेण सम्बन्धः ॥२९॥ तस्मात् अप्रसादने मोहतरणाभावात् ॥ ३० ॥ सम्यक् अकापट्येन । महाविद्याम् अद्वितीयशिवात्मविद्यां प्राप्य, महामायास्वरूपं वेदेति शेषः। तन्मोहात् महामायाकृतमोहात् ॥३१॥ योगाः युक्तयः प्राणायामादिरूपाः।

१. रोधिविद्या—क० ख० ।

महेश्वरप्रसादात्ते विना न स्युः फलाप्तये ॥३२॥
तस्मादाराधयेदादौ महेशं विश्वकारणम् ।
भक्त्या स साधयेदाशु योगान्मोहविनाशनान् ॥३३॥
एतज्जगत् कार्यभूतं प्रत्यक्षं परिदृश्यते ।
सांशमेवं पृथिव्याद्यमदृष्टारम्भमप्यलम् ॥३४॥
कार्यं स्यादिति तर्केण बह्वागमदृढेन तु ।

श्रेयःसाधनकर्मणि हेतुत्वेनेति शेषः ॥ ३२ ॥ तस्मादिति । यस्मादीश्वराराधनं विना किमपि साधनं फलपर्यवसायि न भवेत्तस्मादित्यर्थः । आदाविति । सर्वसाधनोपक्रम इत्यर्थः । कुत एवमिति चेदाह—विश्वकारणमिति । तस्य सर्वकर्तृत्वेन तदनुग्रहं विना न किञ्चित् सेत्स्यतीति भावः ॥ ३३ ॥ कथमेष ईश्वरो जगत्कर्तृत्वेन सिध्यतीत्याशङ्क्येश्वरं प्रसाधयितुमुपक्रमते—एतदिति । प्रत्यक्षेण दृश्यमानमित्यर्थः । तच्च जगत् कार्यभूतमेव[1] प्रत्यक्षं यथा तथा[2] परिदृश्यते । ननु घटादीनां कार्यभूतत्वं दृश्यते, न तु[3] पृथ्वीसमुद्रगिर्यादीनामिति चेत्, तेषामपि सांशत्वेन हेतुना कार्यत्वं सेत्स्यतीत्याह—सांशमिति । अदृष्टारम्भमपि अदृष्टोत्पत्तिकर्मपि पृथिव्यादि ॥ ३४ ॥ यत् सावयवं तत् कार्यमिति तर्केण पृथिव्याद्युत्पत्तिमदिति भावः । नन्वेवमपि परमाण्वाकाशादीनां निरवयवत्वेनाकार्यत्वान्न जगन्मात्रं कार्यभूतमिति चेन्न, वेद्यत्वेन हेतुना कार्यत्वसिद्धेः । न च निरवयवत्वेन कार्यत्वाभावः साधयितुं शक्यः, [4]वेद्यत्वहेतुकानुमानस्य बह्वागमसंवादेन दृढतरत्वादित्याह—बह्वागमेति । तथा चागमः—"द्यावाभूमी जनयन् देव एकः" [ऋग्० १०।८१।३], "आत्मन आकाशः सम्भूतः" [तैत्ति० उ० २।१।१], "आकाशवायुप्रमुखं दृश्यं सर्वं ससर्ज सः" इत्यादयः । तथा च दृश्यमात्रस्य जगतः कार्यत्वे सिद्धे तत्र जगति कार्यत्वेन कर्तृपूर्वकत्वं साधयेदित्याह—व्यवस्येदिति । तत्र

१. मेवं—क० । २. 'तथा' नास्ति—ग० ।
३. 'तु' नास्ति—ख० । ४. वेद्यत्वे—क० ।

व्यवस्येत्तत्र कर्तारं सर्वकर्तृविलक्षणम् ॥३५॥
यद्यप्यकर्तृकं लोकमाह कश्चिदिहागमः ।
तदनेकैरागमैस्तु तर्करूढैः सुबाधितम् ॥३६॥

पृथिव्यादौ कर्तारं निश्चयविषयीकुर्यादित्यर्थः। ननु घटादितत्तत्कार्येषु सिद्धकुलालादिभिः सिद्धसाधनमित्याशङ्क्याह—सर्वकर्तृविलक्षणमिति । "नासदासीन्नो सदासीत्तदानीम्" [ ऋग्० १०।१२९।१ ] "पुरा सृष्टेरिदं दृश्यं नाणुमात्रमपि स्थितम्" इत्याद्यागमानुरोधेनानादि-सृष्टावुपादानाद्यभावात्तदनपेक्षणात् सर्वकर्तृविलक्षण एष कर्ता साधित इति भावः॥ ३५॥ नन्वागमसंवादाद्यथा जगत्कार्यत्वगमकस्तर्को दृढस्तथाऽकार्यत्वानुमापकस्तर्कोऽपि दृढः कुतो न भवेत्? "अकर्तृको ह्ययं लोकः स्वभावैकसमाश्रयः" इत्यादिबार्हस्पत्यागमसंवादादित्या-शङ्क्य, नैष सदागमः, किन्त्वागमाभास एवेति चार्वाकमतप्रक्षेपायोप-क्रमते—यद्यपीति। कश्चिदागमश्चार्वाकागमः। अत्रेयं चार्वाकप्रक्रिया—

भूमिरापोऽनलो वायुरिति तत्त्वचतुष्टयम्।
प्रत्यक्षमानसंसिद्धं पञ्चमं नहि विद्यते॥
एतत्संघातमको लोकः प्रतिक्षणविभेदितः।
पूर्वपूर्वजगज्जालसदृशं चोत्तरोत्तरम्॥
एवंस्वभाव एवैष लोकः स्वस्मिन् प्रतिष्ठितः।
गुडोदकादौ स्वाभाव्याद् मदशक्तिर्यथोद्भवेत्॥
एवं स्त्रीगर्भनिहिते शुक्रशोणितबुद्बुदे।
उत्पद्यते हि चैतन्यं क्रियाज्ञानसमाश्रयम्॥
मदशक्तियुतं तोयं मद्यमित्युच्यते यथा।
एवं चैतन्यसंयुक्तो देहः पुरुष उच्यते॥
सुखं पुमर्थः स्वर्गः स्याद् दुःखं तु नरको भवेत्।
[1]प्रवर्तते द्वयं चैतत् स्वभावादेव नान्यथा॥

१. तर्कद्वय—क०।

यत्रात्मनाश एवार्थः प्रत्यक्षैकसमाश्रयात् ।
तदागमाभासमेव न तद्धि महदाश्रयम् ॥३७॥

सुखदुःखाभास [1]एव संसारः प्रणिगद्यते ।
मदिरामदशक्तेस्तु यथा नाशः स्वभावतः ॥
एवं चैतन्यनाशो हि मोक्ष इत्युच्यते बुधैः ।
मृतस्य नास्ति स्वर्गो वा नरको वापि कश्चन ॥ [2]इति ।

तत् चार्वाकशास्त्रम्, अनेकैः आस्तिकनास्तिकसम्बन्धिभिः, आगमैः तर्करूढैः अनुगततर्कैर्बाधितम्, अतस्त्याज्यमेवेति सम्बन्धः॥३६॥ अनेकागमविरोधादाभासत्वमुक्तम् । सम्प्रति सर्वानुभवविरोधाच्च तथात्वमाह—यत्रेति । जननमरणादिप्रवाहरूपः संसारो दुःखरूपत्वाद्धेयः । [3]एतस्य संसारस्य निमित्ताभाव[4]सम्पादनेनाभावे सति महासुखस्वरूपानुभवो मोक्षः परमपुरुषार्थरूपोऽत एव सर्वैरुपादेय इति हि मोक्षस्य पुरुषार्थत्ववादिनां मतं तर्कागमाद्यैर्व्यवस्थितम् । एवं सति प्रत्यक्षैकप्रमाणसमाश्रयादात्मनाश एव पुरुषार्थ इति यत्र शास्त्रे उक्तम्, तदागमाभासमेव । अत एव तच्छास्त्रं न महतां सारासारविवेचकानामाश्रयं पुरुषार्थप्रयोजकत्वेनोपादेयम् । आत्मनाशः पुरुषार्थ इति वदन् चार्वाकः प्रष्टव्यः—किमात्मनाशो यः[5] कश्चन पुरुषार्थः ? उत तत्समुदायः ? आहोस्विदात्मसामान्यनाशः ? नाद्यः, आत्मनस्तव मते क्षणिकत्वेन यत्किञ्चिदात्मनाशस्य प्राप्तत्वात्, इतरयोरसम्भवात् । नापि स्वात्मसन्ताननाशः, स्वात्मनाशकाले स्वस्यासत्त्वेन स्वात्मनाशस्याप्राप्तव्यत्वेनापुरुषार्थत्वात् । अप्राप्तव्यस्यापि पुरुषार्थत्वेऽन्यात्मनाशस्यापि पुमर्थत्वप्रसक्तेः । अथ च स्वात्मनाशः प्रमाणेन सिद्धोऽसिद्धो[6] वा पुरुषार्थ इत्युच्यते ?

---

१. एवं—क० । २. 'इति' नास्ति—क० । ३. एतत्सं—क० ।
४. भावा—क० । ५. नाशोऽयं—क० ।
६. 'असिद्धो' 'प्रमाणेन सिद्धः ?' नास्ति—क० ।

शुष्कतर्कैकसंक्लृप्तं शास्त्रं तत् त्याज्यमेव हि ।
अन्यैरप्युच्यते कैश्चिद् जगदेतत् सनातनम् ॥३८॥
अबुद्धिमत्कर्तृकं चेत्येतच्चाप्यसमञ्जसम् ।

असिद्ध इति चेत्, नरविषाणस्यापि तथात्वापत्तिः । सिद्ध इति चेत्? केन प्रमाणेन सिद्धः? प्रत्यक्षं हि सन्निकर्षनिमित्तकं नातीतानागतयोः सम्भवति । न ततोऽन्यत् प्रमाणमनुमानाद्यभ्युपगम्यते त्वया । प्रत्यक्षमात्रं प्रमाणं वदता त्वया गुडोदकादौ मदशक्त्युद्भवादेर्दृष्टान्तत्व-निरूपणेन चैतन्याद्युद्भवादिसाधनमपि [1]नास्ति मे जिह्वेति कथनतुल्यमित्यादि ज्ञेयम् ॥ ३७ ॥ न तच्छास्त्रं सर्वज्ञप्रणीतमित्याह— शुष्केति । शुष्कः उपपत्तिरहितो यस्तर्कः । तदेकसंक्लृप्तं तन्मात्रमूलक-मित्यर्थः । एवं प्रकृतपक्षप्रतिपक्षभूतं चार्वाकमतं निरस्य तथाविधमेव सांख्यमतं निराकर्तुमनुक्रमते—अन्यैरिति । सनातनं सद्रूपमित्यर्थः । ते हि परिणामवादिनो जगत् कारणान्तर्भावेन सदेवेत्याहुः ॥ ३८ ॥ अबुद्धिमदिति । गुणसाम्यावस्थात्मकं प्रकृतितत्त्वं जगन्मूलकारणम् । तच्च [2]अबुद्धिमत् चितिक्रियारहितं जडम् । यथा हि मृत्पिण्डो घटात्मना परिणममानः कुलालं कर्तारमपेक्षते, न तथा प्रकृतितत्त्वं जगद्रूपेण परिणममानं स्वातिरिक्तं कञ्चित् कर्तारमपेक्षते । अतो जगत्क्रियायां स्वतन्त्रमिति जगत्कर्तृभूतमित्यर्थ इत्येतदनीश्वरं सांख्यमतम् । अत्र हि प्रकृतिः सत्त्वांशेन दर्पणतुल्येन स्वान्तः शुद्ध-चिद्रूपं पुरुषं स्वीयतमोऽश्ममयं च दृश्यं प्रतिबिम्बत्वेन गृह्णाति । एवं प्रतिबिम्बभूतद्रष्टृदृश्यसम्बन्धादेव प्रकृत्यविवेकमापन्नः पुरुषो घटमहं जानामीति मृषाभिमानेन युज्यते । अयमेव पुरुषस्य संसारः । यदा हि पुरुषो विचारेण प्रकृतेर्विविक्तमात्मानं जानाति, तदा ज्ञातचोर इव तत्पुरुषविषये प्रकृतेरनुपसरणात् पुरुषप्रतिबिम्बाग्रहणेन मृषाभि-

१. तन्नास्ति—क० । २. बुद्धि—क० घ० ।

क्रियाया बुद्धिपूर्वत्वादबुद्धौ तददर्शनात् ॥३९॥
बह्वागमोपष्टम्भाच्च कर्ताऽत्र स्याद्धि बुद्धिमान् ।

मानाभावान्मुच्यत इति तन्मतम् । अत्र हि प्रकृतौ प्रतिबिम्बभूतचित्सम्बन्धाद् दृश्यप्रकाशोऽभ्युपगतः । तत्र प्रतिबिम्बभूता चित् किमाश्रयवज्जडरूपा? उत स्वनिमित्तमुख्य[चिद्वच्]चिद्रूपा वा? जडस्य आद्ये दृश्यप्रकाशत्वानुपपत्तिः। जडस्य दृश्यप्रकाशत्वाभ्युपगमे प्रकृतिसत्त्वांशसम्बन्धेनैव सर्वोपपत्तौ चित्प्रतिबिम्बकल्पनवैयर्थ्यापत्तेः। द्वितीयेऽपि दृश्यस्य मुख्यचित्सम्बन्धोपगमाच्चित्प्रतिबिम्बवैयर्थ्यमेव । न च दर्पणस्य घटाद्यप्रकाशकत्वेऽपि तत्प्रतिबिम्बितसौरातपस्य गौणस्य घटादिप्रकाशकत्ववच्चितिप्रतिबिम्बस्यैव दृश्यप्रकाशकत्वमिति वाच्यम्, सौरातपप्रतिबिम्बस्यालोकवद् घटादिप्रकाशसहकारित्वेनाप्रकाशकत्वात् । नापि प्रतिबिम्बभूतचितश्चिज्जडोभयरूपत्वमुभयविलक्षणत्वं वा[1] वक्तुं युज्यते, विरोधादपसिद्धान्ताच्च । अथ च स्वभावस्यान्यथाभावानुपपत्तेः पुरुषं प्रति प्रवृत्तिस्वभावायाः प्रकृतेर्विवेकज्ञानानन्तरं[2] निवृत्तिस्वभावताऽनुपपत्त्या बन्धस्य परिहार्यत्वमित्याद्यभिसन्धायाह—एतच्चाप्यसमञ्जसमिति । क्रियाया इति । घटाद्युत्पत्तिक्रियायाः कुलालादिबुद्धिपूर्वत्वात् एवम्भूतं घटमेवं करोमीति बुद्धिमत्पूर्वकत्वाद् घटाद्युत्पत्तेरबुद्धिमत्प्रकृतिकर्तृकत्वं न जगत इति भावः । अबुद्धाविति । चित्रलिखितकुलालादौ घटादिक्रियादर्शनात् ॥ ३९ ॥ बह्विति । "स ईक्षत लोकान्नु सृजा" [ऐत० उ० १।१] इति, "नामरूपे व्याकरवाणि" [छा०उ० ६।३।२] इति, "आदिकर्ता हि भगवानादावालोच्य वै जगत् । योगीव निरुपादानं प्रविविक्तमकल्पयत् ॥" इत्यादि बह्वागमः, उपष्टम्भ आश्रयभूतोऽनुकूलो यस्यैवंविधाद् जगद्

१. 'वा' नास्ति—क० । २. नोत्तरं—ख० ग० घ० ।

बुद्धिमत्कर्तृकं कार्यं सर्वत्रैव हि दर्शनात् ॥४०॥
एवं सत्तर्कागमाभ्यां जगदेतत् सकर्तृकम् ।
स कर्ता लौकिकेभ्यस्तु कर्तृभ्यः स्याद्विलक्षणः ॥४१॥
कार्यस्याचिन्त्यरूपत्वादचिन्त्यानन्तशक्तिकः ।
अपरिच्छिन्नसामर्थ्यः कार्यस्यानुगुणत्वतः ॥४२॥
स प्रपन्नान् समुद्धर्तुं प्रभवत्येव सर्वथा ।
अतस्तं सर्वभावेन शरणीकुरु सर्वदा ॥४३॥
निदर्शनं तेऽभिधास्ये शृणु प्रत्ययकारणम् ।

बुद्धिमत्कर्तृकं कार्यत्वाद् घटादिवदिति बलवत्तर्काद् बुद्धिमानेव जगत्कर्ता भवेन्नाबुद्धिमतो प्रकृतिरित्यर्थः। कार्यस्य बुद्धिमत्कर्तृकत्वे दृष्टान्तदौर्लभ्यं परिहरति—[1]सर्वत्रैवेति। सांख्यमते जडस्य प्रकृतितत्त्वस्य कर्तृत्वसाधने दृष्टान्तदौर्लभ्यवन्नात्रेति भावः ॥ ४० ॥ सकर्तृकं सिद्धमिति शेषः। ननु घटादिकर्ता कुलालादिरिवादिकर्तापि पुरुषः कश्चन सिद्ध्यतु, तस्य पुनर्न परमेश्वरत्वं सिद्ध्यतीत्याशङ्क्याह—स कर्तेति ॥४१॥ तत्र हेतुः—अचिन्त्यरूपत्वादिति। "कथं जले स्थिता पृथ्वी जलं वापि कथं दिवि" इत्यादिरीत्या [2]कार्यस्याचिन्त्यता ज्ञेया। लौकिककर्तृवैलक्षण्यमेवाह—अचिन्त्येति। एवंविधा एतावतीति तच्छक्तिर्न चिन्त्या, नापि सान्ता। एतदेव निष्कृष्याह—अपरिच्छिन्नेति। लोके कार्यानुगुण[3] एव कर्ता दृष्ट इत्यपरिच्छिन्नजगतोऽपरिच्छिन्नसामर्थ्य एव कर्तेति भावः ॥ ४२ ॥ एतावता ग्रन्थेनेश्वरं प्रसाध्य सम्प्रति तस्य शरण्यत्वमाह—स प्रपन्नानिति। यत एवमतस्तं जगत्कर्तारम्। सर्वभावेन निष्कामत्वेनेत्यर्थः। ये कामिनस्तेषाम् अर्धो भावोऽर्धं चित्तं काम्ये तिष्ठति, अर्धमीश्वर इति भावः ॥ ४३ ॥ सर्वभावेन शरणीकृतात्

१. 'सर्वत्रैवेति' नास्ति–क० । २. काय–क० ।
३. कार्यगुण–क० ।

[1]मितेश्वरोऽप्यत्र लोके चाकापट्यात् प्रसादितः ॥४४॥
सर्वात्मना योजयति स्वेष्टार्थैः श्रेयसे नरम् ।
एष लोकेश्वरो देवः सम्यग् येन प्रसादितः ॥४५॥
तस्मै किं न दिशेद् ब्रूहि भक्तलोकैकवत्सलः ।
पुरुषा हीश्वरा लोके चानवस्था अवत्सलाः ॥४६॥
निर्दयाश्च कृतघ्नाश्च तस्मात् तत्फलमस्थिरम् ।
परमेशो दयासिन्धुः [2]कृतज्ञः सुव्यवस्थितः ॥४७॥
अन्यथाऽनादिसंसारे कुतोऽनिन्द्यत्वमाप्नुयात् ।

फलप्राप्तौ निदर्शनं दृष्टान्तः। प्रत्ययो विश्वासः। अकापट्यात् सर्वभावेन ॥ ४४ ॥ सर्वात्मना कायवाङ्मनोभिः प्रसादित इति सम्बन्धः। श्रेयसे सुखाय ॥ ४५ ॥ तस्मै उपासकाय। इष्टं न दिशेत् किम् ? अपि तु दिशेदेवेत्यर्थः। यद्वा किमिष्टं न दिशेदपि तु सर्वं दिशेदेव। ननु मितेश्वराणां स्वस्य समीहितसेव्यभावसम्पत्त्या सन्तोषादिष्टार्थप्रदानं युज्यते। [1]परमेश्वरस्य [3]प्राप्तकामत्वेन संतोषाभावात् कथमुपासितस्येप्सितदातृत्वमिति चेदाह—भक्तलोकैकवत्सल इति। तस्य भक्तेषु वत्सलस्वभावत्वादेव फलदानं युज्यत इति भावः। किञ्च, मितेश्वरेभ्यः फलप्राप्तिरनियता, परमेश्वरात्तु नियतेत्याह—पुरुषा इति। ॥ ४६ ॥ तस्मात् अनवस्थत्वादिधर्मचतुष्टययुतत्वात्[4]। अस्थिरम् अनियतम्। ईश्वरस्तु नैवंविध इत्याह—परमेश इति। यत एवमतः फलप्राप्तिर्भवेदेवेति शेषः ॥ ४७ ॥ कुत एतन्निश्चितमिति चेदाह—

1. मितेश्वरस्याप्राप्तकामत्वेन कामाप्तौ संतोषानुभवो युज्यते, परमेश्वरस्य तु प्राप्तकामत्वेन नैव तत्र संतोषस्यासंतोषस्य वा संभावना, संतोषानुभव एव चोपासितस्येप्सितफलदातृत्वे प्रयोजक इति नन्वित्यादि चेदाहेत्यन्तस्य ग्रन्थस्याशयः।

१. प्रीतेश्वरो–ग०, मितेश्वरे–घ०। २. कृतिज्ञः–क०।
३. आप्त–ख० ग० ङ०। ४. युक्तात्–क०।

व्यवस्थिता [1]जगद्यात्रा चापि वा स्यात् कथं वद ॥४८॥
अनवस्थस्य राज्यं तु नष्टमालोक्यते यतः ।
[2]तस्मादेष दयासिन्धुः सुव्यवस्थश्च कीर्तितः ॥४९॥
तमेव सर्वभावेन भक्त्याशु शरणीकुरु ।
श्रेयसि त्वां योजयेत् स त्वं न तत्परतां व्रज ॥५०॥
उपासनं[3] बहुविधमार्त्यर्थार्थित्वतोऽपि च ।
निर्हेतुकं तु क्वाचित्कं तत् सत्योपासनं भवेत् ॥५१॥
दृष्टमेतत् सर्वतो वै चार्त्तेनोपासितः प्रभुः ।
कदाचिद् दययाविष्ट आर्त्ति तस्य विमोचयेत् ॥५२॥
उपेक्षेत कदाचिद्वोपास्तेर्वै तारतम्यतः ।

अन्यथेति । अवत्सलत्वादिसत्त्वेऽनिन्द्यो न भवेत्, अनवस्थश्चेत् तत्कृता लोकयात्रा व्यवस्थिता न भवेदिति भावः ॥ ४८ ॥ अनवस्थेति । ईश्वरस्यानवस्थितत्वे तत्सृष्टः संसारोऽकाल एव नश्येदिति भावः ॥ ४९ ॥ सर्वभावेन निष्कामत्वेन । श्रेयसि परश्रेयःसाधने । त्वं न तत्परतां व्रजेति । परश्रेयःसाधनस्य दुर्विज्ञेयत्वेन त्वं न तत्परो भव, किन्तु त्वं सम्प्रतीश्वरमाराधय । त्वदाराधनेन प्रसन्न ईश्वरस्त्वां तत्र योजयेदिति भावः । एतेन मतभेदेषु साधनभेदसत्त्वात् किं साधनमुपादेयमिति शङ्का प्रक्षिप्ता ज्ञेया ॥ ५० ॥ निष्कामत्वेनेश्वरभजनमेव सर्वथा [4]फलप्रदमिति वक्तुमाह—उपासनमिति । आर्त्या रोगादिकृतपीडया, अर्थार्थित्वतः धनादिलिप्सया वा । आभ्यां कृतमुपासनं प्रसिद्धं सर्वत्र । निर्हेतुकं निष्कामोपासनं सत्योपासनम्, सत्यफलसहितत्वात् ॥ ५१ ॥ एतदेव लौकिकदृष्टान्तेनोपपादयति—दृष्टमेतदिति ॥५२॥ तारतम्यत इति । उपास्तेराधिक्ये आर्तिं मोचयेदन्यथो-

१. जगद्धात्रा—क० । २. तस्मादेव—क० ।
३. सने—क० । ४. फलमिति—क० ।

एवमेवार्थार्थिनोऽपि मितं चानियतं फलम् ॥ ५३ ॥
निर्हेतुकोपासकस्य ज्ञात्वा निर्हेतुतां चिरात् ।
मितेश्वरोऽप्यव्यवस्थस्तदधीनो भवत्बलम् ॥ ५४ ॥
निर्हेतुकत्वज्ञानाय चिरं स्यादज्ञभावतः ।
एष सर्वेश्वरो देवो हृदयेशोऽखिलस्य तु ॥ ५५ ॥
सर्वं जानाति तत्काले फलं दद्याच्च सत्वरम् ।
आर्तमर्थार्थिनं देवस्तदर्थेनाभियोजितुम् ॥ ५६ ॥
स्वनियत्या कर्मपाकं प्रतीक्ष्य फलमादिशेत् ।

पेक्षेतेति भावः । एवमिति । उपास्तितारतम्यादर्थप्राप्तिरप्राप्तिर्वा । एवं कामिनामुपासनफलमनियतं मितं च, यदर्थमुपासनं तस्य परिमितत्वात्, उपास्यस्य कृतघ्नत्वे फलाप्राप्तेश्चेति भावः ॥ ५३ ॥ तदधीनः उपासकाधीनः ॥ ५४ ॥ मितेश्वरस्य [1]स्वोपासकनिर्हेतुकत्वज्ञानाय कालविलम्बापेक्षास्ति, ईश्वरस्य तु न साऽपीत्याह—एष इति । अन्तर्यामित्वेनाखिलहृदयस्थितत्वाद् हृदयेशः ॥ ५५ ॥ यतः सर्वमुपासकहृद्गतमपि स्वभावत एव जानाति, अतस्तत्काले उपासनारम्भकाले एव । [2]अत्रार्तार्थार्थिनोरपि नैव सत्वरं फलं प्रयच्छति, किन्तु कर्मपरिपाकानन्तरमित्याह—आर्तमिति । तदर्थेन कामितार्थेन ॥ ५६ ॥ स्वनियतिः [3]स्वकृत इदमित्थं भवेदिति संकल्पः । तया युतः । तामनुलङ्घ्येति यावत् । कर्मपाकमिति । अत्रेदमवधेयम्—कर्मणः पाकः फलप्रदानसामर्थ्यम् । तच्च क्वचित् कर्मणां कालविशेषकृतम्, क्वचित् कर्मान्तरसहकारकृतम् । कर्मान्तरसहकृतमेवोत्कटं कर्मेत्युच्यते । यदुक्तं शिवागमे—"कर्मणः परिपाकस्तु कालात् कर्मान्तरादपि" इति । अन्यत्रापि—"अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुते" इति । एवंविधकर्मपाकं प्रतीक्षेतेत्यर्थः । स्वं स्वीयमित्यर्थः

---

१. उपा—क० । २. र्तार्थि—क० घ० । ३. स्वकृते—ग० ।

निर्हेतुकोपासकं स्वमनन्यशरणं विभुः ।। ५७ ।।
ज्ञात्वा सर्वात्मना तस्य योगक्षेमवहो भवेत् ।
अप्रतीक्ष्य[1] कर्मपाकं नियतिं स्वां विधूय च ।। ५८ ।।
तत्साधनं सम्प्रसाध्य द्रुतं संयोजयेत् फले ।
एतदेव महेशत्वं स्वातन्त्र्यमहतं तु यत् ।। ५९ ।।
प्रारब्धं नियतिर्वापि महेशविमुखे[2] भवेत् ।
'एतन्मृकण्डुतनयेऽत्यन्तमीश्वरतत्परे[1] ।। ६० ।।
सर्वैर्ज्ञातं महेशस्य नियत्यारब्धलङ्घनम् ।
अत्रोपपत्तिं ते वक्ष्ये शृणु प्राणप्रियेरिताम्[3] ।। ६१ ।।
यद्यप्यनुल्लङ्घनीये प्रारब्धनियती खलु ।
तथाप्यपौरुषाणां तत् प्रारब्धमनपोहनम् ।। ६२ ।।
अत एव प्राणयमैः प्रारब्धं परिजीयते ।

।। ५७ ।। तं स्वीयं ज्ञात्वा । सर्वात्मना मनोवागादिभिः । योगक्षेमवहः । अप्राप्तस्य प्राप्तिर्योगः, प्राप्तस्य रक्षणं क्षेमः । एतदुभयं तस्य स्वयमेव करोतीति भावः । नियतिरिति प्रारब्धोपलक्षकम् । नियतिं प्रारब्धं च विधूयेत्यर्थः ।। ५८ ।। तस्य निष्कामिनो यत् साधनं तद् विघ्नापनयनेन सम्यक् प्रसाध्य । ननु नियतिः सर्वथाऽनुल्लङ्घनीयेति चेदाह—एतदेवेति । नियत्यादेरुल्लङ्घनमेवेत्यर्थः ।। ५९ ।। ननु प्रारब्धनियत्योरप्युल्लङ्घने "प्रारब्धं नो नाशमियान्नियतिर्नान्यथा भवेत्" इत्यागमविरोध इति चेदाह—प्रारब्धमिति । महेशविमुखे एव प्रारब्धनियत्योर्माहात्म्यमित्यागमतात्पर्यमिति भावः । नैतदागमैकसिद्धम्, किन्त्वैतिह्यसिद्धमपीत्याह—एतदिति ।।६०।। नियत्यारब्धयोर्लङ्घनम् । अत्र अनुल्लङ्घ्यप्रारब्धनियत्युल्लङ्घने । उपपत्तिं युक्तिम् ।। ६१ ।। अपौरुषाणां पुरुषयत्नरहितानाम् ।। ६२ ।। कुत एतदिति

1. एका कथा पद्मपुराणे सृष्टिखण्डे त्रयस्त्रिंशेऽध्याये द्रष्टव्या ।

१. ऽप्रतीक्ष्यं—क० । २. विमुखं—क० । ३. रितम्—क० ।

न तान् दृष्टेषु दुःखेषु प्रारब्धं योजयत्यलम् ।। ६३ ।।
प्रारब्धाहिनिगीर्णास्ते ये पौरुषपराङ्मुखाः ।
एतन्नियतिसंक्लृप्तं तथैवानुभवान्ननु[1] ।। ६४ ।।
नियतिः स्यादीशशक्तिः सङ्कल्पैकस्वरूपिणी ।
सत्यसङ्कल्प एवेशोऽनुल्लङ्घ्या ह्यत एव सा ।। ६५ ।।
कुण्ठिता सापि भवति परमेशपरायणे ।
अकुण्ठितापि भवति यतः सा तादृशी भवेत् ।। ६६ ।।
तस्मात् कुतर्कं सन्त्यज्य महेशं शरणीकुरु ।
अहेतुकतया स त्वां नियोजयति श्रेयसि ।। ६७ ।।
एतावदेव सोपानं प्रथमं क्षेमसौधके[2] ।

चेदाह—अत एवेति । प्राणयमैः प्राणायामपरैर्योगिभिः । कथमेतज्ज्ञातमिति चेत्, प्रत्यक्षेणेत्याह—न तानिति ॥ ६३ ॥ कुत एवं पौरुषात् प्रारब्धपराभव इति चेत्तथैव नियतिस्वभावादित्याह—एतदिति । पौरुषेण प्रारब्धापोहनमित्यर्थः । तथैवेति । अनुभवानुरोधेन नियतेः कल्पनीयत्वादिति भावः ॥ ६४ ॥ अत एव सत्यसङ्कल्पत्वादेव ॥६५॥ सापि अनुल्लङ्घ्या नियत्यपि । नन्वनुल्लङ्घ्यत्वं कुण्ठितत्वमित्युभयं विरुद्धमिति चेदाह—अकुण्ठितेति । यतः सा नियतिः, तादृशी परमेशपरायणे कुण्ठितस्वभावैव । अयं भावः—प्रारब्धं हि फलोन्मुखं कर्म, तच्च योगिना जीयत इति तथैव तन्नियत्या नियतं परिकल्प्यते । प्रकृते निष्काम्यु[मो]पासकोऽपि कर्मयोगित्वेन योगी भवेदित्यनेनापि तज्जीयते । तथा च प्रारब्धमयोगिन एवानुल्लङ्घ्यम् । नियतिश्च भगवत्सङ्कल्परूपा, सा सर्वथानुल्लङ्घ्यस्वभावैव । तथापि भगवत्परायणे सा कुण्ठिता भवतीति च तस्याः स्वभाव एवेति सा सर्वत्राकुण्ठितैवेति ॥ ६६ ॥ यस्माद् भगवत्परे प्रारब्धनियत्योरप्यनन्तरायत्वं तस्मात् । अहेतुकतया निष्कामत्वेन । सः महेशः ॥ ६७ ॥ एतावदेव

१. न तु—ख० । २. सौधकम्—क० ।

[1]एतद्विहाय चान्यत्र नास्तीषत्फलसम्भवः ॥ ६८ ॥
श्रुत्वेत्थं वचनं राम हेमचूडः प्रियोदितम् ।
पप्रच्छ भूयस्तां कान्तामतिहृष्टमनास्तदा ॥ ६९ ॥
प्रिये महेश्वरं ब्रूहि यः शरण्यो भवेन्मम ।
सर्वकर्ता स्वतन्त्रात्मा यच्छक्त्या नियतं जगत् ॥ ७० ॥
तं विष्णुमाहुः केचिद्वै [2]शिवमन्ये गणेश्वरम् ।
तथा सूर्यं नृसिंहादीन् बुद्धं सुगतमेव च ॥ ७१ ॥
अर्हन्तं वासुदेवं च प्राणं सोमं च पावकम् ।
कर्म प्रधानमणव इत्यादि बहुधा जगुः ॥ ७२ ॥
जगत्कारणरूपं वै विचित्रमतभेदितम् ।
तत्र क्वेश्वरबुद्धिस्तु कर्तव्या तत् समीरय ॥ ७३ ॥
न ते ह्यविदितं किञ्चिद् भवेदिति हि निश्चयः ।
यतः स भगवान् व्याघ्रपादो दृष्टपरावरः ॥ ७४ ॥
अतस्ते योषितोऽप्येवं ज्ञानमेतद्विराजते ।

अहेतुकत्वेनोपासनमेव । अन्यत्र साधने ॥ ६८–६९ ॥ एवं जगदादिकर्ता परमेश्वरः सेव्य इति श्रुत्वा कर्तुर्हि शरीरवत्त्वं नियतमिति मत्वा शिवादिशरीरिषु ईश्वरत्वं क्व त्वया निश्चितमिति पृच्छति—प्रिय इत्यादि । नियतं क्लृप्तम् ॥ ७० ॥ कुतस्तवात्र शङ्केति चेत्तत्रापि शास्त्रानैक्यादित्याह—तमिति[3] । बुद्धं सुगतं च बौद्धैकदेशिनः ॥ ७१ ॥ अर्हन्तं जैना आहुः । वासुदेवं पाञ्चरात्राः । प्राणादीन् प्राणाद्युपासकाः । कर्मादीनां कर्तृत्वं प्राक् परिहृतम्, तथापि प्रसङ्गात् पुनस्तद्गणनम् ॥ ७२ ॥ एवं जगतः कारणस्य कर्तुः स्वरूपं विचित्र-[4]मतैर्भेदितम्, अत आह— तत्रेति ॥७३॥ व्याघ्रपादः ते पिता ॥ ७४ ॥

१. एतद्विधाय–क० । २. केचित् शिव–क० ।
३. बुद्ध–क० । ४. मतभे–क० ।

ब्रूहि मे श्रद्दधानाय [1]प्रियायामृतभाषिणि ॥ ७५ ॥
पृष्टैवं सा हेमलेखा प्रियेण प्राह हर्षिता ।
नाथ ते सम्प्रवक्ष्यामि शृण्वीश्वरविनिर्णयम् ॥ ७६ ॥
ईश्वरो हि जगज्जालप्रलयोत्पादकृद् भवेत् ।
स विष्णुः स शिवो धाता स सूर्यः सोम एव च ॥७७॥
स एव सर्वथा सर्वः सर्वैरपि निरूपितः ।
न शिवो नापि विष्णुर्वा न धाता नान्य एव च ॥७८॥
एतत्ते सम्प्रवक्ष्यामि शृण्वत्यन्तसमाहितः ।
कर्तारं शिवमाहुस्ते पञ्चवक्त्रं त्रिलोचनम् ॥ ७९ ॥
स कर्ता घटकर्तेव चेतनः सशरीरकः ।
लोकेऽपि चेतनः कर्ता सशरीरो हि दृश्यते ॥ ८० ॥
अशरीरोऽचेतनो वा न कर्ता क्वचिदीक्षितः ।
तत्र मुख्यं हि कर्तृत्वं चेतनस्यैव सम्भवेत् ॥ ८१ ॥
यतः स्वप्नेष्वयं जीवो हित्वा स्थूलं शरीरकम् ।
चैतन्यमयदेहेन सर्वानभिमतान् सृजेत् ॥ ८२ ॥
अतः शरीरं करणं कार्ये कर्तुश्चिदात्मनः ।

अतः तत्सम्बन्धात् ॥ ७५–७७ ॥ सर्वैः वैष्णवाद्यैः, निरूपितः सर्वोऽपि विष्णुशिवादिः स एव विष्णुशिवादिमूर्त्तिषु सर्वत्रानुगतं [2]पारमेश्वरं स्वतन्त्रचिद्रूपमिति सर्वात्मतां तस्योक्त्वा परस्परं व्यावृत्तं दृश्यं स्थूलशरीरं न तस्य वास्तवं रूपमिति निषेधति—न शिव इत्यादि ॥ ७८ ॥ एतत् शिवो न शिवश्चेत्येतत्। ते शैवाः ॥ ७९ ॥ सः स्थूलशरीरसहकृतः । कुत एवमिति चेद्विभज्याह—लोक इति । कर्ता कुलालादिः ॥ ८० ॥ एवं शरीरविशिष्टचेतनस्यैव कर्तृत्वमीक्षितम्, तथापि तत्र शरीरचेतनयोर्मध्ये ॥ ८१ ॥ कुत एवमिति चेद् भौतिकदेहस्य व्यभिचारान्न कर्तृत्वमित्याह—स्वप्नेष्विति । स्वाप्नो देहो

१. प्रियामृतप्रभाषिणी—क० । २. परमे—क० ख० ।

जीवानां करणापेक्षा यतोऽपूर्णा स्वतन्त्रता ॥ ८३ ॥
भगवांस्तु जगत्कर्ता पूर्णस्वातन्त्र्ययोगतः ।
अनपेक्ष्यैव यत्किञ्चित् सृजत्यविकलं जगत् ॥ ८४ ॥
अतः शरीरं नास्त्येव ह्येष मुख्यविनिश्चयः ।
अन्यथा लोकवत्कर्तुरुपादानाश्रयो भवेत् ॥ ८५ ॥
तथा च देशकालादिकारणप्रचयैर्युतः ।
जगत् सृजन्महेशानो जीव एव भवेत्तथा ॥ ८६ ॥

नैवंविध इत्याह—चैतन्येति ॥ ८२ ॥ अतः स्थूलशरीरं विनापि कार्यसम्भवेन व्यभिचारात् । अस्तु करणत्वेऽपि स्थूलं चिन्मयं वा शरीरमीश्वरस्यापेक्षितमिति चेन्नेत्याह—जीवानामिति ॥ ८३ ॥ जीवानामपूर्णस्वातन्त्र्येण करणाद्यपेक्षायामपि न पूर्णस्वातन्त्र्यस्येश्वरस्य यत्किञ्चिदपेक्षेत्याह—भगवानिति । अविकलं सम्पूर्णम् ॥ ८४ ॥ अतः शरीरकल्पने प्रयोजनाभावात् । अन्यथा कुलालादिवत् करणाद्यपेक्षत्वे । कर्तुः ईश्वरस्य उपादानस्याप्याश्रयः अपेक्षा भवेत् ॥ ८५ ॥ प्रचयैः समूहैः सामग्र्येति यावत् । जीव एव भवेत् । ईश्वरत्वं विहन्येतेति भावः । तथा कुलालादिवत् ॥ ८६ ॥ इष्टापत्तावाह—जगदिति । उपादानादिकं[१] जगत्सृष्टेः पूर्वमपि सिद्ध्येत् । ईश्वरस्य जगत्क्रियायामुपादानाद्यपेक्षणे उपादानादेर्नित्यता सिद्धेति भावः । तत् उपादानादिकम् । अस्त्विति चेदाह—सर्वकर्तृत्वमिति । उपादानादेः सृष्टेः पूर्वं सिद्धत्वेन तं प्रत्यकर्तृत्वेन सर्वकर्तृत्वं विहन्येतेत्यर्थः । तथा च कर्तुर्निमित्तत्वेनोपादानत्वाभावेनेश्वरत्वमेव न सङ्गच्छत[२] इति भावः । यदुक्तं क्षेमराजाचार्यैः—

[1]ये त्वीश्वरं व्यपदिशन्ति निमित्तहेतुं
दत्तस्तिलाञ्जलिरमीभिरिहेशितायै ।

---

1. एष श्लोकः स्पन्दप्रदीपिकायाम् ( पृ० २३ ) आगमरहस्यश्लोकत्वेनोद्धृतः ।
१. दिकञ्जग—क० घ० । २. च्छेत—क० ।

पूर्णैश्वर्यं विहन्येत जगत्सृष्टेः पुरापि च।
सिद्ध्येत्तत्सर्वकर्तृत्वं विहतं स्यान्न संशयः ॥ ८७ ॥

अन्याङ्गतोपगमनेन वशीकृतस्य
कामीश्वरस्थितिममी बत सङ्गिरन्ते ॥ इति।

अथ च नहीश्वरस्य केवलनिमित्तत्वे[1] कार्यं सम्भवितुमर्हति। तथा हि—सृष्टेः पुरा विशरारवः परमाणव ईश्वरेच्छया संघटिताः कार्यारम्भका भवन्तीति ह्यारम्भवादिन आहुः। नैतदुपपन्नम्, लोके चेतनो ह्यन्येच्छामनुरुध्य किञ्चित् करोति नाचेतनः। तथा च परमाणूनामीश्वरेच्छानुरोधोऽनुपपन्न एव। नन्वीश्वरस्यैवंविधमेव सामर्थ्यम्, यत् परमाणवोऽपि तदिच्छामनुरुध्येरन्निति। सत्यमेतत्, ईश्वरोऽपरिच्छिन्नसामर्थ्य एव। तेनैवालौकिकसामर्थ्येन भगवानुपादानाद्यनपेक्ष्यैव जगत्क्रियासमर्थः। एवं सत्यपि भगवतो जगत्क्रियायां परमाण्वाद्यपेक्षाभ्युपगमो द्वैतवादश्रद्धामात्रविलास इति ज्ञेयम्। एतेन सेश्वरसांख्योऽपि प्रत्युक्तो ज्ञेयः। अस्माकमागमैकसमाश्रयाणामभ्युपगताखिलव्यवहारसमर्थनसमर्थपरमेश्वरैश्वर्याणां नानुपपत्तिगन्धोऽपि। ननु वैषम्यनैर्घृण्यदोषदूरीकरणाय जगत्क्रियायां कर्म निमित्तमिति सर्वैरभ्युपेयम्। तथा चान्यापेक्षेश्वरस्य सिद्धेति चेदुच्यते—सत्यमेतदप्रतिसमाधेयमेव द्वैतवादिनाम्। अद्वैतवादिनामस्माकं तु दर्पणप्रतिबिम्बन्यायेन सर्वस्य जगतश्चिदेकरसत्वेन कर्मणोऽपि परमेश्वरस्वरूपानन्यत्वेनान्यानपेक्षणान्न दोषावकाशलेशोऽपि। नन्वेवमपि घटादिकर्तृत्वस्य कुलालादिनिष्ठत्वान्नेश्वरः सर्वकर्तेति चेन्न, कुलालात्मन ईश्वरानन्यत्वेनादोषात्। अथ च राजपुरुषकृते राजकृतत्ववद् ब्रह्मादिकृतस्यापीश्वरकृतत्वात्। तदुक्तं प्रत्यभिज्ञायाम्—

---

१. नित्यत्वे–क०।

अतो हि दृश्यदेहाद्यमनपेक्ष्य जगत् सृजेत् ।
नास्ति तस्मात् स्थूलदेहो वस्तुतः प्राणवल्लभ ।। ८८ ।।
पररूपे ह्यदेहेऽस्मिन् मुह्यन्ति स्थूलबुद्धयः ।
भक्तियुक्ताश्च तैर्ध्यातो यत्र यत्र यथा यथा ।। ८९ ।।
तथा धत्तेऽनेकरूपं भक्तचिन्तामणिः स्वयम् ।
अतश्चेतन [1]एवेशस्तद्देहः स्याच्चितिः परा ।। ९० ।।
चितिरेव महासत्ता [2]सम्राज्ञी परमेश्वरी ।
त्रिपुरा भासते यस्यामविभिन्नं[3] विभिन्नवत् ।। ९१ ।।
आदर्शनगरप्रख्यं जगदेतच्चराचरम् ।

तथा हि कुम्भकारोऽसावैश्वर्यैव व्यवस्थया ।
तत्तन्मृदादिसंस्कारक्रमेण जनयेद् घटम् ।। [१।४१] इति ।। ८७ ।।
अतः शरीराद्यपेक्षायामैश्वर्यविहतेः ।। ८८ ।। ननु यदि वस्तुतो देहो नास्ति, तर्हि कुतोऽयं विष्ण्वादिदेह इति चेदाह—परेति । अस्मिन् ईश्वरे । मुह्यन्ति मोहं प्राप्नुवन्ति, न विदन्तीति यावत् । ये[4] एवंविधा भक्तियुक्ताश्च । यत्र यत्र कैलासवैकुण्ठादिदेशे । यथा यथा पञ्चवक्त्रैकवक्त्रादिरूपेण ।। ८९ ।। स्वयमिति । न मातृपित्राद्यपेक्षयेति भावः । अतः एवंविधदेहानामिच्छामात्रपरिकल्पितत्वात् । परा अपरिच्छिन्ना चितिः ।। ९० ।। चितिरेवेति । चितिर्हि स्वरूपपरिनिष्ठिता निस्तरङ्गाब्धिकल्पा तुरीया त्रिपुरा । सैव यदा स्वस्वातन्त्र्याच्चितिक्रियाकर्तृत्वरूपचेतनतामासादयति तदेश्वर इत्युच्यते । [5]कार्यंब्रह्मेति यं वेदान्तिन आहुः । सा चितिर्महासत्ता अपरिच्छिन्नसद्रूपा । [6]साम्राज्ञी स्वतन्त्रा । परमेश्वरी अनुत्तरैश्वर्यवती । त्रिपुरा तुर्या । भासते अविशेषात् सर्वत्र सर्वदेत्यर्थः ।। ९१ ।। ननु न[7] सा चितिः क्वचिद्भासते, किन्तु

१. एतेन–क० । २. साम्राज्ञी–ख० ग० घ० । ३. भिन्ना–क० ।
४. 'ये' नास्ति–क० । ५. कार्यंब्रह्मेति–क० ।
६. साम्राज्ञी–ख० ग० घ० । ७. 'न' नास्ति–क० ।

तद्रूपैकत्वतस्तत्र नोत्तमाधमभावना ॥ ९२ ॥
अपरे तु स्वरूपे हि [1]कल्पितं मुख्यतादि हि[2] ।
तस्मात् प्राज्ञ उपासीत परं रूपं हि निष्कलम् ॥ ९३ ॥
असमर्थः स्थूलरूपं यद् बुद्धौ सङ्गतं दृढम् ।
तदुपास्याहेतुतस्तु श्रेयः प्राप्नोत्यनुत्तमम् ।
नान्यथास्य गतिः क्वापि भवेद्वै कोटिजन्मभिः ॥ ९४ ॥

इति श्रीमज्ज्ञानखण्डे हेमचूडोपाख्याने ईश्वरस्वरूपनिरूपणं
सप्तमोऽध्यायः ॥



जगदेव भासत इति चेदाह—आदर्शेति । यथा ह्यादर्शाऽविभिन्नमपि प्रतिबिम्बनगरमादर्शे भिन्नवद्भासते, एवमस्यां चिति[3] चराचरात्मकं जगत्तदभिन्नमपि विभिन्नवद्भासते । यथा हि बालाः प्रतिबिम्बं पश्यन्तो दर्पणं न विदुरेवं मूढा जगत् पश्यन्तोऽपि न चितिं विदुः । एवं च विष्णुशिवादिष्वपीयमेवेश्वराख्या एका, अतस्तत्र विष्णुशिवादौ नोत्तमाधमभावना कर्तव्या ॥ ९२ ॥ ननु शास्त्रेषूत्तमत्वादि कथमुक्तमिति चेदाह—अपरे इति । स्थूले । तस्मात् यतः सा मुख्यता कल्पिता न वास्तवी । निष्कलमशरीरम् ॥ ९३ ॥ ननु तद्रूपं प्राज्ञेनोपासितुं शक्यमन्येन किं कर्तव्यमिति चेदाह—असमर्थ इति । यद् बुद्धौ दृढं संगतमिति । यद्रूपे बुद्धिर्दृढानुरक्ता सा मूर्तिरुपास्येति भावः । अन्यथा ईश्वरमनाराध्य । गतिः परश्रेयःसाधनप्राप्तिः । षट्चरणः श्लोकः ॥९४॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
सप्तमोऽध्यायः ॥



---

१. कल्पिता–ख० । २. नहि–ख० ।
३. चितिश्चरा–क० ।

# अथ अष्टमोऽध्यायः

एवं प्रियावचः श्रुत्वा ज्ञात्वा तत्त्वं महेशितुः ।
त्रैपुरं चिन्मयं हेमलेखावाक्येन निश्चितम् ॥ १ ॥

आश्वस्तचित्तस्त्रिपुरां गुणरूपां महेश्वरीम् ।
ज्ञात्वा गुरुभ्यः परमां माहैश्वर्यविभावितः ॥ २ ॥

तामेकभावानुगतो हेमचूडोऽभवद् दृढम् ।
एवं परोपासनेन व्यतीयुः केऽपि मासकाः ॥ ३ ॥

त्रिपुरा परमेशानी प्रसादमकरोद् हृदि ।
विषयाद्विमुखं चित्तं विचारपरमं बभौ ॥ ४ ॥

एतावद् दुर्लभं लोके परानुग्रहमन्तरा ।
विचारप्रवणं चित्तं यन्मुख्यं मोक्षकारणम् ॥ ५ ॥

राम यावन्न जायेत विचारपरमं मनः ।
न तावच्छ्रेयसा योग उपायानां शतैः क्वचित् ॥ ६ ॥

अत्राध्याये भागमितपद्यैः स्तुत्वा विरागताम् ।
हेमलेखोक्तिगूढार्थव्याख्यानं सुनिरूप्यते ॥

त्रैपुरं तुर्यम् । तद्रूपं चिन्मयमेवेश्वरस्य तत्त्वमिति परोक्षतया ज्ञात्वा ॥ १ ॥ गुणरूपां सगुणमूर्त्तिम् । गुरुभ्यस्तन्मन्त्रादिकं च ज्ञात्वेति शेषः । माहैश्वर्यविभावितः परमेश्वरानुग्रहशक्तिविद्धः । एतदुक्तम्—"ईशानुग्रह [1]एवैष यः सद्गुरुसमागमः" इति ॥ २ ॥ [2]तां त्रिपुराम् । एकभावो दृढभक्तिः । अनुगतिरुपासनम् ॥३॥ किंविधं प्रसादमकरोत्तदाह—विषयादिति । विचारपरमं स्वरूपविचारतत्परम् ॥ ४ ॥ एतावद् विषयवैमुख्यपूर्वकं विचारप्रवणत्वम् । कुत एतस्य

1. एवैकः—क० । 2. 'तां त्रिपुराम्' नास्ति—क० ।

अथ भूयः स कस्मिंश्चिद्दिने रहसि वै तया ।
सङ्गतः प्रिययाऽत्यन्तविचारपरमानसः ॥ ७ ॥
आयान्तं स्वनिकेतं तं दूरात् कान्तं ददर्श सा ।
उत्थाय तं समानीय स्वासने विनिवेश्य च ॥ ८ ॥
पादप्रक्षालनाद्यैस्तं पूजयित्वा यथाविधि ।
प्रोवाचामृतनिष्यन्दसुन्दरं परमं वचः ॥ ९ ॥
प्रेष्ठ ! त्वामद्य पश्यामि चिराय ननु ते वपुः ।
नीरुजं कच्चिदासीद्वै यतो रोगास्पदं वपुः ॥१०॥
[1]तन्ममाचक्ष्व वृत्तान्तं यतो नाहं स्मृता त्वया ।
ननु मामसमालोक्य चाप्रभाष्य कदापि ते ॥११॥
नात्यगाद्दिनभागोऽपि तदेवं कुत आस्थितम् ।
मन्येऽहं तेऽनभिमते वर्तनं नहि वर्त्मनि ॥१२॥
स्वप्ने वापि कुतोऽन्यत्र कुत एवमभूद् वद ।
कथं रात्रिस्त्वया नीता चैकापि युगसम्मिता ॥१३॥
मां[2] विना प्राक् क्षणोऽप्येको युगकल्पः सुदुःसहः ।
इत्युक्त्वा सा समाश्लिष्य खिन्नेवाभूत्क्षणं ततः ॥१४॥

दुर्लभता तदाह—यदिति ॥ ५-६ ॥ अथ विचारपरतासम्पत्त्यनन्तरम् ॥ ७ ॥ निकेतं गृहम् ॥ ८-९ ॥ प्रेष्ठ अतिप्रियतम ॥ १० ॥ तत् [3]शरीरवृत्तान्तम् । कुतस्तवेयं सम्भावनेति चेदाह—यत इति ॥ ११ ॥ एवं मामस्मृत्वा अदृष्ट्वा[4] वा त्वया आस्थितं तत् कुतः । स्वप्नेऽपि न मन्ये ॥ १२ ॥ अन्यत्र जाग्रति कुत एतत्सम्भावनेति भावः । एवं सति कुत एवं ते स्थितिरभूत् ॥ १३ ॥ मां विना [5]क्षणोऽपि सुदुःसहः

१. तन्मामा—क० । २. विना मां च क्षणो—क० । ३. शारीरं—ग० । ४. 'अदृष्ट्वा' नास्ति—क० । ५. क्षणमपि सुदुःसहमिति—क० ।

सोऽपि प्रियासमाश्लिष्टो नेषद्विकृतिमाययौ ।
प्राह प्रिये न मामेवं विमोहयितुमर्हसि ॥१५॥
ज्ञाता मयाऽसि सुदृढं नास्ति ते शोककारणम् ।
परावरज्ञा त्वं धीरा मोहस्त्वां वै कथं स्पृशेत् ॥१६॥
तत्त्वां प्रष्टुं समायातो यत्तद्वक्ष्यामि संश्रृणु ।
यत् प्राक् स्ववृत्तं कथितं तत् स्फुटं मे समीरय ॥१७॥
का सा ते जननी प्रोक्ता सखी वा तत्पतिश्च कः ।
तत्पुत्राद्या अपि च के मम वा ते क्व संवद ॥१८॥
न तन्मया सुविदितं न तन्मन्ये मृषोदितम् ।
किन्तु त्वया निगदितं व्यपदेशेन सर्वथा ॥१९॥
तद्विविच्य प्रकथय यथा ज्ञास्ये त्वहं स्फुटम् ।
अहं त्वां [1]सुप्रपन्नोऽस्मि छिन्धि मे हृदि संशयम् ॥२०॥
एवमुक्ता हेमलेखा प्रसन्नवदनेक्षणा ।
मत्वा सुनिर्मलधियं परानुग्रहसंयुतम् ॥२१॥
नूनमेषोऽतिविमुखो विषयेभ्योऽतिधैर्यतः ।
[2]विद्धः शक्त्या [3]महेशान्या फलितः पुण्यसञ्चयः ॥२२॥

॥ १४ ॥ दृढवैराग्येण [4]नेषदपि प्रियाश्लेषादिना विकृतिं प्राप्तवान् । मामियं मोहयितुं प्रवृत्तेति ज्ञात्वा आह—प्रिये इति ॥ १५ ॥ कुतस्त्वद्वियोगे शोको न भवेत्तदाह—परावरेति ॥ १६ ॥ नाहं प्रागिव क्रीडितुं समागत इत्याह—तत्त्वामिति । "महासती मे जननी" [५।१०८] इत्यादि प्रागुक्तं स्ववृत्तम् ॥ १७ ॥ ते जनन्यादयः ॥ १८ ॥ तत् त्वदुक्तम् । न तन्मृषोदितम्, किन्त्वन्यव्यपदेशेनोक्तम् ॥१९–२०॥ परायास्त्रिपुराया

---

१. सुप्रसन्नो–क० ख० ।
२. विष्णुशक्त्या–क० ।
३. महैश्वर्या–ख० ग० घ० ।
४. नैषोऽपि–क० ।

कालः प्रबोधने चायं बोधयामि ततस्त्वमम् ।
नाथ तेऽहो महाभाग्यं प्राप्तमीशकृपावशात् ॥२३॥
अन्यथा नैव विषयवैरस्यं पश्यति क्वचित् ।
एतल्लक्षणमीशस्यानुग्रहे ज्ञेयमादितः ॥२४॥
भोगवैरस्यमपरं विचारप्रवणं मनः ।
हन्त ते सम्प्रवक्ष्यामि वृत्तिं प्रोक्तां सदात्मनः ॥२५॥
परा चितिर्मे जननी सखी बुद्धिर्मता मम ।
अविद्या त्वसती सोक्ता यया बुद्धिः सुसङ्गता ॥२६॥
अविद्यायास्तु सामर्थ्यं लोके स्पष्टं विचित्रितम् ।
यद्रज्जौ सर्पमाभास्य महाभीतिं प्रयच्छति ॥२७॥
महामोहस्तु तत्पुत्रो मनस्तस्य सुतोऽभवत् ।
तस्य पत्नी कल्पना स्यात्तत्सुताः पञ्च येऽभवन् ॥२८॥
ज्ञानेन्द्रियाणि ते पञ्च तत्स्थानं गोलकं भवेत् ।
विषयाणां प्रमोषस्तु संस्कारो मनसो भवेत् ॥२९॥
तद्भोगः स्वप्नभोगः स्यात् कल्पनायाः स्वसा तु या ।
महाशना भवेदाशा तस्या यौ तनुजावुभौ ॥३०॥
क्रोधो लोभश्च तावुक्तौ तत्पुरं तु शरीरकम् ।
मम यस्तु महामन्त्रः स्वरूपस्फुरणं हि तत् ॥३१॥
प्राणः प्रचारः सम्प्रोक्तो मनसस्तु प्रियः सखा ।

अनुग्रहयुतम् ॥ २१ ॥ अनुग्रहशक्त्या ॥ २२ ॥ यतोऽयं बोधने कालस्तत इति मत्वा प्राहेति शेषः । ते त्वया ॥ २३ ॥ अन्यथा भाग्याभावे क्वचित् कालादौ । एतत् वक्ष्यमाणम् । लक्षणं ज्ञापकम् । आदित इति । ईशानुग्रहे सत्यादावेव[1] तज्जायत इति भावः ॥२४॥ अपरं द्वितीयम् । वृत्तिं स्थितिम्, सदा स्थितामिति शेषः ॥२५–२६॥ तद्भोगः प्रमुषित-

१. वेत–ख० ग० घ० ।

कान्ताराद्यास्तु [1]नरका एवं सर्वं प्रकीर्तितम् ।।३२।।
मया बुद्धेः सङ्गमस्तु समाधिरभिधीयते ।
मन्मातृलोकसंप्राप्तिर्मोक्षः प्रिय उदाहृतः ।।३३।।
एवं प्रोक्तः स्ववृत्तान्तस्त्वमप्येवंविधो[2] ननु ।
तद्युक्त्यैतत् सुविज्ञाय परं श्रेयः समाप्नुहि ।।३४।।

इति श्रीमज्ज्ञानखण्डे हेमचूडोपाख्याने संसाराख्यायिकाविवरणे अष्टमोऽध्यायः ।।

विषयभोगः ॥ ३०-३३ ॥ एतत् स्ववृत्तान्तम् ॥ ३४ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायाम् अष्टमोऽध्यायः ॥

१. नरका-क० । २. विधौ-क० ।

# अथ नवमोऽध्यायः

श्रुत्वेत्थं प्रियया प्रोक्तं हेमचूडोऽतिविस्मितः ।
हर्षगद्गदया वाचा पुनर्वक्तुं प्रचक्रमे ॥ १ ॥
धन्या प्रियेऽसि निपुणा अहो ते ज्ञानवैभवम् ।
किं वर्णयामि यत् प्रोक्तमाख्यारूपतयाऽखिलम् ॥ २ ॥
एवंविधं स्ववृत्तं मे नाभवद्विदितं क्वचित् ।
त्वदुक्त्याऽहं सम्प्रति तत् करामलकवत् स्फुटम् ॥ ३ ॥
स्मराम्यनुभवाम्यन्तरहो लोकक्रियाऽद्भुता ।
का सा परा चितिर्माता कथं तस्यास्तु नो जनिः ॥४॥
के वा वयं स्वरूपं किमस्माकं तद् ब्रवीहि मे ।
इति पृष्टा हेमलेखा रामोवाच प्रियं प्रति ॥ ५ ॥

अत्र [1]नोनाकपद्यैः स्वमात्मतत्त्वं विविच्य वै ।
हेमचूडः स्वात्मसंस्थां प्राप्त इत्येतदुच्यते ॥

पुनः हेमलेखां वक्तुम् ॥ १ ॥ ज्ञानस्य वैभवं माहात्म्यम् । यत् यस्मात् । स्वात्मवृत्तमखिलमन्यापदेशेनाख्यानतया प्रोक्तम्, अतः किं वर्णयामि ॥ २ ॥ क्वचित् काले । तत् स्वात्मवृत्तं क्रोधलोभादिना दुःखानुभवरूपम् ॥ ३ ॥ स्फुटमतीतं स्मरामि वर्तमानमनुभवामि । अन्तः स्वात्मनि । लोकानां क्रिया व्यवहारः ॥ ४ ॥ "महासती मे जननी" [ ५।१०८ ] इत्याद्याख्यानेन परचितेरुपेयतोक्ता, स्वस्य तदंशात्मत्वं चोक्तम् । तत्र "का सा परा" [ ६।४] इत्युपेयस्वरूपं पृष्ट्वा स्वात्मरूपं पृच्छति—के वा वयमिति । देहस्य पुरत्वश्रवणेन प्राणादेः [2]परिवारत्वश्रवणेन च देहादेरनात्मत्वनिश्चयात् पुरुषादिसंज्ञायाः

१. नोनाङ्क–क० । २. परीवारत्व–क० ।

नाथ शृणु प्रवक्ष्यामि गूढार्थमिदमादरात् ।
विचारयात्मनो रूपं बुद्ध्याऽत्यन्तविशुद्धया ॥ ६ ॥
न दृश्यं नापि तद्वाच्यमतो वक्ष्यामि तत् कथम् ।
[1]ज्ञाते स्वात्मस्वरूपे वै ततो ज्ञास्यसि मातरम् ॥७॥
नह्यादेशः[2] स्वरूपेऽस्ति तत आदेष्टृवर्जितम् ।
[3]स्वं रूपं स्वात्मना पश्य शुद्धबुद्धिसमाश्रयम् ॥ ८ ॥

सञ्ज्ञातनिष्ठत्वेन के इत्यात्मनः संज्ञाविषयोऽयं प्रश्नो ज्ञेयः ॥ ५ ॥ गूढार्थमिति । अयं प्रश्नार्थो गूढो वक्तुमशक्य एव, तथापि किञ्चिदुत्तरं वक्ष्यामि । तदेवाह—विचारयेति । आत्मनः शुद्धस्वरूपे विदिते परा चितिर्विदितप्रायैवेति प्रथमप्रश्नमुपेक्ष्य द्वितीये उत्तरं क्रियत इति भावः । स्वयमेव विचारय । तत्रोपायमाह—अत्यन्तविशुद्धयेति । बुद्धेरन्तःकरणस्येन्द्रियादिद्वारा बहिर्मुखत्वमशुद्धिः, तत्परित्यागेनान्तर्मुखत्वं हि शुद्धिः । तथा च बाह्यदेहादावनात्मत्वं निश्चित्य बुद्धेरन्तर्मुखतासम्पादनेनात्मस्वरूपं स्वयमेव ज्ञातुं शक्यमिति भावः ॥ ६ ॥ ननु त्वया विदितमात्मतत्त्वं कुतो नोच्यत इति चेदशक्यं वक्तुमित्याह—न दृश्यमित्यादि । न ज्ञेयमित्यर्थः । ज्ञेयमन्यो[4]पदेशेन ज्ञातुं शक्यमिति भावः । तस्य निर्धर्मत्वेन वचनप्रवृत्तिनिमित्तधर्माभावान्नापि तद्वाच्यमिति तात्पर्यम् । ननु तर्हि परा चितिर्या माता तां वदेति चेदाह—ज्ञात इति ॥ ७ ॥ यतो न दृश्यं न वाच्यमात्मरूपमतस्तस्य न साक्षादुपदेश इत्याह—नहीति । आदेश उपदेशः । ननु तर्हि तत् कथं ज्ञेयमिति चेदाह—स्वात्मनेति । शुद्धात्मरूपेण स्थितमित्यर्थः । विषयविनिर्मुक्तं शुद्धचिद्रूपेण स्थितमिति भावः । यद्वा स्वात्मना स्थितं दृश्याऽनात्मव्यावृत्तद्रष्टृमात्रात्मना स्थितमिति भावः । एवंविधं

१. ज्ञातस्वात्मस्वरूपो—क० । २. देशस्व—क० ।
३. स्वरूपं—ग० घ० । ४. मन्या—क० ।

देवादितिर्यगन्तानां भान्तं भानैरभासितम् ।
भान्तं सर्वत्र सर्वस्य सर्वदा मानवर्जितम् ॥ ९ ॥
कथं कुत्र कदा केन निरूप्येतापि लेशतः ।
मन्नेत्रं दर्शयेत्येवमुक्तमेतत् प्रियाधुना ॥१०॥

क्व पश्यामीति चेदाह—शुद्धेति। शुद्धायां विषयाकाररहितायां बुद्धौ करणव्यापारानपेक्षमेव स्वरूपं ज्ञेयमिति भावः ॥ ८ ॥ नन्वदृश्यं तत् कथं पश्यामीति चेदाह—देवेति। देवः सदाशिवो हिरण्यगर्भः, [1]तिर्यग् अतिसूक्ष्मस्तम्बाख्यः कृमिः, देवादितिर्यगन्तानामात्मत्वेन भासमानः। ननु तर्हि मम कुतो न भासत इति चेदाह—भानैरभासितम्। भानैः परिच्छिन्नैर्दृश्याकारैर्ज्ञानैः। नास्ति भासितं यस्य। बुद्धेर्दृश्याकारैराच्छादितत्वान्नात्यन्तं भासते, किन्तु [2]घनाच्छन्नार्कवद्भासत एव। दृश्याकाररहितायां बुद्धौ तु निरभ्रनभोगतार्कवदत्यन्तं भासत इति भावः। ननु बुद्धावेव भासमानत्वात् परिच्छेदः प्राप्त इति चेदाह—सर्वत्रेति। सर्वस्य सर्वत्र सर्वदा घटादिकं भासमानं तद्भासैव भासते। सर्वत्र भासमानसूर्यालोकस्य[3] भित्तावत्यन्ताभिव्यक्तिवच्छुद्धबुद्धावभिव्यक्तिरिति भावः। ननु [4]प्रमाणव्यापारोपरमे न तस्य भासनं स्यात्तत् कथं सर्वदेति चेदाह—मानवर्जितमिति। प्रमाणव्यापाराविषयमित्यर्थः। [5]करणव्यापारस्य कर्तयंप्रवृत्तेरत एवादृश्यमपीति भावः ॥ ९ ॥ तत्र प्रमाणाप्रवृत्तेः कथं केन रूपेण कुत्र देशे कदा काले केन प्रमाणेन लेशतोऽपि निरूप्येत[6]? प्रमाणाविषयत्वादत्रेदानी[7]मीदृशोऽयमिति निरूपयितुमशक्य एवेति तात्पर्यम्। अत्र दृष्टान्तः—मन्नेत्रमिति। एतत् आत्मानं निरूपयेति[8] ॥ १० ॥

---

१. तिर्यग्गति–क०। २. घन–ख० ग० घ०। ३. मानसूर्यो लो–क०। ४. ब्रह्मणि–क०। ५. कारण–क०। ६. निरूप्यते–क०। ७. दानीं माह–क०। ८. यति–ख० ग०।

नात्राचार्यस्योपयोगो यथा नयनदर्शने ।
निपुणोऽपि महाचार्यः कथं नेत्रं प्रदर्शयेत् ॥११॥
अतो गुरुरुपायोऽत्र तदुपायप्रदर्शनात् ।
तत्ते वक्ष्याम्युपायं तच्छृणु संयतमानसः ॥१२॥
यावत् त्वमात्मनि ममेत्येवं तु प्रतिपश्यसि ।
ततः परं निजं रूपं यन्ममेति न भाति ते ॥१३॥
गत्वैकान्ते विविच्यैतद्यद्यद् भाति ममत्वतः ।
तत्तत् परित्यज्य परं स्वात्मानमभिलक्षय ॥१४॥
यथाहं ते ममत्वेन भासनान्नात्मता मयि ।
सम्बन्धमात्रादात्मीया न स्वरूपगता[1] ह्यहम् ॥१५॥

आत्मनोऽ[2]निरूपणीयत्वादेवात्मदर्शने न साक्षादाचार्यस्योपयोग इत्याह—नात्रेति । निपुणः कुशलः । महान् तपोमाहात्म्यादियुक्तः ॥११॥ नन्वेवं चेद् गुरुः शिष्यस्य किं कुर्यात्तदाह—अत इति । निरूपणासमर्थत्वात् । उप समीपे अयति गच्छति येन सः । शिष्यस्य पराग्दृशोऽतिदूरायितमात्मानं प्रत्यग्दृष्ट्युत्पादनेन समीपीकरोति गुरुरिति तात्पर्यम् । अत्र आत्मावगमे । गुरावुपायपदं योजयति—तदुपायेति । तस्यात्मदर्शनस्योपायः साधनं तस्य प्रदर्शनात् । तत्तस्माद् गुरोरुपायप्रदर्शकत्वात् । उपायमहं वक्ष्यामि ॥ १२ ॥ आत्मविषये यावन्ममेति पश्यसि ततः परं तेभ्यो भिन्नं यत्तव ममेति न भाति तन्निजं रूपं विविच्येति सम्बन्धः ॥ १३ ॥ एकान्तस्थाने गत्वा । एतत् मयोक्तं यन्ममेति न भाति तत् । विविच्य विवेचय । एवं विवेचनकाले ममत्वेन यद् यद् भाति तत्तत् परित्यज्य अनात्मेति निश्चित्य ततः परं यन्ममत्वाऽनाक्रान्तं तत् स्वात्मत्वेनाभिलक्षय ॥ १४ ॥ एतदेव विविच्योपपा-

१. तास्म्य–ख० । २. निरू–क० ख० ।

ममार्थमखिलं त्यक्त्वा यत्त्यक्तुं नैव शक्यते ।
तमात्मानं समालक्ष्य परं श्रेयः समाप्नुहि ॥१६॥
इत्युक्तः प्रियया हेमचूड उत्थाय वै द्रुतम् ।
ययावश्वं समारुह्य तत्क्षणे नगराद् बहिः ॥१७॥
उद्यानं नन्दनसमं प्रविश्य क्षणमात्रतः ।
वनान्तः सौधमुन्नम्रं स्फाटिकं प्रविवेश ह ॥१८॥
विसृज्यानुचरान् सर्वान् द्वारपालानशासयत् ।
न कोऽप्यत्र प्रविशतु मय्येकान्तविचारणे ॥१९॥
राजामात्याश्च गुरवो राजा वाऽप्यत्र सङ्गतः ।
अप्रवेश्या एव यावदहमाज्ञां दिशामि वः ॥२०॥
इत्युक्त्वारुह्य सौधाग्र्यं नवमीं भूमिमाविशत् ।
तत्र वातायने चित्रे सर्वलोकावलोकने ॥२१॥
आसने मृदुतूलाढ्ये विवेशान्यविवर्जितः ।
मनः समाधाय दृढं विचारमकरोत्तदा ॥२२॥
नूनमेते जनाः सर्वे कथमेवं विमोहिताः ।
[1]नैकोऽप्यत्र विजानाति स्वात्मानं लेशतोऽपि वै[2]॥२३॥

दयति—यथेति । न स्वरूपगता न स्वरूपान्तर्भूता ॥ १५ ॥ एवं ममेति भासमानमखिलमर्थं नाहमिति निश्चयेन त्यक्त्वा यत्त्यक्तुः स्वरूपं केवलचित्प्रकाशरूपमखिलत्यागावधिभूतं त्यक्तुं न शक्यते ॥१६–१७॥ उद्यानं क्रीडावनम् । उन्नम्रमुच्चम् ॥ १८ ॥ अत्र मत्समीपे । एकः अद्वितीयः, अन्तः सर्वनिषेधावधिभूत आत्मा, तस्य विचारणं विवेचनम् । तत्परे मयि सतीति यावत् ॥१९-२०॥ उपर्युपरि विद्यमानभूमिषु नवमीं भूमिम् । सर्वलोकानामवलोकनं यत्र । अत्युच्चामिति यावत् ॥ २१–

१. न को–क० । २. च–क० ।

सर्वोऽपि स्वात्मनो हेतोः करोति विविधाः क्रियाः ।
केचित् पठन्ति शास्त्राणि साम्नायाङ्गानि[1] नित्यशः ॥२४॥
केचिद्धनान्यर्जयन्ति केचिच्छासति चावनिम् ।
अन्ये युध्यन्ति रिपुभिरन्ये भोगैकलम्पटाः ॥२५॥
कुर्वन्त्येतत् स्वार्थमेते [2]स स्वात्मा कतमो भवेत् ।
नैनं जानाति कोऽप्यत्र कुत एवमयं भ्रमः ॥२६॥
अहो यथावदात्मानमविदित्वैव वै कृतम् ।
व्यर्थं स्वप्ने कृतमिव तदद्य विमृशामि तम् ॥२७॥
गृहधान्य[3]राज्यधनयोषित्पश्वादि[4] किञ्चन ।
न मे स्वरूपं भवति त्वनहन्ताश्रयत्वतः ॥२८॥
मदर्थं भूतताहेतोर्देहोऽहं स्यां हि सर्वथा ।
नूनं क्षत्रियदायादो गौराङ्गोऽहं न संशयः ॥२९॥
अहन्तया समाक्रान्तास्तथैतेऽपि जनाः परे ।
इति निश्चित्य दध्यौ तं देहं राजकुमारकः ॥३०॥
अथ देहस्य चात्मत्वं प्रतिषेद्धुं प्रचक्रमे ।
अहो कथं देह एष ममतायाः समाश्रयः ॥३१॥

२३ ॥ स्वात्मनः सुखहेतोः । आम्नायो वेदः ॥२४–२६॥ मया कृतम् । यस्मादज्ञानात् कृतं व्यर्थं तत् तस्मात् ॥ २७ ॥ विमर्शनप्रकारमाह—गृहेत्यादि । अनहन्तेति । अहमित्यभासनेनाहन्ताश्रयत्वाभावात् ॥ २८ ॥ मदर्थेति । अहमित्यस्मत्प्रत्ययविषयभूतत्वाद्धेतोर्देहोऽहं स्याम् । एतदेव द्रढयति—नूनमिति ॥ २९ ॥ एतेषां जनानामप्यात्मा[5] देह एवेति संभावयति—अहन्तेति । तथैते देहात्मान एव । देहमात्मत्वेन दध्यौ चिन्तयामास ॥ ३० ॥ अथ ध्यानानन्तरम् । देहस्वभावमुपलभ्य

१. यानि च–क० । २. स्वस्वात्मा–क० घ० । ३. धान्यं–घ० । ४. दि किञ्च न–क० । ५. प्यात्मदेह–क० ।

रुधिरास्थ्यादिसंघातः प्रतिक्षणविकारवान् ।
मम रूपं भवेन्नूनं छिन्नमेतत्तु लक्ष्यते ॥३२॥
काष्ठलोष्टसमत्वेन स्वप्नादौ चान्यथा स्थितः ।
नाहं देहोऽन्य एव स्यां प्राणोऽप्येष तथाविधः ॥३३॥
मनो बुद्धिश्च नाहं स्यां यत एतन्ममेरितम् ।
अतो देहादिबुद्ध्यन्ता[1]दन्य एव न संशयः ॥३४॥
अहं कदाचिन्नास्मीति भासनाभावहेतुतः ।
सर्वदाऽहं भासमानः स्थित एव न संशयः ॥३५॥
भासमानस्य तु मम केन भानमिति स्फुटम् ।

ममताश्रयस्याऽनात्मत्वमिति हेमलेखोक्तं स्मृत्वाह—अहो इति ॥ ३१ ॥ कथं मम रूपं भवेत् । हेत्वन्तरमप्याह—छिन्नमिति ॥ ३२ ॥ देहैकदेशरूपं हस्ताद्यङ्गं छिन्नं सदहन्तानाश्रयत्वेन काष्ठलोष्टसमत्वेन यस्माल्लक्ष्यते, अतो मम रूपं देहः कथम्? अथ च स्वप्नादौ अन्यथैवायं देहः स्थितो लक्ष्यते। अनुसंधानेन जाग्रत्स्वप्नयोरेकात्मत्वनिश्चयाद्देहस्य पृथग्रूपत्वान्नात्मत्वमिति भावः। आदिपदेन सुषुप्तिर्जन्मान्तरं वा। तथाविधो ममत्वाद्याश्रयः ॥ ३३ ॥ ममेरितं ममत्वेनोक्तम्। अतो देहादेर्ममत्वाश्रयत्वात् ॥ ३४ ॥ देहादीनां ममत्वाश्रयत्वेनाऽनात्मत्वादन्यस्याऽनुपलम्भात् सुषुप्तौ शून्योपलम्भाच्च शून्यमात्मेति प्राप्ते आह—अहमिति। अहं नास्मीति कदाचिदपि भासनाभावाद्धेतोः सर्वदा भासमानोऽहं स्थित एव सद्रूप एव न शून्यरूप इत्यर्थः। सुषुप्तावपि नास्मीति न प्रामाणिकः प्रत्ययः। तदाऽनुभवितुरभावे व्युत्थितस्य 'न किञ्चिदवेदिषम्' इति दृश्यसामान्यादर्शनस्मृत्यनुपपत्तेः। तथा चात्माऽशून्यरूपः सर्वदाऽस्मीति भासत एव। कदाचिदपि नाहमस्मीति भासनाभावादिति भावः ॥ ३५ ॥ केन हेतुना। घनाच्छन्नार्क-

१. द्ध्यन्तस्त—क० ।

नहि जानामि तत् कस्मादेतन्न विदितं मया ॥३६॥
घटादिकं चक्षुराद्यैर्भासते भुवि नान्यतः ।
प्राणस्त्वचा विभात्येष मनो ज्ञानेन चोहितम् ॥३७॥
एवं बुद्धिः केन च मे भासनं नाविदं त्विदम् ।
अथैषां भासनादेव नात्मा भासेत मे यदि ॥३८॥
तर्हि नो विमृशाम्येतांस्ततो मे भासनं भवेत् ।
इति निश्चित्य मनसा जहौ मानसगोचरम् ॥३९॥
अथाऽपश्यदन्धकारं गाढं तत् क्षणमात्रतः ।
इदं ममात्मनो रूपमिति निश्चितमानसः ॥४०॥

वत् सामान्येन भासमानस्य केन विशेषहेतुना स्फुटं भानमयमहमस्मीति विज्ञानं स्यादिति नहि जानामि, तदेतत् कस्मान्निमित्तान्न विदितम् ॥ ३६ ॥ ज्ञानेन ज्ञानात्मककार्यहेतुना । ऊहितं कार्यकारणत्वेनानुमितम् ॥ ३७ ॥ एवं बुद्धिः कार्येणानुमितेत्यर्थः । मे मम । अथेति निमित्तसम्भावनाद्योतकम् । यथा हि प्रतिबिम्बभासनकाले शुद्धदर्पणो न भासते, एवमेषामनात्मनां भासनादात्मा न भासत इति सम्भावयति—एषामिति ॥ ३८ ॥ एवं दृश्यभासनसामान्या[1]भावमात्मविज्ञाने निमित्तं निश्चित्याह—तर्हीति । यद्यनात्मभासनादात्मा न भासते तर्ह्येताननात्मभावान्न विमृशामि । नह्येते स्वतो भासन्ते, अविमृष्टानामभासनात् । यथा हि घटविमर्शनकाले ततोऽन्यन्न भासते तथा [2]अनात्मविमर्शनकाले आत्मा न भासत इति । अन्याविमर्शने[3] आत्मभासनं भवेदिति भावः । विमर्शः अयमीदृश इत्यादि मानसोल्लेखः । मनसा मननात्मकेन सूक्ष्मबुद्धिरूपेणान्तःकरणेन मानस[4]-गोचरं मानसोल्लेखम्[5] ॥ ३९ ॥ अथ यत्किञ्चिद्भावमात्रानुल्लेखा-

---

१. सामान्य–घ० । २. अन्त्य–क० । ३. विमर्शनेन–क० ।
४. गोऽगोचरः–क० । ५. ल्लेखः–क० ।

प्रहर्ष[1]मतुलं लेभे चाथ भूयो व्यचिन्तयत् ।
नूनं पुनः प्रपश्यामीत्येवं चित्तं रुरोध वै ॥४१॥
चञ्चलं हठयोगेन [2]निरुद्धं समवैक्षत ।
तेजःपुञ्जमनाद्यन्तं भास्वरं क्षणमात्रतः ॥४२॥
प्रबुद्धश्चिन्तयामास किमेतदिति विस्मितः ।
अहो पश्यामि विविधं किमात्मानं कथं त्विदम् ॥४३॥
भूयः पश्यामि चेत्येवं रुरोध स्वमनस्तदा ।
विलीनं निद्रया चित्तं बभौ चिरतरं दृढम् ॥४४॥
तत्रापश्यत् स्वप्नजालं विचित्रानेकदर्शनम् ।
अथ प्रबुद्धोऽत्यन्तं वै चिन्तां प्राप महत्तराम् ॥४५॥
किमहं निद्रयाच्छन्नः स्वप्नान् समवलोकयम् ।
तमस्तेजश्चापि दृष्टमहो स्वप्नात्मकं[3] भवेत् ॥४६॥

नन्तरम्, तत् तमः, तदिदमात्मनो रूपमिति योजना। क्षणमात्रतः अन्धकारदर्शनोत्तरक्षणे। निश्चितमानसः निश्चितं मानसं मनोविकारात्मकं तमो येन ॥ ४० ॥ प्रहर्षम् आत्मा दृष्ट इति [4]भ्रमजनितम् ॥ ४१ ॥ चञ्चलं मनो हठयोगेन किञ्चिदनुल्लिखामीति दृढसङ्कल्परूपाभिनिवेशमात्रेण, न तु[5] प्राणायामनिरोधाद्यभ्यासेन। भास्वरं प्रकाशैकनिविडम् ॥४२॥ क्षणमात्रतः [6]प्रबुद्धस्य निरोधात् परावृत्त्य। एतत्तमस्तेजश्च[7] इदं विरुद्धरूपत्वमात्मनः कथमिति विस्मितः ॥४३॥ तदा [8]रोधानन्तरम्, निद्रया परिपक्वकर्म[9]सामान्याभावरूपया। हेतौ तृतीया। निद्राहेतुना चित्तं विलीनम् ॥ ४४–४५ ॥ तमःप्रमुखं दृष्टमपि स्वप्नात्मकमेव स्यादिति सम्भावयति—तम इति ॥ ४६ ॥ मनो

---

१. तुमुलं–क० घ० । २. निरुद्धे–घ० । ३. त्मको–क० ।
४. श्रम–क० । ५. ननु–क० ख० ग० । ६. प्रबुद्धः–क० ।
७. एतन्मे तेज–क० । ८. रोधना–घ० । ९. सामान्य–ख० ।

स्वप्नस्तु मानसोल्लासस्तदेतं वर्जये कथम् ।
भूयो निगृह्य पश्यामीत्येवं निश्चित्य वै दृढम् ॥४७॥
रुरोध चित्तं तु हठात्तदेतदभवत् स्थिरम् ।
तदानन्दसमुद्रान्तर्निमग्न इव सोऽभवत् ॥४८॥
पुनश्चित्तप्रचलनात् प्रबुद्धोऽभवदञ्जसा ।
किमेष मेऽभवत् स्वप्नश्चाऽथवा चित्तविभ्रमः ॥४९॥
आहोस्वित् सत्य एष स्यादविचिन्त्यं विभाति मे ।
नाऽन्वभूवं किञ्चिदपि सुखमाप्तं कथं मया ॥५०॥
अहोऽस्य सुखलेशस्य तुल्यं नास्त्यत्र किञ्चन ।
अहं सुषुप्तवन्मूढः कथमेतत् सुखं स्थितम् ॥५१॥
नात्र हेतुं कञ्चिदपि लक्षये तत् कथं भवेत् ।
आत्मावगमनायाहं प्रवृत्तोऽप्यद्य नाविदम् ॥५२॥
आत्मानमन्यच्चान्यच्च पश्यामि किमिदं भवेत् ।
प्रकाशो वान्धकारो वा सुखं वान्यदथापि वा ॥५३॥

निग्रहीतुं प्रवृत्तस्य मे मानसं प्रसरत्येव, तत् कथमत्र कर्तव्यमिति चिन्तयति—स्वप्न इति । एतं स्वप्नम् ॥ ४७ ॥ चित्तं दृढं रुरोधेत्यन्वयः । तदा रोधानन्तरम् । ईषत् किञ्चित्कालं चित्तं स्थिरमभवत् । तदा निरुद्धचित्तदशायाम् ॥ ४८ ॥ प्रबुद्धः निरोधच्युतः । निरोधकालिकं सुखमात्ररूपं स्वात्मानमविदन्[1] विकल्पयति—किमेष इति ॥ ४९ ॥ विषयानुभवेन सर्वत्र सुखानुभवः, तत् कथं किञ्चिदप्यननुभूय निरोधकाले सुखानुभव इति शङ्कते—नान्वभूवमिति ॥ ५० ॥ किञ्चन सुखम् । सुषुप्तवत् बाह्यान्तराग्रहणेन मोहग्रस्तोऽहं स्थितः । तत्र कथमेष सुखानुभवः ॥ ५१ ॥ अत्र सुखोपलब्धौ तत् सुखं हेतुं विना कथं भवेत् ॥ ५२ ॥ आत्मानं नाविदमित्यन्वयः । अन्यच्चान्यच्च

१. विव कल्प—क० ।

आत्मा भवेन्मम तथा क्रमिकैतत्स्वरूपकः ।
नान्तमेम्यत्र भूयस्तां पृच्छामि विदुषीं प्रियाम् ॥५४॥
इति निश्चित्य द्वारेशमाहूयाज्ञां समादिशत् ।
स्वसन्निधानमानेतुं हेमलेखां नृपात्मजः ॥५५॥
अथ प्राप्ता मुहूर्त्तेन द्वारिकस्य निदेशतः ।
आरुरोह महासौधं मेरुमिन्दुप्रभेव सा ॥५६॥
अथापश्यद् राजसुतं प्रियं शान्तात्ममानसम् ।
निश्चलं निर्विकारं च संहृतेन्द्रियमण्डलम् ॥५७॥
समीपमुपसृत्याशु तद्विष्टरमुपारुहत् ।
एकासनोपविष्टायां तस्यां स निमिषार्द्धतः ॥५८॥
उन्मील्य नयने पार्श्वे समालोकयदास्थिताम् ।
आलोकिता प्रियं शीघ्रं प्रणयात् परिषस्वजे ॥५९॥
ततः प्राहामृतस्यन्दि सुन्दरं वचनं प्रिया ।
नाथ किं भवताहूता कच्चित्ते नीरुजं तनौ ॥६०॥
वदाहूतौ कारणं मे यदर्थमहमागता ।
एवं प्रियानुयुक्तः स बभाषे स्वात्मनः प्रियाम् ॥६१॥
प्रिये त्वयानुशिष्टोऽहं विविक्तेऽत्र समास्थितः ।

तमःप्रकाशादिरूपम् । अपिरेवार्थे । अथ प्रकाशादिभ्योऽन्यदेव वेत्यर्थः ॥ ५३ ॥ अथवा तथाऽनुभूततमःप्रभृतिभावक्रमयुक्तसङ्गस्वरूपक आत्मा भवेत् । अत्रान्तं निश्चयं नैमि न प्राप्नोमि ॥ ५४–५६ ॥ हेमलेखा अपश्यत् । शान्तं निश्चेष्टम् । आत्मा शरीरं मानसञ्च । चलनं[1] प्राणचारः । विकारः कामादिः ॥ ५७ ॥ भर्तृसमीपम् । तस्यां हेमलेखायां स हेमचूडः ॥ ५८ ॥ प्रियां समालोकयत् । आलोकिता सा ॥५९–६१॥ विचारः परम उपादेयो यस्य, तत्पर इति यावत् । स्वात्म-

१. चलः–ख० ग० घ० ।

विचारपरमः स्वात्मरूपलक्षणहेतवे ॥६२॥
तत्परेणापि चित्रं तु लक्षितं तत् पृथक् किमु ।
आत्मनः सर्वदा प्राप्तेर्भासमानत्वतोऽपि च ॥६३॥
असम्यग् भासनं चान्यभासनस्य निमित्ततः ।
इति मत्वा निरुध्यान्यभासनं सुव्यवस्थितः ॥६४॥
अपश्यमन्धकारं च प्रकाशमन्यदेव च ।
क्वचित् सुखं महत् प्राप्तं किमेतद्वद मे प्रिये ॥६५॥
इदमेवात्मनो रूपमथवाऽन्यद् भवेत् क्वचित् ।
सम्यग् विविच्य कथय यथा तमभिलक्षये ॥६६॥
इत्युक्ता साऽब्रवीद् हेमलेखा ज्ञातपरावरा ।
शृणु प्रिय प्रवक्ष्यामि समाहितधियाऽखिलम् ॥६७॥
यस्त्वया बाह्यसंरोधे व्यवसायः समेधितः ।
स शुभः सम्मतः सर्वैः सुमुख्यश्चात्मवेदिभिः ॥६८॥
विना तेन न तत् प्राप्तं केनापि कुत्रचित् क्वचित् ।

रूपस्य लक्षणं विज्ञानम्, तद्धेतुर्यस्य मोक्षस्य तदर्थं विचारपरम इति सम्बन्धः ॥ ६२ ॥ तत्परेणापि अनन्यमानसेनापि । चित्रम् अनेकविधम् । पृथग् अत्यन्तभिन्नम् प्रकाशान्धकारादिरूपम् । स्वेन यथा विचारितं तदाह—आत्मन इति । आत्मत्वादेव प्राप्तत्वम्, प्रकाशरूपत्वाद्भासमानत्वम् ॥ ६३ ॥ एवंविधस्याप्यसम्यग्भासनमन्यभासननिमित्तात् । अन्येषां भासनं भासनकरणमिन्द्रियादि[1] निरुद्ध्य ॥ ६४–६५ ॥ इदमेव प्रकाशान्धकाराद्यन्यतमम् । अन्यत् प्रकाशान्धकारादिभ्यः । क्वचित् समाधेरन्यत्र ॥ ६६–६७ ॥ व्यवसायः यत्नः । शुभफलप्रदत्वाच्छुभः । अनन्तरसाधनत्वात् सुमुख्यः ॥ ६८ ॥ तेन निरोधेन । तत् अद्वैतात्मविज्ञानम् । कुत्रचित् काले क्वचिद्देशे ।

१. निरुक्तम्—क० ।

न तत् कारणतामेति तत्प्राप्तौ प्राप्तभावतः ॥६९॥
अप्राप्तावात्मता न स्यादात्मत्वेऽनाप्तता कुतः ।
अप्राप्यः सर्वथैवात्मा प्राप्तिस्तस्य न विद्यते ॥७०॥
अप्राप्तस्य भवेत् प्राप्तिरात्मत्वान्नाप्तिरस्त्यतः ।
तन्निरोधोऽपि नाप्त्यर्थस्त्वत्र पश्य निदर्शनम् ॥७१॥
अन्धकारसमाच्छन्नं किञ्चित् तस्य निरोधतः ।
दीपाद्यैराप्यते प्राप्तमिव लोके यथा तथा ॥७२॥
यथा कश्चिद् भ्रान्तचित्तः [1]क्वचिद्विस्मृतनिष्ककः ।
अन्यचिन्तानिरोधेन समाहिततया पुनः ॥७३॥
आसादयति तन्निष्कं नष्टं प्राप्तं यथा तथा ।
न निरोधोऽत्र हेतुः स्यान्निष्काप्तौ तु यथा तथा ॥७४॥

नन्वेवमात्मज्ञानस्य साधनसाध्यत्वेन घटादिज्ञानतुल्यत्वे घटवदात्मनो जडत्वमनात्मत्वञ्च स्यादित्यत आह—न तदिति। तत् निरोधनम्। तत्प्राप्तौ आत्मविज्ञानप्राप्तौ। प्रकृते आत्मरूपमेव विज्ञानं विवक्षितम्, न त्वात्मनो विज्ञानम्। अतस्तस्य प्राप्तत्वमिति भावः॥ ६९ ॥ एतदेव साधयति—अप्राप्ताविति ॥ ७० ॥ तन्निरोधः मनोनिरोधः। निदर्शनं दृष्टान्तम् ॥ ७१ ॥ किञ्चित् घटादि। तस्य अन्धकारस्य दीपसूर्यादिभिर्निरोधतः परिहारतः घटाद्याप्यते। अत्र स्थितमपि घटादि यथा तमोनिरोधात् प्राप्तमिव भवति, तथा स्वप्रकाशचिदेकरूपमात्मतत्त्वं वासनोद्भूतविकल्पैराच्छन्नमिव स्थितं विकल्पनिरोधेन प्राप्तमिव भवति। तथा च निरोधस्य न स्वरूपप्रापकत्वमिति भावः॥ ७२ ॥ नात्रान्धकारवत् स्वरूपातिरिक्तमाच्छादकं सम्भवतीत्याशयेन दृष्टान्तान्तरमाह—यथेति। निष्कं सुवर्णम् ॥ ७३ ॥ प्राप्तं यथा प्राप्तमिवेति द्वितीयं यथापदं योजनीयम्। अत्र यथा अनष्टं निष्कं नष्टं प्राप्तमिव

१. कश्चि—क०।

आत्मलाभे न हेतुः स्यान्निरोधो बाह्यवस्तुनः ।
त्वया न लक्षितः स्वात्मा तत्र व्युत्पत्तिवर्जनात् ॥७५॥
यथा प्रकाशेऽव्युत्पन्नो रात्रौ राजसभां गतः ।
पश्यन् सभ्यांश्च दीपांश्च न जानाति प्रकाशकम् ॥७६॥
शृणु प्रिय निरोधान्ते ह्यन्धकारो विलोकितः ।
अन्धकारावलोकादौ शेषभावस्तव स्थितः ॥७७॥
तं भावं भावय सदा परमानन्ददायकम् ।

चोच्यते, तथा अप्राप्त आत्मा प्राप्तो भवति। अत्र यथाऽन्यचिन्तानिरोधो न निष्कप्राप्तौ हेतुस्तथा प्रकृतेऽपि निरोधो न हेतुः ॥ ७४ ॥ बाह्यवस्तुनो निरोधः। ननु तर्ह्यात्मा मया निरोधेनापि कुतो न लक्षित इति चेदाह—तत्रेति। व्युत्पत्तिः वस्तुपरिचयः ॥ ७५ ॥ अव्युत्पत्त्या दृश्यमानमपि नोपलक्षयतीत्यत्र दृष्टान्तमाह—यथेति। अव्युत्पन्नः प्रकाशो हि प्रदीपप्रसृतो भास्वररूपवान् भावावभासक इति परिचयहीनः। एवं त्वया न लक्षित इति योज्यम् ॥ ७६ ॥ एवं स्वरूपानुपलक्षणेऽव्युत्पत्तिं निमित्तमुक्त्वा तद्व्युत्पत्त्यर्थमाह—शृण्विति। निरोधो ह्यविकल्पदशा। तत्रान्धकारावलोकनरूपविकल्पासम्भवान्निरोधान्ते इत्युक्तम्। तादृशान्धकारावलोकनस्यादौ[1] पूर्वदशायां निर्विकल्परूपायाम्। यस्तव शेषभावः स्थितः परिशिष्टं रूपं स्थितम्। [2]तथा हि देहाद्यतिरिक्तं ज्ञानमात्मनो रूपम्, तच्च विकल्पकाले [3]दृश्यसंवलितमेव प्रकाशते। निरोधकाले दृश्यपरिच्युतौ यद् ज्ञानमात्रं स्थितं तत्परिशिष्टं रूपं शेषभाव इत्युच्यते। न च तादृशशेषभावोऽपह्नोतुं शक्यः, स्वप्रकाशत्वेन तस्य प्रकाशमानत्वात्, व्युत्थितस्य तस्यैतावन्तं कालं किञ्चिदविदन्नासमित्यनुसन्धानाच्चेति ॥ ७७ ॥ तं भावं

१. लोकस्यादौ—ख० ग० घ०। २. यथा—क०।
३. दृश्यं सं—क० ख०।

अत्र सर्वे महामोहग्रहग्रस्ताः पराग्दृशः ॥७८॥
अन्विष्यान्विष्य विहता न तां प्रापुश्च भावनाम् ।
सन्ति लोके शास्त्रविदः कुशलाश्च सुतार्किकाः ॥७९॥
अविदित्वा भावममुं शोचन्त्येव दिवानिशम् ।
शब्दार्थशिल्पमात्रेण नहि तत्पदमाप्यते ॥८०॥
यावदन्वेषणं कुर्याद्विचारं वापि पण्डितः ।
तावन्न प्राप्यते तद्वै यतो न ग्राह्यमेव तत् ॥८१॥

शेषभावम्, दृश्यरहितदृङ्मात्ररूपम् । सदा अहमस्मीति भावय अनुसन्धिपरो भव । [1]दुःखमूलद्वैता[2]भासवैधुर्येण [3]दुःखादिरूपानन्दाच्छादकाभावादभिव्यक्त[4]परमानन्दरूपत्वेन प्रकाशमानत्वात् परमानन्ददायकमिति । अत्र एवंविधे स्वरूपे, सर्वे शास्त्रज्ञा योगिनश्च । [5]पराग्दृशः बहिर्मुखान्तःकरणाः[6], पश्यामीति परिच्छिन्नाभिनिवेशपरा[7] इति यावत् । यदुक्तम्—"पश्यामीति पराग्दृष्टेरलभ्यं तत् परं पदम्" इति ॥ ७८ ॥ यतः सर्वे तत्र महामोहग्रस्ताः, अत आह—अन्विष्येति । तद्भावाप्राप्त्या विहताः श्रान्ताः । तां भावनां शेषभावानुसन्धिरूपाम् । ननु मास्त्वेषा भावना, शास्त्राभ्यासतर्कादिभिरेव लब्धपुरुषार्था भवाम इति चेन्नेत्याह—सन्तीति । शास्त्रविदः श्रवणपराः । कुशलाः तार्किका मननपराः । एवंविधा अपि पराग्दृशो निदिध्यासनराहित्येन पुरुषार्थाप्राप्त्या शोचन्त्येवेति भावः ॥ ७९ ॥ शब्दार्थे श्रुतार्थे शिल्पो मननं तन्मात्रेण ॥ ८० ॥ नन्वतिसूक्ष्मोऽपि शास्त्रार्थो भूयः श्रवणमननाभ्यां चित्तमुपारोहति, एवमेष भावोऽपि श्रवणमननाभ्यामेव भूयःकृताभ्यां चित्तारूढो भवेत्, किं रोधरूपनिदि-

१. दृश्य–क० । २. भासन–क० ।
३. दृश्या–क० । ४. व्यक्तदृश्यप–क० ।
५. यः सदृशः–क० । ६. करणः–क० ।
७. पर–क० ।

गत्वा दूरं न तत् प्राप्यं स्थित्वा प्राप्तं हि सर्वदा।
न तद्विचार्यं विज्ञेयमविचाराद् विभासते ॥८२॥
धावन् स्वमूर्धच्छायेव न प्राप्यं क्रियया क्वचित्।
यथा हि निर्मलादर्शे प्रतिबिम्बसहस्रकम् ॥८३॥
पश्यन् बालोऽपि नादर्शं पश्यत्येवं जनः खलु।
पश्यन् स्वात्ममहादर्शे प्रतिबिम्बं हि जागतम् ॥८४॥
स्वात्मानं न विजानाति तद्व्युत्पत्तिविवर्जनात्।
यथा परिचिताकाशः पश्यन्नाकाशसंश्रितम् ॥८५॥

ध्यासनेनेति चेन्नेत्याह—यावदिति। अन्वेषणं [1]श्रवणम्, विचारं मननम्। कुत एवमिति चेदाह—यत इति। अस्याग्राह्यत्वेनालौकिकत्वान्न केवलश्रवणमननाभ्यां चित्तारूढतेति भावः ॥८१॥ अलौकिकत्वमेव तस्याह—[2]गत्वेति। अत्र गमनमिन्द्रियप्रसारः। स्थितिस्तदप्रसारः। विचारश्चिन्तनं चित्तप्रसारः,[3] अविचारस्तदभावः। पराग् वस्तु हि बाह्यमिन्द्रियव्यापारेण आन्तरं विचारेण ज्ञातुं शक्यम्, अस्य तु प्रत्यग्रूपत्वेनेन्द्रियमनोनिरोधमन्तरा दुर्विज्ञेयत्वमिति भावः ॥ ८२ ॥ सव्यापारेण न प्राप्यमित्यत्र दृष्टान्तमाह—धावन्निति। प्रमाणव्यापारस्य प्रमातर्यप्रसर इति तात्पर्यम्। वस्तुन्यव्युत्पन्नेन निरोधवतापि तद् दुर्विज्ञेयमिति वस्तुव्युत्पत्तये भूयः सदृष्टान्तं निरूपयति—यथेति ॥ ८३ ॥ बालः आदर्शेऽव्युत्पन्नः, पश्यन्नपीति सम्बन्धः। न पश्यति एष आदर्श इति न विजानाति। दार्ष्टान्तिके योजयति—एवं जन इति। जागतं जगत्सम्बन्धि प्रतिबिम्बम् ॥ ८४ ॥ चित्तसमारोहाय दृष्टान्तान्तरमाह—यथेति। व्युत्पत्तिर्हि वस्तुपरिचयः। यथा ह्याकाशमवकाशात्मकमिति कथञ्चित् परिचिताकाशः पुरुषः सर्वत्र

१. 'श्रवणम्' नास्ति–क०। २. यत इति–क०।
३. प्रसादो–ख०।

जगन्नावैति चाकाशं तथा स्वात्मस्वरूपकम् ।
नाथ सूक्ष्मदृशा पश्य ज्ञानज्ञेयात्मकं जगत् ।।८६।।
तत्र ज्ञानं स्वतः सिद्धं तदभावे न किञ्चन ।
प्रमाणानां प्रमाणं तदप्रमाणं स्वतो भवेत् ।।८७।।

जगत् [1]पश्यन् तदाश्रयमाकाशं च पश्यति । कथञ्चिदप्यपरिचिताकाशस्तु सर्वमाकाशाश्रितं जगत् पश्यन्नपि नाकाशं पश्यति । एवमपरिचितात्मस्वरूपः स्वात्मप्रतिबिम्बितं जगत् पश्यन्नपि नात्मानं पश्यतीति भावः ।।८५।। अव्युत्पत्त्या निरोधेनाप्यात्मा नोपलक्षित इति तत्र व्युत्पादनाय "शेषभावस्तव स्थितः" [६।७७] इत्याद्युक्तम्, तथापि तत्र प्रियस्याव्युत्पत्तिमालक्ष्य प्रकारान्तरेण तत्र व्युत्पादयितुं भूय आह—नाथेति । जगदस्तीति शेषः ।। ८६ ।। अनेकविधमपि जगत् संक्षेपेण ज्ञानं ज्ञेयमिति द्विरूपम् । तत्र ज्ञेयं प्रत्यक्षादिप्रमाणैः सिद्धमनात्मरूपं[2] चेति [3]तन्निरूपणमप्रयोजकमिति ज्ञानमेव निरूपयति—तत्रेति । तयोर्मध्ये इत्यर्थः । स्वतः प्रमाणमनपेक्ष्य । तदभावे न किञ्चनेति । प्रतिबिम्बानां दर्पणवत्तस्य सर्वाधिष्ठानत्वेन तदभावे न किञ्चिद् [4]भायात्, अतस्तदपह्नोतुमशक्यमिति तात्पर्यम् । ननु तदभावे न किञ्चनेत्यनुपपन्नम्, प्रमाणैः[5] प्रमेयस्य सिद्धत्वादित्याशङ्क्य प्रमाणानां प्रमाणत्वे सिद्धे प्रमाणैः प्रमेयं सेत्स्यति, प्रमाणत्वं च प्रमेये [6]व्यावृत्ति-[वृत्ति]क्रियामन्तरा न सिध्यति, तस्यां च क्रियायां [7]न प्रमाणस्य स्वातन्त्र्यम्, करणत्वात् कुठारवत् । अतः प्रमाणानां प्रमातारमन्तरा प्रमाणत्वासिद्धौ प्रमेयं न सिध्यतीति तात्पर्येणाह—प्रमाणानामिति ।

---

१. पश्येत्—क० ख० । २. स्वरूपं—ख० घ० ।
३. 'तन्निरू....ज्ञानमेव' नास्ति—क० ।
४. भूयात्—क० ख० । भायादिति तात्पर्यम्—घ० ।
५. प्रमाणं—क० । ६. अव्या—क० ।
७. 'न' नास्ति—ख० ग० ।

यतः प्रमाणानपेक्षमादिसिद्धमतस्तु तत् ।
[1]सिद्धिसाधकभावेन न तत्सिद्धिः कदाचन ॥८८॥
तत्र विप्रतिपन्नस्य न प्रश्नो नापि चोत्तरम् ।
अनपह्नवनीयं तन्महादर्शतलं भवेत् ॥८९॥

प्रमाणानां प्रमाणं स्वरूपसाधकमित्यर्थः । ननु प्रमाणं प्रमितं ह्यस्ति, तथा च प्रमातरि प्रमाणापेक्षायां तत्रापि प्रमात्रन्तरापेक्षायामनवस्थानं स्यादित्याशङ्क्याह—अप्रमाणमिति । न प्रमाणं यस्य तत्[2] । ननु तर्हि कथं तदस्ति ? तदाह—स्वत इति । स्वसत्तायामनन्यापेक्षमिति भावः ॥ ८७ ॥ कुत एवमिति चेदाह—यत इति । प्रमाणानपेक्षमिति । प्रमातुश्चिद्रूपत्वेन सदा प्रकाशमानत्वात् "नहि वैकर्तनं ज्योतिर्दीपालोकमपेक्षते" [प० प० १२] इति रीत्याऽप्रकाशितप्रकाशकप्रमाणस्य तत्रानुपयोग इति तात्पर्यम् । अतः साधनानपेक्षणात् । [3]सिद्धिसाधकेति । सिद्धिरुत्पत्ति[4]र्ज्ञप्तिर्वा, साधकं तयोः साधनम्, उत्पत्तिसाधनं ज्ञप्तिसाधनं वेत्यर्थः । सिद्धिसाधकस्य भावः सत्त्वम् । उत्पत्त्यादिसाधकसत्त्वेन कदाचिदपि न तत्सिद्धिः, चिदात्मन उत्पत्तिर्ज्ञप्तिर्वा न साधनान्तरेण युज्यत इति भावः । चिदात्मन उत्पत्तौ ज्ञप्तौ वा कर्तृकरणयोरपेक्षास्ति । तथा च चितिभेदासम्भवेनैक्यात् स्वस्य स्वसिद्धिकर्तृत्वकरणत्वानुपपत्तिः । अचिदात्मा तु चितिमन्तरा स्वयमेवासिद्धः कथं परसिद्धिं कुर्यादिति तात्पर्यम् । एतच्च श्रीप्रत्यभिज्ञायां "कर्तरि ज्ञातरि" [१।२] इति [5]सूत्रेण वितानितम् ॥ ८८ ॥ तत्र ज्ञानस्वरूपे । विप्रतिपन्नस्य नास्ति ज्ञानमित्याक्षेपपरस्य । न प्रश्नो नापि चोत्तरम् । सिध्यतीति शेषः । ज्ञेयस्य जडस्य स्वरूपमात्रपरिनिष्ठितस्वभावस्यान्यत्रास्ति नास्तीति विकल्पनसामर्थ्याभावात् । ज्ञानाधीनत्वादखिल-

१. सिद्ध—ग० । २. तम्—क० ख० ।
३. सिद्ध—क० । ४. स्तत्प्रति—क० ।
५. सूत्रे—क० घ० ।

तत्र सर्वं भासते वै दर्पणप्रतिबिम्बवत् ।
देशेन वापि कालेन परिच्छित्तिर्न विद्यते ॥९०॥
तदन्तर्भासमानत्वात् कथं ताभ्यां परिच्छिदिः ।
परिच्छेदस्य भानं तु गगने वस्तुभिर्यथा ॥९१॥

सिद्धेस्तदाक्षेपे न प्रश्नादिकं सिद्ध्यतीति तात्पर्यम्, यतस्तदपह्नवेऽस्ति नास्ति वेति प्रश्नाद्यसिद्धिरत आह—अनपह्नवनीयमिति । ननु ज्ञानं ज्ञेयमिति वस्तुद्वयम्, तत्र ज्ञानापह्नवे ज्ञेयस्य प्रकाश एवोपहतः स्यात्, न तु ज्ञेयस्वरूपस्योपहतिः, तथा च तदभावे न किञ्चनेति कथमित्याशङ्क्य ज्ञेयं ज्ञानान्न पृथगिति वक्तुमाह—तन्महादर्शेति ॥ ८९ ॥ तत्र महादर्शतलनिभे ज्ञानात्मनि । यथा हि दर्पणं विना प्रतिबिम्बं न किञ्चित्, एवं ज्ञानं विना ज्ञेयं न किञ्चिदिति भावः । ननु न तदन्तः सर्वं भासते, येन सर्वं प्रतिबिम्बात्मकं भवेत् । देशकालयोस्तत्परिच्छेदकयोस्तदनन्तर्गतत्वादित्याशङ्क्य नेत्याह—देशेनेति ॥९०॥ देशकालाभ्यां [1]ज्ञातस्य कुतो न परिच्छित्तिरिति चेदाह—तदन्तरिति । यथा हि दीपेन प्रकाशमानो घटादिर्दीपप्रकाशान्तर्निमग्न एव यावान्[2] घटादेरंशो दीपप्रकाशाव्याप्तस्तावान्न प्रकाशमानः, तथा ज्ञानेन प्रकाशमानं ज्ञानान्तर्निमग्नमेव निखिलं ज्ञेयम् । एवं घटाकारं ज्ञानमित्याद्यनुभवादपि भासमानो घटाद्याकारो ज्ञानान्तर्गत एव । नहि ज्ञानान्तर्भासमानघटाद्याकारादन्यो घटादिर्ज्ञानाद् बहिरभ्युपेयते, प्रमाणाभावात्, प्रयोजनाभावाच्च; प्रतिबिम्बानुमितबिम्बात्मकघटादेरनुमितिज्ञानभास्यत्वेन तदन्तर्निमग्नत्वेन ज्ञानान्तर्गतत्वसिद्धेश्च । तथा च देशकालयोरपि ज्ञेयत्वेन ज्ञानान्तर्गतत्वे सिद्धे स्वान्तर्गतेन न स्वपरिच्छेद इति भावः । परिच्छिदिः परिच्छित्तिः । ननु कथं तर्ह्यत्रेदानीमेतदज्ञानमिति परिच्छेदभानमिति चेद् व्यापकस्या-

---

१. ज्ञानस्य-घ० ।  २. 'यावान्' नास्ति-क० ।

राजपुत्र ! सूक्ष्मदृशा तल्लक्षय निजं वपुः ।
यत्र सामान्यचैतन्ये जगदेतद् विराजते ॥९२॥
तत्समावेशसंसिद्धया सर्वकर्तृत्वमाप्नुयात् ।
तस्योपलब्धिं वक्ष्यामि यतः प्राप्नोषि[१] तत्पदम् ॥९३॥

[२]परिच्छिन्नस्याकाशस्य स्वान्तर्निमग्नैर्घटाद्यैरिव परिच्छेदाभास एवेत्याह—परिच्छेदस्येति । वस्तुभिः घटाद्यैः ॥ ९१ ॥ एवमखण्डमपरिच्छिन्नं स्वप्रकाशं ज्ञानं निष्कृष्य तदेव समाधौ लक्षणीयं तव निजं वपुरित्याह—राजपुत्रेति । सूक्ष्मदृशेति विषयाकाररहितयाऽन्तर्मुख्येत्यर्थः । यथा हि घटादेः स्थूलं रूपमाकारः, सूक्ष्मं तु निखिलपार्थिवविकारानुस्यूतं पृथिवीसामान्यम्; एवं तत्तदाकाराखिलदृगनुस्यूता सामान्यचितिः सामान्यचैतन्यं तद्रूपं निजं वपुर्लक्षय । जगदिति । समाधौ सामान्यचिद्रूपं यत् प्रकाशते, व्युत्थाने विकल्पदशायां तदेव प्रतिबिम्बानां दर्पणवद् जगदाश्रयमिति भावः ॥ ९२ ॥ नन्वेवं महता प्रयासेन स्वरूप उपलक्षितेऽपि न किञ्चित् फलं दृश्यत इति चेदाह—तत्समावेशेति । तस्य जगत्प्रकाशाधिष्ठानसामान्यचैतन्यस्योपलक्षितस्य समावेशः सोऽहमस्मीत्यविच्छेदेनानुसन्धानम्, निदिध्यासनमिति यावत् । तस्य सिद्धिः परिपाकः, अयत्नेनानुवृत्तिरित्येतत् । सर्वकर्तृत्वं परमेश्वरतन्मयत्वम् । [३]यदुक्तम्—"ख्यातिमपूर्णामपूर्णख्यातिसमावेशदार्ढ्यतः तपय । सृज भुवनानि यथेष्टं[1] भज शम्भुं भव गुरुर्जगतः ॥" [ वि० प० ५२ ] इति । ननु सामान्यचैतन्यमित्यपि सुषुप्तिवद्दशाविशेषः, तत् कथं तस्य सर्वदशानुस्यूतत्वमिति [४]चेत्तस्य सर्वत्रोपलब्धिरस्तीत्याह—तस्येति । सामान्यचैतन्य-

1. "यथेच्छं स्थापय हर तिरय भासय च" इति मुद्रितग्रन्थपाठः ।

१. प्राप्नोति–क० । २. 'परिच्छिन्नस्या' नास्ति–क० ।

३. तदुक्तम्–घ० । ४. चित्तस्य–क० ।

निद्राजाग्रन्मध्यभागे संविद्भेदान्तरे तथा ।
मध्ये संविद्द्वयोश्च सूक्ष्मबुद्धयाऽभिलक्षय ।।९४।।

स्येत्यर्थः। उपलब्धिम् उपलब्धिस्थानम्। यतः यस्माद् मद्वचनात्। तत्पदं सामान्यचैतन्यस्थानम् ।। ९३ ।। तदेवाह—निद्रेत्यादि । सामान्यचैतन्यं नाम विषयाकाररहितं निर्विकल्पं ज्ञानम्, तच्च निद्राजाग्रन्मध्यभागे स्थितमभिलक्षयेति सम्बन्धः। निद्रा सुषुप्तिः। जाग्रद् विकल्पज्ञानधारा। अन्तःकरणात् पृथग्भूतैः स्थूलैरिन्द्रियैर्जाग्रति विषयग्रहणम्, स्वप्ने तु[1] मनोऽन्तःप्रविष्टैः प्राप्ततदैक्यकल्पैर्जलनिमग्नकरकासदृशैः संस्कारात्मकमानसविषयग्रहणम्। सुषुप्तौ पुनरिन्द्रियविशिष्टं मनः स्वयोनौ प्रकृतौ विलीयते। प्रकृतिश्च तदोन्मिषत्तमोऽशेन सत्त्वांशं रजोंऽशं चाच्छाद्य तिष्ठति । तदा घनच्छन्नार्कवदात्मापि तमसाच्छन्नः स्वयं मन्दं प्रकाशते। तथा च जाग्रत्सुषुप्त्योर्मध्यक्षणे मनसो विलयाभिमुखत्वान्न विषयग्रहणम्। प्राकृततमसोऽत्यन्तमनुन्मेषान्न स्वरूपाच्छादनमिति चिदात्मा विषयाकारमप्राप्तः[2] प्रकाशमानः सामान्यचैतन्यरूपः। एवं संविद्भेदान्तरे संविदां भेदो घटाकारता पटाकारतेत्यादि। एवं भिन्नसंविदामन्तरे मध्ये नहि ज्ञानस्य घटाकारतैव[3] पटाकारता, तद्भेदस्य प्रसिद्धत्वात्। सिद्धे च तद्भेदे घटाद्याकारशून्या शुद्धान्तरालदशाऽनिवार्यैव। एवं संविद्द्वयोर्मध्ये संविदित्यहङ्कारात्मा द्रष्टा। यथा मुक्तद्वारं[4] तडाकोदकं कुल्याद्वारा केदारोदकेनैकीभवति, तथा विषयग्रहणकाले द्रष्टृसंविद् दृश्यसंवित्पर्यन्तं करणद्वारैकीभवति। तत्र द्रष्टृस्थाने शरीरादि [दौ] द्रष्ट्राकारं चैतन्यम्, नभसि दृश्ये सूर्यमण्डले च तदाकारम्, मध्ये तु शुद्धमाकारवर्जितमिति। विषयाकारवर्जितं चैतन्यमात्मनो वास्तवं रूपम्। तस्योपलब्धिस्थानान्ये-

---

१. अनु–क० । २. समाप्तः–क० ।
३. तेव–क० ग० । ४. द्वारेण–क० ।

एतत्पदं निजं रूपं यत् प्राप्य न विमुह्यति[१] ।
एतदज्ञानमात्रेण प्रवृत्तं जगदीदृशम् ॥९५॥
नात्र रूपं रसो वापि न गन्धस्पर्शशब्दनम्[२] ।
न दुःखं न सुखं वा तु न ग्राह्यं ग्राहकं च न ॥९६॥
सर्वाश्रयं सर्वरूपमपि सर्वविवर्जितम् ।
एष सर्वेश्वरो धाता विष्णुरीशः सदाशिवः ॥९७॥

तानीति भावः ॥९४॥ नन्वेतदात्मोपलब्धिस्थानम्, तथा [३]च तत्रोपलभ्य आत्मा कीदृश इति चेदाह एतदिति । एतत्पदमेव निजं रूपम्, न ततोऽतिरिक्तं किञ्चित् । परित्यक्तदृश्याकारं शुद्धचैतन्यमेव द्रष्टुर्वास्तवं रूपमिति भावः । यत् प्राप्य अहमस्मीति दृढमुपलभ्य । एतदज्ञानमात्रेण अहमस्मीत्यनुपलम्भनेन । ईदृशं महादुःखमयम् । शुद्धचैतन्यं वास्तवमात्मनो रूपमिति ज्ञाते तत्तदाकारस्य दर्पणे प्रतिबिम्बवत् कल्पितत्वनिश्चये प्रतिबिम्बव्याघ्रादेर्यथा न दुःखदत्वमेवं दृश्याभासस्यापीति भावः ॥ ९५ ॥ यत एवंविधदशा[४]सूपलभ्यं शुद्धचैतन्यमेवात्मनो वास्तवं रूपमतो विषयाकाराभासदशायामपि दर्पणे प्रतिबिम्बवत् स्वरूपातिरिक्तं न किञ्चिदित्याह—नेति । अत्र आत्मनि । शब्दनं शब्दः । न ग्राह्यमिति विशेषरूपेण निषिद्धानां रूपादीनां सामान्यरूपेण निषेधः । ग्राहकमिन्द्रियादि ॥ ९६ ॥ प्रतिबिम्बानां दर्पण इव सर्वस्य दृश्यस्याश्रयम्, तथा सर्वरूपम् । एवमपि वस्तुतः सर्वविवर्जितम् । दर्पणस्य यथा सर्वप्रतिबिम्बाश्रयादित्वेऽपि वस्तुतः सर्ववर्जितत्वं तथेति भावः । "का सा परा चितिर्माता" [ ९।४ ] इति, "के वा वयम्" [ ९।५ ] इति च पृष्टम् । ततः "ज्ञाते स्वात्मस्वरूपे वै ततो ज्ञास्यसि मातरम्" [ ९।७ ] इत्युत्तरमुक्तं प्राक् । तत्र पुनः पृष्टा

१. ह्यसि—क० ग० । २. कम्—क० ।
३. 'च तत्रोपलभ्य' नास्ति—क० । ४. दृशा सूप—घ० ।

पश्येषदन्तः संरुध्य स्वात्मानं स्वात्मना सता ।
त्यक्त्वा बहिःप्रसरतामन्तःप्रसरणोद्यतः ॥९८॥
त्यक्त्वा पश्यामीति भावमन्धवन्निश्चलात्मना ।

हेमलेखा महता प्रबन्धेन स्वात्मरूपं विविच्य प्रोवाच । सम्प्रत्येवंविधं शुद्धं स्वात्मरूपमेव परचिदात्मकं मातृरूपमित्युपदिशति—एषेति । शुद्धः सामान्यचैतन्यरूप आत्मेत्यर्थः । सर्वेषां ब्रह्मादीनाम् ईश्वरस्तुर्य ईशस्तिरोधानक्रिय ईशो रुद्रः । सदाशिवः पञ्चमोऽनुग्रहकारी । यथा हि दर्पणे तत्तत्प्रतिबिम्बपरिच्छिन्नदर्पणांशानां तत्तद्रूपेण भेदेऽपि दर्पणसामान्यरूपेणाऽखिलदर्पणानुस्यूतता तस्य, तथा[1] प्रतिबिम्बकल्पतत्तद्देहाद्यवच्छिन्नचैतन्यरूपेण भेदेऽपि समाध्याद्युपलब्धसामान्यचैतन्यरूपेण सर्वानुस्यूतत्वादेष एव सर्वेश्वरादिरिति भावः ॥ ९७ ॥ एवंविधमात्मतत्त्वं मदुपदेशैर्व्युत्पन्नस्य तव[2] न दुर्लक्ष्यमित्याह—पश्येति । ईषदिति न चिरं संरोधापेक्षा, किन्तु क्षणं दृश्याकारानुल्लेखेन मनः संरुध्य तद्रूपं पश्येति भावः । तद्रूपस्यादृश्यत्वात् कथं पश्यामीति चेदाह—स्वात्मना सतेति । नहि तदिदमीदृशमिति द्रष्टुं शक्यम्, किन्तु निरोधावधिभूतस्वात्माभिन्नसामान्यसद्रूपेण सद्यो जनितशिशोर्जडव्यावर्तकान्तरुल्लसत्स्वरूपाभिन्नविशेषवदस्मीति सामान्याभ्युपगमरूपेणेति भावः । कथं मनः संरोद्धव्यं तदाह—त्यक्त्वेति । बहिःप्रसरता दृश्याभिमुख्यता । अन्तःप्रसरणे उद्यत उद्यमवान् सन्नित्यर्थः । अत्रान्तःप्रसरणं बहिःप्रसरणत्यागस्य दृढावष्टम्भरूपोऽभिनिवेश एव, नान्यद् व्यापारान्तरम्, [3]स्वरूपे व्यापारानुपपत्तेः ॥ ९८ ॥ एवमप्यहं मां पश्यामीत्यभिनिविशतः स्वरूपं दुर्लक्ष्यमित्यत आह—त्यक्त्वेति । पश्यामीति भावमभिमानम् । अत्र

---

१. यथा—क० । २. 'तव' नास्ति—क० ख० ।
३. स्वरूपं—क० ख० ।

दर्शनादर्शने त्यक्त्वा योऽसि सोऽसि द्रुतं भज ॥९९॥
इत्युक्तः प्रियया हेमचूड आलक्ष्य [1]तत् पदम् ।
चिरं विश्रान्तिमालभ्य बहिर्विस्मरणं ययौ ॥१००॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे हेमचूडविश्रान्तिर्नाम
नवमोऽध्यायः ॥



दृष्टान्तः—अन्धवदिति । निश्चलात्मना वृत्तिसामान्यशून्यरूपेण स्थितं पश्येति सम्बन्धः । यदुक्तम्—"पश्यामीत्यपि यावत्ते द्रष्टृभावो विजृम्भते । तावद्यत्नशतैश्चापि न पश्यस्यात्मवैभवम् ॥" इति । एतदेव विविच्य पुनराह—दर्शनेति । दर्शनं जाग्रत्स्वप्नरूपं विकल्पज्ञानम्, अदर्शनं सुषुप्तिरूपं मूढत्वम्, तदुभयं व्यावृत्तरूपं त्यक्त्वा नाहमस्मीति दृढं निश्चित्य स्थितस्त्वं योऽसि यद्रूपोऽसि परिशेषादवस्थात्रयानुगतयादृश[2]सामान्यचैतन्यतुर्य[3]रूपोऽसि, सोऽसि तद्रूप एवासि, तमेवात्मत्वेन भज । अवस्थात्रयसाक्षितुर्यरूपमात्मत्वेन कालविलम्बमपहाय द्रुतं भजेति भावः ॥ ९९ ॥ तथा कृत्वा [1]तत् पदमालक्ष्य । विश्रान्तिः निर्विकल्पसमाधिः ॥ १०० ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
नवमोऽध्यायः ॥



---

१. तं—ख० ग० घ० । २. तया दृशा सा—क० ।
३. 'तुर्य' नास्ति—घ० ।

# अथ दशमोऽध्यायः

अथाऽपश्यद्धेमलेखा प्रियं प्राप्तपरस्थितिम् ।
न चालयत् परपदात्ततः सोऽपि मुहूर्ततः ॥१॥
प्रबुद्ध उन्मील्य नेत्रे अपश्यत् सप्रियं जगत् ।
भूयस्तत्पदविश्रान्तिमीहमानोऽतिवेगतः ॥२॥
नेत्रे नि[न्य]मीलयद्यावदब्रवीत्तावदेव सा ।
प्रियं हस्ते समादाय सुधासुन्दरभाषिणी ॥३॥
नाथ किं ते व्यवसितं ब्रूहि नेत्रनिमीलनात् ।
उन्मीलनाद्वा किं स्यात्ते लाभालाभौ समीरय ॥४॥
उन्मील्य न प्राप्यते किं निमील्य प्राप्यते च किम् ।
तन्मे ब्रूहि प्रियतम श्रोतुमिच्छामि ते स्थितिम् ॥५॥
एवं पृष्टस्तया प्राह मदमत्त इवालसः ।
अनिच्छन्नपि वक्तुं तामालस्यभरमन्थरः ॥६॥
प्रिये विश्रान्तिमत्यन्तं प्राप्तवानस्मि वै चिरात् ।
न बाह्ये दुःखभूयिष्ठे विश्रमोऽस्ति क्वचिन्मम ॥७॥

अत्राध्याये धातुपद्यैः प्रियया वोधितः पुनः ।
ऽाप्य बाह्यसमाधिं स जीवन्मुक्तोऽभवद् दृढम् ॥

प्राप्ता परस्मिन् सामान्यचिद्रूपे स्थितिर्येन । न चालयत् नोद्बोधयत् ॥ १ ॥ सप्रियं प्रियासहितम् । तत्पदविश्रान्तिः समाधिः ॥ २ ॥ सा हेमलेखा ॥ ३ ॥ व्यवसितं निश्चितम् । निमीलनादिना यद्भवेद् लाभोऽलाभो वा तौ समीरय ॥ ४ ॥ एतस्यैव विवेचनम्—उन्मील्येति । स्थितिम् अभ्युपगमम् ॥ ५ ॥ मन्थरः मन्दव्यवहारः ॥ ६ ॥ विश्रान्ति विश्रमणं दुःखासम्भिन्नसुखमित्येतत् । बाह्ये व्यवहारे ॥७॥ ऋजीषं हत-

अलमृजीषरोमन्थप्रायव्यवहृतै[1]र्बहिः ।
दौर्भाग्यान्धो नाद्य यावदविदं स्वात्मसत्सुखम्[2] ॥८॥
यथा कश्चिदटन् भिक्षां निधानं स्वं न वेद वै ।
तथाऽहं स्वसुखाम्भोधिमविदित्वा पुनः पुनः ॥९॥
सुखं वैषयिकं श्रेष्ठं दुःखसंघाभिसंप्लुतम् ।
विद्युद्विलयनं मत्वा स्थिरं तत्परतावशात् ॥१०॥
दुःखैरभिहतो नूनं विश्रान्तिं न तु लब्धवान् ।
अहो जना दुःखसुखविवेकज्ञानवर्जिताः ॥११॥
सुखार्थिनो दुःखसंघं सञ्चिन्वन्ति मुधा सदा ।
तदलं दुःखभोगेन स्वयत्नासादितेन वै ॥१२॥
प्रिये कृपां मयि कुरु प्रार्थयामि कृताञ्जलिः ।
विश्रान्तिमभिवाञ्छामि चिरं स्वस्मिन् सुखात्मनि ॥१३॥
अहो दैवहता भासि ज्ञात्वापि त्वमिदं पदम् ।

रसेक्षुखण्डांशः। रोमन्थः चर्वितचर्वणं पशुषु प्रसिद्धम्। "तदेवान्नं च पानं च प्रियाङ्गं मोहकं च तत्। एतदास्वादनं नूनं पशुरोमन्थवत् सदा॥" इत्युक्तरीत्या नह्यपूर्वं किञ्चिदिति भावः। अनन्धोऽपि दौर्भाग्येनान्धप्रायः। स्वात्मसम्बन्धि सत्सुखम्। न तु वैषयिकसुखवदसत्, क्षणिकमिति भावः ॥ ८ ॥ स्वात्मसम्बन्धिसुखाम्भोधिम् ॥ ९ ॥ श्रेष्ठं स्थिरं च मत्वेति योजना। विद्युद्विलयनं विद्युदिव क्षणमात्रेण विलयनं नाशो यस्य। तत्परता तदाश्रयणम् ॥ १० ॥ विश्रान्तिं दुःखासम्भिन्नसुखम्। जनास्तु दुःखेषु सुखाभिमानाद् दुःखमेवानुभवन्तीत्याह—अहो इति ॥ ११ ॥ दुःखसङ्घं दुःखसाधनजालं धनगृहादिकम् ॥ १२ ॥ विश्रान्तिं प्रोक्तसुखात्मकस्वस्वरूपावस्थानात्मकं समा-

१. हृतैर्बहिः—ग० घ०। २. स्वात्मनः सुखम्—घ०।

तद्विश्रान्ति परित्यज्य मुधा दुःखाय चेष्टसे[1] ॥१४॥
इत्युक्ता सा प्रियं प्राह स्मयित्वेषन्मनीषिणी ।
नाथ ते तन्न विदितं पदं परमपावनम् ॥१५॥
यत्र स्थिता न मुह्यन्ति पण्डिताः पावनाशयाः ।
तत्पदं दूरतस्तेऽस्ति भूस्थस्येव नभस्तलम् ॥१६॥
त्वया किञ्चित् सुविदितं भवेदविदितोपमम् ।
निमील्योन्मील्य वा नेत्रे तत्पदं न समीक्ष्यते ॥१७॥
अकृत्वा वापि कृत्वा वा न तल्लभ्येत कर्हिचित् ।
अगत्वा चापि वा गत्वा न तदासादयेत् पदम् ॥१८॥
निमील्य कृत्वा गत्वा वा प्राप्तं पूर्णं कथं भवेत् ।
यवाष्टकमितेनैव पक्ष्मणोन्मीलितेन तु ॥१९॥

धिम् ॥१३॥ [1]चेष्टसे व्यवहारपरासि ॥ १४ ॥ स्मयित्वा स्मितं कृत्वा । तत् अपरिच्छिन्नं सामान्यसंविद्रूपम् । न विदितम् अहमस्मीति न प्रत्यभिज्ञातम् । परमपावनं द्वैतमललेशरहितम् ॥ १५ ॥ यत्र अद्वैतचिद्रूपे पूर्णे पदे । स्थिताः अहमस्मीति दृढाभिनिवेशं गताः । न मुह्यन्ति नेत्रोन्मीलननिमीलनाभ्यां स्वरूपे विशेषं नाधिगच्छन्तीति भावः । पावनाशयाः द्वैतवासनोत्क्रान्तचित्ताः । तत्पदं पण्डितासादितम् ॥१६॥ त्वया निरोधपरतन्त्रेण किञ्चित् परिच्छिन्नं विदितमपि तत्र परिच्छेदस्यावस्तुत्वेन शुद्धं न विदितमित्यविदितोपममेव । कुत एवमिति चेदाह—निमील्येति ॥ १७ ॥ अकृत्वेति । स्वप्रकाशत्वान्नित्यसत्त्वात्[2] सर्वगतत्वाच्च । तत्स्वरूपं निमीलनकरणगमनादिभिर्न विशेष इति भावः ॥ १८ ॥ अन्यथा पूर्णत्वादिहानिरित्याह—निमील्येति । पूर्णमिति स्वप्रकाशं नित्यमित्यनयोरुपलक्षणम् । पूर्णस्य नेत्रोन्मीलनेन तिरोहितताऽत्यन्तविरुद्धेति सोपहासमाह—यवाष्टकेति ॥ १९ ॥ अन्तर्हितत्वे

१. चेष्टसि-ख० ग० घ० । २. नित्यत्वात्-क० ।

अन्तर्हितं यदि तदा ननु पूर्णं भवेत्पदम् ।
अहो ते मोहमाहात्म्यमाश्चर्यं किमहं ब्रुवे ॥२०॥
यस्मिन् ब्रह्माण्डकोटीनां कोटयः कोणसंस्थिताः ।
पक्ष्मणोऽङ्गुलिमानस्योन्मीलनात्तत्तिरोहितम् ॥२१॥
शृणु राजकुमारैतत् तत्त्वसारं वदामि यत् ।
यावद् ग्रन्थिविभेदो न न तावत् सुखमृच्छति ॥२२॥
ग्रन्थयः कोटिशः सन्ति मोहरज्जुविवर्तिताः ।
तत्र स्वरूपासंवित्तिर्मोहरज्जुरुदीरिता ॥२३॥
यत्र ता ग्रन्थयः सन्ति विपरीतग्रहात्म[त्मि]काः ।
तत्राद्या देहमुख्येषु भवेदात्मत्वनिश्चयः ॥२४॥
यद्वशादेष संसार आततो दुष्प्रतिक्रियः ।

पूर्णं भवेत्! नन्विति सावहेलं वाक्यम्। एतदेव स्पष्टमाह—अहो इति ॥ २० ॥ यस्मिन् सामान्यचिद्रूपे आत्मनि। तिरोहितमित्या-श्चर्यमिति सम्बन्धः ॥ २१ ॥ एवं मोहे हेतुं वक्तुमाह—शृण्विति। तत्त्वसारमिति। तत्त्वस्य सामान्यसंविदात्मनः सारं निष्कृष्टं रूपम्। यदेतद्वदामि तच्छृण्विति सम्बन्धः। ग्रन्थिभेदाभावाद्विदितमप्यविदित-प्रायमित्याह—यावदिति ॥ २२ ॥ रज्ज्वादिविवर्तनेनोद्ग्रथिता ग्रन्थिरित्युच्यते। प्रकृतग्रन्थयस्तु मोहरज्जोर्विवर्तनोद्ग्रथनात्मिकाः। कतमा सा[१] मोहरज्जुरिति चेदाह—तत्रेति ॥ २३ ॥ यत्र यस्यां मोह-रज्जौ। तत्र तासु ग्रन्थिषु मध्ये। देहमुख्येषु देहेन्द्रियादिषु। देहादा-वात्मत्वनिश्चयस्य स्वरूपाज्ञानमूलकत्वेन तदाश्रयत्वम्। यथा सुदृढ-ग्रन्थेः स्वाश्रयरज्जुच्छेदनमन्तरा न विस्रंसनम्, एवं स्वरूपाज्ञान-रज्जुच्छेदनमन्तरा देहाद्यात्मभावो दुष्परिहर इत्यस्य ग्रन्थित्वं ज्ञेयम्

१. 'सा' नास्ति—क० ग०।

तथा जगत्यनात्मत्वबुद्धिर्भानसमाश्रये ।।२५।।
एवं जीवेशभेदादिनिश्चया ग्रन्थयो मताः ।
एतच्चिरात् समुद्भूतं भूयः संवर्तितं च वै ।।२६।।
ग्रन्थिरूपं समापन्नं पुरुषः पाशितस्ततः ।
तद्ग्रन्थिविस्रंसनतो बन्धान्मुक्तिः समीरिता ।।२७।।
यत्त्वं निमील्य नेत्रे स्वे पदमासादयस्यलम् ।
तत्पदं निजरूपं ते शुद्धसंविदनुत्तरम् ।।२८।।
तदेवाखिलसंसारचित्रादर्शतलं महत् ।
कदा क्व केन रूपेण नास्ति तन्मे निरूपय ।।२९।।

॥ २४ ॥ यद्वशात् देहाद्यहंभाववशात्। एष प्रसिद्धः। [1]संसारः सुखदुःखानुभवप्रवाहः। द्वितीयां ग्रन्थिमाह तथेति। दर्पणप्रतिबिम्ब[2]वद्भानसमाश्रये भानमात्रात्मके जगति। अनात्मबुद्धिर्द्वितीयेत्यर्थः। देहाद्यात्मकद्रष्टृभासनपूर्वकत्वादनात्मदृश्यभासनस्य द्वितीयग्रन्थित्वं ज्ञेयम् ॥ २५ ॥ आदिना जीवपरस्परभेदनिश्चयादिः। एतत् स्वरूपाज्ञानम्। चिरात् अनादिकालात्। भूयः संवर्तितं ग्रन्थिरूपं समापन्नमिति सम्बन्धः। तथा रज्जुरेव भूयःसंवर्तनेन ग्रथिता ग्रन्थिरित्युच्यते, एवं स्वरूपाज्ञानमेव देहाद्याश्रयचिदात्मप्रदेशसंवर्तनेन परिच्छेदाद्याभासत्वेन ग्रथितं ग्रन्थिरित्युच्यत इति तात्पर्यम् ॥ २६ ॥ ततोऽज्ञानरज्ज्वा यथा रज्जुग्रन्थिविस्रंसनतः पाशिताः पशवो मुक्ताः, एवं पुरुषा अपीति भावः ॥ २७ ॥ ननु केयं ममाज्ञानग्रन्थिर्या विस्रंसनीयेत्याशङ्क्यान्तःकरणानिरोधे मम न स्वरूपविश्रान्तिरित्येषैव भ्रमरूपेति वक्तुमाह—यत्त्वमिति। अलं पर्याप्तं पूर्णं पदमित्यर्थः। तदेव पदं ते निजरूपम्। अनुत्तरं सर्वनिषेधावधिभूतम् ॥ २८ ॥ चित्रस्यादर्शतलम्। महत् अपरिच्छिन्नम्। कदा क्व केनेति काल-

१. 'संसारः' नास्ति—ख॰ घ॰। २. बिम्बाद्भा—क॰।

यदा यद्रूपतो यस्मिन्नेति ब्रूयाः स्वसंविदम् ।
तर्हि तत्कालदेशादेर्वन्ध्यापुत्रत्वमेव हि ॥३०॥
प्रतिबिम्बो निरादर्शो यथा नाथ तथैव तत् ।
तस्मात्तत्पदसंत्यागान्नास्ति कुत्रापि किञ्चन ॥३१॥
तत्ते नेत्रोन्मीलनेन किमन्तरिततामियात् ।
यावदेवं विजानामीत्येवं ग्रन्थिर्दृढा भवेत् ॥३२॥
तावन्न तत्पदं प्राप्तं यत्प्राप्तं स्यान्न तद्भवेत् ।
निमील्योन्मील्य वा नेत्रे यत्प्राप्तं मन्यसे पदम् ॥३३॥
तन्न पूर्णपदं यस्मात् परिच्छेदात् क्रियादितः ।
कुत्र नाथ महासंविन्नास्ति कालानलप्रभा ॥३४॥

देशाकारपरिच्छेदनिरासः ॥ २६ ॥ कुत एवमिति चेदाह—यदेति । स्वसंविदं सामान्यचितिम् । इदानीमत्रैतद्रूपेण संविन्नास्तीति यदि ब्रूयास्तर्हि तत्कालादीनां वन्ध्यापुत्रत्वमेव । यस्मिन् काले देशे वा यदाकारेण संविन्नास्ति तत्कालादिकं प्रकाशते न वा ? आद्ये कालादीनां जडत्वेनास्वप्रकाशानां संवित्तादात्म्यमृते प्रकाशानुपपत्तेः सिद्धा संवित् । द्वितीयेऽप्रकाशमानानां तुच्छत्वं दुरपोहमित्यभिसन्धिः ॥ ३० ॥ संवित्तादात्म्यरहितानां कालादीनां निरादर्शप्रतिबिम्बवदसत्त्वमेवेत्याह—प्रतिबिम्ब इति । तत्पदं सामान्यचैतन्यम् ॥ ३१ ॥ तत् तस्मात् संविदात्मनोऽपरिच्छिन्नत्वादित्यर्थः । एवं क्रियया आत्मानं विजानामि इत्येवमभिमानरूपा ग्रन्थिः ॥ ३२ ॥ प्राप्तं न भवति । नन्वनुभूयमानस्य कथमपलाप इति चेदाह—यत्प्राप्तमिति । न तद्भवेदिति । सर्वत्रानुपलभ्यमानस्य परिच्छिन्नत्वेन सामान्यचैतन्यात्मकपूर्णपदत्वा[1]भावादिति तात्पर्यम् । एतदेव विशदयति—निमील्येति ॥ ३३ ॥ क्रिया निरोधरूपा । आदिना कालः ।

१. भावत्वा—क० ।

स्वात्मीकरोति याऽनल्पकल्पनेन्धनसंचयम् ।
न ते कर्तव्यसंशेषो विज्ञाय परमं पदम् ॥३५॥
त्यज ग्रन्थि सन्निरुध्य पश्यामीति हृदि स्थिताम् ।
इदं नाहमिति ग्रन्थिमुन्मूलय परां दृढाम् ॥३६॥
पश्य सर्वत्र चात्मानमखण्डानन्दबृंहितम् ।
पश्यात्मन्यखिलं लोकं दर्पणप्रतिबिम्बवत् ॥३७॥

निरोधक्रियया तत्काले बाह्ये भासमानत्वेन परिच्छेद इति भावः ॥३४॥ कालानलत्वमेव निरूपयति—स्वात्मीति। यथा कालानलः स्वात्मनि पतितं सर्वं स्वात्मीकरोति, तथा स्वात्मनि तादात्म्येन भासमानमखिलं स्वात्मीयं करोतीति भावः। मनो निरोद्धव्यमिति योऽयं भ्रमः स परिहर्तव्य इत्याह—न त इति। शेषो भवेदिति शेषः ॥ ३५ ॥ सन्निरुध्यैव स्वरूपं पश्यामि, नान्यथेति भ्रमरूपां ग्रन्थिं त्यज। एतद्ग्रन्थिमूलभूतामपरां ग्रन्थिं त्यजेत्याह—इदमिति। यथा निरोधकाले भासमानं दृश्यासंभिन्नमात्मरूपम्, एवमनिरोधकाले भासमानमपि विषयसंभिन्नरूपं स्वात्मन एव रूपम्। तच्चापि शुद्धमेव, दृश्यस्य प्रतिबिम्बतुल्यत्वादिति भावः ॥ ३६ ॥ एतदेवोपपादयति—पश्येति। सर्वत्र दृश्यावभासजाले, [1]अभासमानस्यासिद्धेर्भासमानस्य सर्वस्य भानव्याप्तत्वाद् भानस्यैवात्मत्वादिति भावः। ननु सर्वत्र भानात्मा भासते, तथाप्ययं [2]निरोधे भासमान इव नानन्दैकरूप इति चेदाह—अखण्डानन्दबृंहितमिति। अपरिच्छिन्नानन्देन बृंहितं भरितमित्यर्थः। इदमत्राकूतम्—स्वात्मनः संविद्रूपतैवानन्दरूपता, नातिरिक्ता, द्वैतापत्तेः। अखण्डैकवस्तुन्यात्मनि निर्धर्मके जडात्मत्वव्यावृत्तये यथा संविच्छब्दव्यवहारः, तथा दुःखरूपताव्यावृत्तये आनन्दशब्दव्यवहारः। यश्च निरोधकाले आनन्दानुभवः, स न

१. आभास—क० ख०। २. 'निरोधे' नास्ति—ग०।

सर्वत्राखिलमात्मानमिति भूयो न भावयन् ।
शेषमभ्युपगम्यान्तः स्वस्थो भव निजात्मना ॥३८॥

स्वरूपविशेषकृतः, स्वरूपस्य निर्विशेषत्वात् । अपि तु "काम[1] एव महद् दुःखं निष्कामस्य कुतस्तु तत्" इति नीत्या कामवासनाऽनन्त-सन्ततिसमाक्रान्तस्वभावो दावाग्निसंकीर्ण इव दुःखभागयं जनः । निरोधकाले पुनरयमेव द्वैतभासाभावात्तन्मूलककामवासनानामनुन्मेषा-न्मस्तकन्यस्तभारत्याग इव सविशेष एव सुखी संवृत्तो भवति । तथा च कामवासनाहानमूलैव निरोधे सुखात्मतानुभूतिरित्यनि-रोधेऽपि कामवासनाहाने "प्रजहाति यदा कामान्" [भ० गी० २।५५] इति भगवदुक्तनीत्या आनन्दरूपतानुभूतिरनिवार्यैवेति । नन्वनिरोधे कामवासनामूलस्य द्वैतभासस्यानपोह्यत्वेन कामवासनानामुन्मेषावश्य-म्भावात्तन्निमित्तं दुःखं कथं न भवेदित्याशङ्क्याह– पश्येति । अनि-रोधे भासमानमखिलं द्वैतं न स्वात्मनः पृथगस्ति, दर्पणप्रतिबिम्बव-दित्यर्थः । यथा हि प्रतिबिम्बत्वेन दृष्टे वस्तुनि न कामवासनोदयः, तथा निखिलस्य दृश्यस्य स्वात्मादर्शप्रतिबिम्बत्वनिश्चये सति न कामवासना, नापि दुःखमिति भावः ॥ ३७ ॥ ननु सर्वमात्मनि प्रतिबिम्बात्मकं चेत्, सर्वत्राखिलमात्मानमेव पश्यामीति मन्वानं प्रत्याह—सर्वत्रेति । आन्तरे बाह्ये चेत्यर्थः । अखिलमिति । भासमानमखिलं सुखादिकं घटादिकं चेत्यर्थः । सर्वत्राखिलमात्मानं पश्यामीति शेषः । तथा च सर्वत्र भासमानमखिलमात्मानं पश्यामीति प्रथमं निश्चित्य । भूयः सर्वत्र अखिलमात्मानमित्याद्यंशं न भावयन् । शेषं रूप भाव्यांश-रिक्तं भावकरूपं सामान्यचैतन्यम् अहमस्मीत्यन्तरभ्युपगम्य । चेत्यातिरिक्तचितिमात्ररूपोऽहमस्मीति संस्कारशेषः सन्निति भावः । एवंविधेन निजात्मना अकृत्रिमस्वस्वरूपेण स्वस्थो भव । एवंविध-

१. कामा–ख० ग० घ० ।

इति प्रियोदितं श्रुत्वा हेमचूडः सिताशयः ।
विदित्वा पूर्णमात्मानं सर्वत्र भ्रान्तिवर्जितः ॥३९॥

क्रमात् पूर्णसमावेशासादनात् स्थिरभावनः ।
विहरन् सर्वदा हेमलेखादियुवतीगणैः ॥४०॥

शासन् राज्यं समृद्धं स्वं जित्वा शत्रुगणं रणे ।
शास्त्राणि श्रावयन् शृण्वन्नर्जयन् धनसंचयम् ॥४१॥

अश्वमेधराजसूयाद्यैर्यजन् क्रतुमुख्यकैः ।
वर्षाणामयुते द्वे वै जीवन्मुक्तो भुवि स्थितः ॥४२॥

जीवन्मुक्तदशासंस्थं निशाम्य तनयं नृपः ।
मुक्ताचूडश्च तद्भ्राता मणिचूडोऽप्यचिन्तयत् ॥४३॥

किमयं पूर्ववन्नेह लक्ष्यते सर्वथा किल ।
सुखे न हृष्यत्यत्यन्तं दुःखे नोद्विजते तथा ॥४४॥

लाभालाभौ शत्रुमित्रे साम्यात् पश्यति वै कुतः ।

स्वस्वरूपावष्टम्भादप्रच्युतो भवेत्यर्थः। यदाह वसिष्ठः—"चेत्यनिर्मुक्तता या स्यादचेत्योन्मुखतापि वा। अस्य सा भरितावस्था तां ज्ञात्वा नानुशोचति ॥" [ यो० वा० ३।७।६ ] इति ॥ ३८ ॥ सिताशयः सर्वभ्रान्त्यपगमाच्छुद्धान्तःकरणः। पूर्णमात्मानं निरोधेतरदशयोरेकरूपेण भासमानम्। निरोध एव शुद्धात्मा भासत इति भ्रान्तिविवर्जितः ॥ ३६ ॥ प्रोक्तरूपाहंभावभावनाक्रमात् पूर्णे प्रोक्तरूपे समावेशो निष्प्रकम्पाभिमानः। प्राक्स्थितदेहसमावेशवत्। यदाहुः—"देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम्। आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ॥" इति। स्थिरभावन इति। समावेशसिद्ध्युत्तरं स्थिरतत्संस्कार इत्यर्थः। विहरन् भुवि स्थित इति दूरस्थेन संबन्धः ॥ ४०–४२ ॥ हेमचूडपिता मुक्ताचूडो नृपः ॥४३॥ तच्चिन्तनप्रकारमाह—किमयमिति। अयं हेमचूडः

करोति राजकार्याणि नटवद् रङ्गमण्डले ॥४५॥
कापिशायनपायीव सदा मत्तोऽभिलक्ष्यते ।
सदान्यत्र गतस्वान्त इव कृत्यं करोत्यलम् ॥४६॥
तत्केन हेतुना चेति तमासाद्य रहः क्वचित् ।
अपृच्छतां हेमचूडं कुत एवं भवानिति ॥४७॥
ततः स्वस्थितिमाचख्यौ हेमचूडस्तयोः क्रमात् ।
तावुभौ भ्रातृपितरौ हेमचूडेन बोधितौ ॥४८॥
आसादितपरंतत्त्वौ[1] जीवन्मुक्तौ बभूवतुः ।
अथ मन्त्रिगणोऽप्येवं राज्ञः श्रुत्वा जगद्गतिम् ॥४९॥
विचार्य स्वात्मनो भावं ज्ञातज्ञेयोऽभवत्तदा ।
एवं विशालनगरे क्रमेणैव परस्परम् ॥५०॥
उपदेशाद् विदुः सर्वे तत्त्वमाबालगोपकाः ।
नरा नार्यो बालवृद्धा दासा दासीगणा अपि ॥५१॥
ज्ञातज्ञेयास्त्यक्तदेहाहंभावा अभवन् खलु ।
न तत्र कस्यचित् कामः क्रोधो वा लोभ एव वा॥५२॥
अनाहृतोऽस्ति बालस्य स्थविरस्यापि वा क्वचित् ।

॥ ४४ ॥ नटवच्छन्नान्तरभिप्रायः॥ ४५ ॥ कापिशायनं मद्यम् ॥ ४६ ॥ तं हेमचूडम् । मुक्ताचूडमणिचूडावपृच्छताम् ॥४७॥ तयोः पितृभ्रात्रोः ॥ ४८ ॥ जगद्गतिं जगतं आत्माऽव्यतिरिक्तरूपत्वेन स्थितिम् ॥४९॥ आत्मनस्तादृशं भावं विचार्य निश्चित्य । परस्परमुपदेशाद्विदुरिति संबन्धः ॥ ५० ॥ तत्त्वं वस्तुयाथात्म्यम् ॥ ५१ ॥ ज्ञातं ज्ञेयं शास्त्रेषु मुख्यज्ञेयत्वेनाभिमतं यैः । लोभ एव वा अनाहृतो नास्तीति संबन्धः ॥५२॥ बाल्स्येति । बालवृद्धयोरविचारस्वभावयोः प्रायः सदा क्रोधादि·

१. परतत्त्वौ–क० ।

आहृतैः क्रोधकामाद्यैर्व्यवहारपरायणाः ॥५३॥
बालं माता खेलयति परतत्त्वस्य वार्तया ।
दासा दास्यः स्वामिनं स्वं सदा परिचरन्ति वै ॥५४॥
परतत्त्वपरैर्वाक्यैर्व्याहरन्तः परस्परम् ।
नटा नाट्यं वितन्वन्ति पात्रैस्तत्त्वप्रसङ्गजैः ॥५५॥
विवेकवार्तापरमं वचो गायन्ति गायकाः ।
विदूषका दूषयन्ति लोकव्यवहृतिं सदा ॥५६॥
शास्त्राणि पाठयन्ति स्म विद्वांसः पाठकान् जनान् ।
परतत्त्वविचारार्हैरुदाहरणमण्डलैः ॥५७॥
एवं तत्र नरा नार्यो दासा दास्यो नटा विटाः ।
भृत्या भटा मन्त्रिणश्च शिल्पिनो वारयोषितः ॥५८॥
सर्वे वेदितवेद्यास्ते विशालनगरेऽभवन् ।
प्राक्संस्कारबलेनैव व्यवहारपरायणाः ॥५९॥

संभवस्तथापि सम्यक्तत्ववेदनमाहात्म्येन कामादिमूलदेहाहंभावस्योन्मूलितत्वान्न तन्मूलकामादिरनाहृतोऽस्तीति तात्पर्यम्। किमर्थं कामादेराहरणमिति चेद् व्यवहारार्थमित्याह—आहृतेति । यथा हि नटानामाहृतकामाद्यैः प्रासङ्गिको नाट्यव्यवहारः, एवं तत्र सर्वेषामिति भावः ॥५३॥ ननु सदा व्यवहारपराणां केषाञ्चिदपरिपक्वचित्तानां तत्त्वानुसंधानं शिथिलीभवेदित्याशङ्क्य तद्व्यवहारस्य तत्त्वानुसंधानानुकूलत्वान्नेत्याह—बालमित्यादि । परतत्त्वस्य वार्तया । मा रुद त्वं महेश्वरोऽसि न ते वस्तुतो दुःखमित्यादिरूपया । एवमग्रेऽपि ज्ञेयम् ॥५४॥ तत्त्वप्रसङ्गजैः पात्रैः विवेकमोहादिवेषैः ॥५५-५८॥ ननु सर्वेषां तत्र विदितवेद्यत्वे कथं तत्र भूपालादेः सर्वो राज्यादिव्यवहार इत्याशङ्क्याह—प्रागिति । यथा हि मदिरामत्तः शूरः प्राक्संस्कारमात्रेण

न संस्मरति संवृत्तं शुभं वाप्यशुभं तथा ।
भविष्यद् नानुसन्धत्ते हर्षशोकादिसाधनम् ॥६०॥
वर्तमाने स्मयन् हृष्यन् खिद्यन् क्रुध्यन्निवान्वहम् ।
मधुक्षीब इवात्यन्तं व्यवहारपरो जनः ॥६१॥
एवंविधं तन्नगरमृषयः सनकादयः ।
प्रसिद्धविद्यानगरमित्याख्यमूचुरागताः ॥६२॥
यत्र कीराः पञ्जरस्था अपि वाचो वदन्ति वै ।
चितिरूपं स्वमात्मानं भजध्वं चेत्यवर्जितम् ॥६३॥
नास्ति चेत्यं चितेरन्यद् दर्पणप्रतिबिम्बवत् ।
चितिश्चेत्यं चितिरहं चितिः सर्वं चराचरम् ॥६४॥
यतः सर्वं चितिमनु भाति सा तु स्वतन्त्रतः ।
अतश्चितिं जनाः सर्वभासिनीं सर्वसंश्रयाम् ॥६५॥
भजध्वं भ्रान्तिमुत्सृज्य चितिमात्रं सुदृष्टयः ।
तिर्यञ्चोऽप्येवमत्यन्तं यत्र वाचो वदन्ति वै ॥६६॥
प्रसिद्धविद्यानगरं तदद्यापि प्रचक्षते ।
एवं तत्र पुरा हेमलेखया खलु बोधितः ॥६७॥
हेमचूडोऽभवद् विद्वान् जीवन्मुक्तस्तथेतरे ।
स्त्रीबालप्रमुखाः सर्वे जाता ज्ञातपरावराः ॥६८॥

शस्त्रवर्त्मस्वस्खलन् युध्यति, तथेति भावः ॥५९॥ ननु तत्रत्यजनस्य कथं संस्कारमात्राद् व्यवहारः कीदृशश्चेति चेदाह—न संस्मरतीति । संवृत्तम् अतीतम्, दुःखादिसाधनं प्राप्तं दृष्ट्वा भविष्यच्छोकादि नानुसंधत्ते ॥ ६० ॥ वर्तमाने हर्षसुखादौ ॥६१॥ सनकादयः सनकवामदेवाद्याः । नगरमागता इति संबन्धः ॥ ६२ ॥ यत्रेत्यादिश्लोकचतुष्टयं चतुर्थी-

तस्माच्छ्रेयोनिदानं तु सत्सङ्गः प्रथमं भवेत् ।
तस्माच्छ्रेयोवाञ्छने तु सत्संश्रयपरो भवेत् ॥६९॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे हेमचूडोपाख्यानसमाप्तिर्नाम
दशमोऽध्यायः ॥



ध्यायान्तगतं प्राग् व्याख्यातम् ॥ ६३-६८ ॥ यस्माद्धेमलेखासङ्गात् सर्वे मुक्ता जातास्तस्मात् सज्जनसंश्रयपरः ॥ ६९ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
दशमोऽध्यायः ॥





# अथ एकादशोऽध्यायः

श्रुत्वैवं हेमचूडस्य कथामत्यद्भुतां तदा ।
भार्गवः सन्दिग्धमनाः प्रष्टुं समुपचक्रमे ॥१॥
भगवन् श्रीगुरो यत्ते प्रोक्तं ज्ञानं महाद्भुतम् ।
भाति मे विषमं ह्येतदसाध्यं चापि सर्वतः ॥२॥
कथमेतज्जगद् दृश्यं चितिमात्रस्वरूपकम् ।
अदृष्टं केवलं ह्येतच्छ्रद्धोपेयं न चान्यथा ॥३॥
चितिश्चेत्यविनिर्मुक्ता नानुभाव्या कथञ्चन ।
नोपपन्नं सर्वथैतत् कथं चित्तं समारुहेत् ॥४॥
कृपया बोधनीयोऽहमत्र सर्वात्मना खलु ।
इत्यापृष्टो दत्तगुरुरवदद् भार्गवं प्रति ॥५॥

अत्राध्याये मोदपद्यैर्दत्त आह भृगूद्वहम् ।
[1]उपलब्ध्युपपत्तिभ्यां चेत्यं नान्यच्चितेरिति ॥

ते त्वया । ज्ञानं शुद्धाद्वयात्मरूपम् । विषमं सर्वानुभवविरुद्धम् । सर्वतः साधनैरसाध्यं च ॥ १-२ ॥ विषमत्वमेवाह—कथमिति । दृग्दृश्ययोर्द्वित्वस्य प्रामाणिकत्वेन चितिमात्रत्वमदृष्टम् । एतच्च श्रद्धामात्रेणाङ्गीकर्तव्यं नोपलब्ध्युपपत्तिभ्यामिति तात्पर्यम् ॥ ३ ॥ उपलब्ध्यभावमेवाह—चितिरिति । कथञ्चन केनापि प्रमाणव्यापारेण । नानुभाव्या नानुभवविषयीकार्या । एवंविधा चितिरस्तीति सर्वथा नोपपन्नं न युक्तियुक्तम् । कथमिति । एवं चैवंविधा चितिरस्तीति कथं निश्चेतव्यमिति भावः ॥ ४ ॥ एवमाक्षेपेण स्वस्मिन् गुरोर्धाष्टर्यशङ्का भवे-

१. उपपत्त्युपलब्धिभ्यां—ग० घ० ।

शृणु राम प्रवक्ष्यामि दृश्यतत्त्वं यथास्थितम् ।
एतद् दृश्यमशेषं तु दृशिमात्रं न चेतरत् ॥६॥
अत्रोपपत्तिं वक्ष्यामि शृणु सम्यक् समाहितः ।
एतद् दृश्यं कार्यभूतमुत्पत्तेरुपलम्भतः ॥७॥
उत्पत्तिर्नूतनाभासः प्रतिक्षणमिदं जगत् ।
नूतनत्वेनैव भाति तत्क्षणोत्पत्तिमज्जगत् ॥८॥
केचित् प्राहुर्जगदिदमखण्डैकक्षणोद्भवम् ।
अन्ये पदार्थसंघातमयं स्थिरचरात्मकम् ॥९॥

दिति मत्वाह—कृपयेति । अत्र शुद्धचितिविषये ॥ ५ ॥ [1]चेत्यस्य चिदतिरेकेण नरशृङ्गप्रायत्वात् [1]चेत्यनिर्मुक्ता चितिरुपपन्नैवेति वक्तुं दृश्यतत्त्वं निरूपयति—शृण्विति । दृश्यस्य चेत्यस्य तत्त्वं स्वरूपम् । यथास्थितम् अनन्यथेत्यर्थः । तदेवाह—एतदिति ॥ ६ ॥ अत्र दृश्यस्य [2]चितिमात्रत्वे । उपपत्तिं युक्तिम् । उपलब्धिप्रकारस्य हेमचूडोपाख्यानेन सम्यगुक्तत्वेन प्रकृते उपपत्तिरेवोच्यत इति ज्ञेयम् । तत्रादौ दृश्यस्य दृक्कार्यतां साधयति—एतदिति । कार्यं कर्तृव्यापारविषयम् ॥ ७ ॥ ननु केयमुत्पत्तिरिति चेदाह—नूतनाभास इति । नूतनत्वेनाभासनमित्यर्थः । लोके हि नूतनत्वेनाभासमानमेवोत्पन्नमित्युच्यते । यस्मादिदं जगन्नूतनत्वेनैव प्रतिक्षणं भाति, तस्मादित्यर्थः । एतच्चाग्रे भविष्यति ॥ ८ ॥ ननु घटादिदृश्यसमुदायो हि जगदिति व्यवह्रियते, समुदायातिरिक्तं न किञ्चिदेकं वस्तु जगदित्याशङ्क्य विज्ञानवाद्यभ्युपगतां जगतः क्षणिकैकरूपतां स्वाभिमतां प्रदर्शयति—केचिदिति । अत्र विज्ञानवादिनामयमभ्युपगमः—क्षणिकविज्ञानसंतानरूपाः प्रमातारः पूर्वपूर्वसंस्कारजन्य एवोत्तरोत्तरविज्ञाने दृश्याकाराः । घटाकारं ज्ञानं पटाकारं ज्ञानमित्याद्यनुभवेन विज्ञानेष्वाकारस्यावश्याभ्युपेयत्वेन तावतैव व्यवहारोपपत्तौ

१. चैत्य—ख० । २. दृशि—ग० घ० ।

सर्वथा तु समुत्पत्तिमदित्येव विनिश्चितम् ।
तत्र स्वभाववादस्तु नोचितोऽतिप्रसङ्गतः ॥१०॥

बाह्यं नाभ्युपेयम् । यस्मिन् ज्ञाने हि यावान् देशकालवस्त्वाकारो भासते, तावानखण्डैकरसस्तत्क्षणे । कुण्डक्षणो बदरक्षणः कुण्डबदरक्षण इति क्रमेण जगत् क्षणिकं तत्तत्कालदेशाकारात्मकमखण्डैकरसं विज्ञानमेवेति । अन्ये हि काणादप्रभृतयः पदार्थसंघात एव जगत्, तच्चाकाशादिरूपं स्थिरं नित्यम्, घटादिरूपं चरमनित्यम् । स्थिरचरोभयवस्तुसमुदाय एव जगदित्याहुः । अत्र काणादप्रमुखैर्वादिभिर्बाह्यार्थे न किञ्चित् प्रमाणं वक्तुं शक्यम्, सर्वव्यवहारस्यावश्याभ्युपेयज्ञानाकारमात्रपर्यवसितत्वात् । एवमपि कथञ्चिद् व्यवहारास्पृष्टं बाह्यं कल्पितमजागलस्तनायितमेव[१] । विज्ञानवादिमतं तु चिदात्मनि जगत्प्रतिबिम्बवादिनः स्वस्यानुकूलम्, अंशेन [1]"प्रतिक्षणपरिणामिनो हि भावा ऋते चितिशक्तिम्" इत्याद्यन्यमताविरुद्धं चेति तस्य प्रथममुपपादनमिति ध्येयम् ॥ ९ ॥ अन्यैर्यथेच्छमुक्तमपि जगद् दृश्यत्वहेतुकानुमानेन ब्रह्मागमानुकूलेनोत्पत्तिमदेव सिद्ध्यतीत्याह—सर्वथेति । स्थिरं क्षणिकमित्युभयथा[२] स्थितमपीत्यर्थः । दृश्यस्य नित्यत्वपक्षव्यावर्तकस्तुशब्दः । जगतो नरविषाणतुल्यतां सम्पादयितुं प्रवृत्तस्य तत्क्षणिकत्वाक्षणिकत्वसाधनं वध्यमण्डनतुल्यमिति तदुपेक्षणं सर्वथेत्यनेन सूचितम् । अथ जगतो न किञ्चिदुपादानं प्रमाणेन सिध्यतीति निरुपादानैन्द्रजालिकसृष्टभावतुल्यतां वक्तुमादौ जगतः सत्यत्वं सोपादानत्वं च वदतां मतं क्रमेण प्रतिक्षेप्तुमुपक्रमते—तत्रेति । [३]जगतः कार्यत्वे [४]सिद्धे सति । स्वभाववाद इति । कारणमनपेक्ष्यैव कार्यमुत्पद्यते, तथा स्वभावात् कार्य-

1. "प्रतिक्षणपरिणामिनो हि सर्वे एव भावाः, ऋते चितिशक्तेः" इति सांख्यतत्त्वकौमुदीस्थितः पाठः । द्रष्टव्या—सां० का० ५.

१. मेवाह—क० ख० । २. भयं यथा -क० ।

३. 'जगतः' नास्ति—क० । ४. सिद्धेति—क० ।

अन्वयव्यतिरेकाभ्यां कार्यकारणनिश्चयात् ।
संवादतः प्रवृत्तीनां कथमाकस्मिकं भवेत् ॥११॥
क्वचित्तु कारणेऽदृष्टेऽप्यदृष्टं कल्प्यमेव तत् ।
बहूनामनुरोधो हि न्याय्यः सर्वैरुदाहृतः ॥१२॥
भूयो दृष्टं सपूर्वं हि कार्यं क्वचिददर्शने[1] ।

स्योत्पत्तेः पूर्वं कार्यस्यासत्त्वादेव कः कमपेक्षेत । उत्पन्नश्च स्वयंसिद्धोऽन्यं किमित्यपेक्षेत । तस्माद्यथा कारणस्य कार्यानपेक्षत्वं स्वाभाविकमुच्यते, एवं कार्यस्यापीति हि चार्वाकः स्वभाववादमाह । तं दूषयति—नोचित इति । न युक्त इत्यर्थः । अतिप्रसङ्गत इति । कारणमनपेक्ष्य जायमानो घटः पटोऽपि भवेदिति भावः । मम तु घटपटकारणयोर्वैचित्र्यान्न घटः पटो भवेत् । ननु घटकारणमेव पटकारणं कुतो न भवेदिति चेत् स्वकारणवैचित्र्यादिति गृहाण ॥१०॥ ननु कपालः कार्यं घटः कारणमिति कुतो न भवेदिति चेदाह—अन्वयेति । अन्वयो हि कार्ये समग्रकारणव्याप्तिः । व्यतिरेकस्तु कारणाभावे कार्याभावव्याप्तिः । एतज्ज्ञानेन कार्यकारणयोर्नियतरूपतानिश्चयात् । नन्वन्वयव्यतिरेकयोर्ज्ञानस्य भ्रमत्वसम्भवात् कथमुक्तनिश्चयः प्रमाणं स्यादिति चेदाह—संवादत इति । तज्ज्ञानस्य भ्रमत्वे कारणमुपादाय कार्यार्थे प्रवृत्तो विसंवाद्येतेति भावः । तस्मात् कार्यमाकस्मिकं निष्कारणं कथं भवेत् ॥ ११ ॥ नन्वाकस्मिकदुःखादिसमागमे न किञ्चित् कारणं दृष्टमिति चेदाह—क्वचिदिति । अदृष्टं कारणम् । ननु दृष्टकारणदृष्टान्तेनादृष्टकारणे कारणं कल्पनीयम्, अथवा दृष्टकारणाभावेनाकारणकमेव[2] कार्यं[3] कल्पनीयमिति[1] चेदाह—बहूनामिति ॥ १२ ॥ ननु कस्य बहुत्वमिति चेदाह—भूय इति । बहुश

---

1. 'वेति' इति सार्वत्रिकः पाठः । स चानावश्यकः ।

१. नम्—घ० । २. कारणमेव—क० । ३. कारणं—क० ख० ग० ।

दृष्टवत् परिकल्प्यं स्यादन्यथा सार्वलौकिकी ॥१३॥
सम्प्रवृत्तिर्विरुध्येत तस्मात् सर्वं सकारणम् ।
अत एव कार्यहेतोः किञ्चित्कारणतत्परः ॥१४॥
सर्वत्र दृश्यते लोकस्तस्मादेतन्न किञ्चन ।
केचिदाहुरसत्कल्पैरणुभिः कार्यमुद्यतम् ॥१५॥
तेभ्योऽत्यन्तं विभिन्नं चाप्यसदत्यन्ततो भवेत् ।
असत्सतोरेकता हि [1]विरुद्धा न कुतो भवेत् ॥१६॥

इत्यर्थः। प्रायः सर्वं हि जगद् दृष्टकारणकमेवेति भावः। विपरीते दोषमाह—अन्यथेति। आकस्मिकत्वाभ्युपगम इत्यर्थः। सार्वलौकिकी संप्रवृत्तिरित्यन्वयः ॥ १३ ॥ [1]कार्यार्थं कारणोपादाने समीचीना फलपर्यवसायिनी प्रवृत्तिर्विरुध्येत विसंवाद्येत। नियमेन फलपर्यवसायिनी न भवेदिति यावत्। क्वचित् प्रवृत्तेः फलापर्यवसानं तु समग्रकारणवैकल्यादिति तात्पर्यम्। यस्मात् प्रवृत्तेः फलपर्यवसानं तस्मात्। कार्यार्थं कारणे प्रवृत्तिं निदर्शयति—अत एवेति। [2]तत्परो दृश्यत इति सम्बन्धः ॥ १४ ॥ एतच्चार्वाकाभ्युपगतं न किञ्चन विचारासहमित्यर्थः। अथात्र काणादमतमुत्थापयति निराकर्तुम्—केचिदिति। असत्कल्पैरदृष्टैः। उद्यतम् उत्पन्नम् ॥१५॥ तेभ्यः अणुभ्यः। विभिन्नं कार्यम्। परमाणवो हि जालमरीच्युपलब्धत्रसरेणोरारम्भकद्व्यणुक-[3] कारणभूताः कार्यस्य द्व्यणुकस्य सावयवत्वहेतुनानुमिताः। तत्रायं सृष्टिक्रमः—परिपक्वप्राण्यदृष्टसहकृतेश्वरेच्छया विशरारुषु स्थिरेषु परमाणुषु क्रियोत्पद्यते, ततः क्रमेण परमाणुद्वयं संयुज्यते। तस्मात् संयुक्ताद् द्व्यणुकम्। पुनरीश्वरेच्छयैव द्व्यणुकेषु क्रिया, ततः क्रमेण

1. कुतो न विरुद्धा भवेदित्यन्वयः। विरुद्धा भवेदेवेति तात्पर्यम्।

१. कार्यार्थं—क० ख०। २. तत्परा—क०।

३. 'द्व्यणुक' नास्ति—क०।

नहि पीतमपीतं च प्रकाशं चाप्रकाशकम् ।
एकं भवेद् विरुद्धत्वात् साङ्कर्यादिप्रसक्तितः ॥१७॥

त्रिभिर्द्व्यणुकैः संयुक्तैस्त्रसरेणुरिति रीत्या घटाद्यन्तकार्योत्पत्तिः। द्व्यणुकादिकार्यं च परमाण्वादिकारणेभ्योऽत्यन्तभिन्नम्, नाशानन्तरं चात्यन्तमसद् नरशृङ्गतुल्यमिति तन्मतम्। एतन्निराकरोति—असदिति। नह्येक एव घट उत्पत्तेः पुरा असत् ततः सन्नाशोत्तरमसन्निति युक्तम्, सत्त्वासत्त्वयोर्विरोधात् ॥ १६ ॥ ननु सत्त्वासत्त्वयोर्भावाभावत्वेऽपि संयोगतदभावयोरिव न विरोध इत्याशङ्क्याह—नहीति। संयोगस्याव्याप्यवृत्तित्वान्न तदभावविरोधः। सत्त्वं तु घटादौ समवायेन सत्तावत्त्वम्। तच्च व्याप्यवृत्तीति [1]स्वाभावविरुद्धमेव। पीतमिति। अत एव पीतमपीतं चैकं न भवेदिति भावः। ननु वस्तुस्वभावो ह्यनुभवानुरोधेन कल्पनीयः, तथा च समवायिनामवयविनां दैशिकव्याप्यवृत्तित्वेऽपि घटोऽस्ति नास्तीत्यनुभवानुरोधात् कालिकाव्याप्यवृत्तित्वमिष्यत इति चेदाह—प्रकाशमिति। अप्रकाशकमिति स्वार्थे कः। प्रकाशमप्रकाशं च वस्तु नैकं भवेत्। अन्यथाऽनुभवमात्रानुरोधेनैकस्य विरुद्धोभयरूपत्वाभ्युपगमे नीलं तमश्चलतीत्यनुभवानुरोधेन तमसो द्रव्यत्वे एकस्मिन्नेव द्रव्ये भास्वरशुक्लरूपोत्पत्त्या प्रकाशत्वं कृष्णरूपोत्पत्त्या तमस्त्वमिति वक्तुं शक्यत्वेन तमःप्रकाशयोरैक्यप्रसङ्ग[2] इति भावः। पीतमपीतं प्रकाशमप्रकाशं च वस्तु नैकं भवेद्विरुद्धत्वादिति सम्बन्धः। तस्माद्भावाभावयोः कालदेशभेदेनापि विरोध इति सिद्धम्। ननु तमसो द्रव्यत्वे द्रव्यचाक्षुषमालोकसहकृतमिति नियमभङ्गप्रसङ्ग इति चेन्न, अनुभवानुरोधेन नियमस्यैवान्यथा कल्पयितुं युक्तत्वात्। अथ चावयविवादे दूषणान्तराण्यप्याह—साङ्कर्यादिप्रसक्तित इति। सत्त्वासत्त्वादिरूपविरुद्धधर्माध्यासात्मकसाङ्कर्यप्रसक्ते-

१. स्वभाव-क०। २. ङ्गादिति-क०।

ईश्वरेच्छादितो वापि कथमादिक्रियोद्भवः ।
गुणसाम्यप्रकृतिकं जगदित्यप्यसंभवि ॥१८॥
वैषम्यहेतोर्मृग्यत्वात् साम्यहेतोश्च हीनतः ।

रित्यर्थः । आदिना परमाणोरवयवसिद्धिः, तत्संयोगस्याव्याप्यवृत्तित्व-भङ्ग इत्यादिदोषोऽवसेयः । ननु प्रोक्तसाङ्कर्यादिदोषाणां सर्वमतसाधारण्येन नेदृशैर्दोषैरहमेव पर्यनुयोज्य इति चेत्, सत्यमुक्तम् । [1]अत एव द्वैतसत्यत्ववादिनः सर्वानधिक्षेप्तुमेवाणुवादनिरसनमिषेणेमानि दूषणान्युक्तानि[2] दत्तगुरुणा । द्वैतानुपपत्त्यन्वेषणपराणामद्वैतिनां पुनरिमानि दूषणानि वासुदेवस्य [1]भगदत्तप्रयुक्तवैष्णवास्त्रवद् [3]भूषणान्येवेति ज्ञेयम्[4] ॥१७॥ एवं परैः साधितं जगदभ्युपगम्य साङ्कर्यादिभिर्दूषयित्वा सम्प्रति जगदुत्पत्तिरेव न सम्भवतीति मूलच्छेदकं दूषणमाह—ईश्वरेति । ईश्वरेच्छया हि परमाणुषु कथमादौ क्रियोद्भवः, क्वचिदपि कस्यचिदिच्छया कस्मिंश्चिदचेतने क्रियोत्पत्त्यदर्शनात् । यदि प्रभोरिच्छामचेतना अनुरुन्ध्येरन् तर्हि भटान् विना राजेच्छामनुरुध्य शस्त्राण्येव शत्रुभिर्युध्येरन् । तस्मान्नैष आरम्भवादो युक्त इति भावः । एवमारम्भवादं प्रतिक्षिप्य[5] परिणामवादमधिक्षेप्तुं तन्मतमनुवदति—गुणसाम्येति । अनीश्वराः साङ्ख्यास्तु सत्त्वरजस्तमोगुणानां साम्यावस्था प्रकृतिः स्वत एव गुणवैषम्यद्वारा जगदाकारेण परिणमत इत्याहुः । एतन्मतमप्यसम्भवि ॥ १८ ॥ कुत इति चेदाह—वैषम्येति । प्रकृतिर्हि प्रलये गुणसाम्यरूपा । प्रलयान्ते च निर्हेतुकं तद्गुणवैषम्यमयुक्तम्[6] । नापि प्रकृतेरन्यत् प्रलये किञ्चिदस्ति यद्गुणवैषम्ये हेतुतामियात् ।

1. भगदत्तप्रयुक्तं वैष्णवास्त्रं वासुदेवस्योरसि वैजयन्तीरूपेण परिणतमित्येषा कथा महाभारते द्रोणपर्वणि २९ अध्याये द्रष्टव्या ।

१. एत—घ० । २. 'न्युक्तानि·······दूषणानि' नास्ति—ग० ।
३. दद्दूषणा—क० । ४. ध्येयम्—ग० घ० ।
५. प्रक्षिप्य—क० । ६. वैषम्ययुक्तम्—क० ख० ।

चेतनेनानधिष्ठानाद् दृष्टान्तानुपलम्भतः ॥१९॥
तस्माज्जागतकार्यस्य कारणं नोपलभ्यते।
अदृष्टे तु श्रुतिर्मूलं नान्यमानस्य[1] सङ्गमः ॥२०॥
प्रमातॄणामपूर्णत्वात् प्रमाणस्यानवस्थितेः।

कथञ्चिद्विषमगुणायाः प्रकृतेः पुनः सृष्ट्यन्ते प्रलयनिमित्तसाम्यहेतोरसम्भवश्च। नन्वस्ति हेतुर्गुणानां साम्ये वैषम्ये च, यद्धि सेश्वरैः परैरीश्वरस्य वैषम्यनैर्घृण्यपरिहाराय कर्माभ्युपगतं तदेव गुणवैषम्यादौ हेतुरिति चेदाह—चेतनेनेति। चेतनेनानधिष्ठानात् प्रकृतेः परिणामो नोपपद्यत इति शेषः। सर्वत्र चेतनव्यापारमन्तरा जडेषु क्रियाऽदर्शनात् स्वतः प्रकृतेर्जगद्रूपेण परिणतिः, बन्धाय पुरुषं प्रति प्रवृत्तिः, मोक्षाय निवृत्तिश्च नोपपद्यते। चेतनप्रेरणं विना जडेष्वदृष्टमात्रेण प्रवृत्तिर्निवृत्तिर्वा न क्वचिद् दृष्टेति दृष्टान्ताभावान्नानुमानेनाप्येतत्सिद्धिरित्याह—दृष्टान्तेति ॥१९॥ यस्मादेवं जगतः कारणनिरूपणं नोपपद्यते, तस्मादुपपन्नमुपादानं कारणं नोपलभ्यते। ननु जगद्रूपं कार्यं प्रमाणसिद्धमनपह्नवनीयम्, तस्याकारणकत्वाभ्युपगमे परमतप्रवेशः, तस्मात् कारणोपपादनं[2] चास्मदुक्तमार्गेणैव भवितव्यमिति चेदाह—अदृष्टे त्विति। परोक्षे विषय इत्यर्थः। श्रुतिः आगमः। मूलं निश्चायकं प्रमाणमित्यर्थः। कुत एवमिति चेदाह—[3]नान्येति। अन्यस्य प्रत्यक्षादेर्न[4] सङ्गमो न प्रवृत्तिरित्यर्थः ॥२०॥ कुत एवमिति चेदाह—प्रमातॄणामिति। इन्द्रियसंनिकृष्टे हि प्रत्यक्षं प्रमाणम्, तथा च प्रमातॄणां परिच्छिन्नत्वेनापूर्णत्वात् स्वर्गेन्द्रादौ तदिन्द्रियसन्निकर्षासम्भवान्न प्रत्यक्षप्रवृत्तिः। अनुमानस्य प्रत्यक्षमूलकत्वादेव नित्यपरोक्षे न प्रवृत्तिः। कथञ्चित् प्रवृत्त्युपपादने वाऽनुमानप्रमाणस्य बुद्धिकौशलायत्तत्वेनान्यथाप्यनुमानप्रवृत्त्याऽनवस्थितेर्न किञ्चिदनुमानेन प्रकृतं सेत्स्यति।

---

१. मानंमुस—क० ख०। २. पादने—क०।
३. 'नान्येति' नास्ति—क०। ४. क्षादिर्न—क० ख०।

कार्यकर्त्र[1]वियोगस्य भूयोदर्शनहेतुतः ॥२१॥
सकर्तृकं जगदिदं सम्भवाच्चेतनो हि सः ।
कार्यस्याचिन्त्यरूपस्य कर्ता साधारणः कथम् ॥२२॥
तस्मादचिन्त्यशक्तिः स आगमस्तद्विमर्शनम् ।

दृश्यते [2]च तर्कमात्रसाधितेऽर्थे तैर्थिकानां पृथगभ्युपगम इत्यभिप्रेत्याह—प्रमाणस्येति । अनुमानस्येत्यर्थः । नन्वागमो हि शब्दः । सोऽपि परिच्छिन्नप्रमातृप्रयुक्तः स्वर्गादिपरोक्षे कथं प्रमाणमित्याशङ्क्य नादृष्टेऽर्थे शब्दमात्रस्य प्रामाण्यमुच्यते, किन्त्वैश्वरस्यैव श्रुत्यादेरित्यभिप्रेत्य, तस्यागमस्य प्रमाणेषु श्रेष्ठत्वं वक्तुं प्रसङ्गादीश्वरं साधयति—कार्येति[3] । कार्यं कर्त्रविनाभूतमिति भूयोदर्शनाज्जगत् सकर्तृकमित्यर्थः ॥ २१ ॥ सकर्तृकमिति । नन्वनुमानेनेश्वरसाधनमनुपपन्नम्, अनुमानं हि नित्यपरोक्षा[4]साधकमित्यनुपदमुक्तत्वादिति चेदुच्यते—कार्यस्य नोपादानाविनाभूतत्वनियमः, योगिनिर्मितकार्ये व्यभिचारात् । ननु तत्रापि योगीच्छया झटिति सङ्घटितपरमाणव एवोपादानतां भजेरन्निति चेन्न, नियतशिवकस्तूपककापालिकाकपालात्मकक्रमोल्लङ्घनेन व्यभिचारानपोहात् । नियतशिवकादिक्रमोल्लङ्घनं योगसामर्थ्यजनितमनपह्नवनीयम् । तेनैव सामर्थ्येन कार्यनिर्वाहे [5]परमाणुसङ्घटनकल्पनस्य निर्युक्तिकत्वात् । प्रसिद्धकारणादिक्रमेणैव घटं निर्मिमाणो योगी कुलाल एव भवेदिति च ज्ञेयम् । नहि कार्यस्य कर्त्रविनाभूतत्वानियमः, अव्यभिचारात् । तस्मात् कार्यस्य सकर्तृकत्वानुमानं नानवस्थितम् । एवं साधितोऽपि कर्ता न जडः, उपादान[6]गोचरापरोक्षज्ञानादिमत्त्वरूपकर्तृत्वस्य जडेऽसम्भवादित्याह—सम्भवादिति ॥ २२ ॥ यस्मादचिन्त्यरूपकार्यस्य प्राकृतः कर्ता न सम्भवति,

१. कर्तृ–क० ख० । २. 'च' नास्ति–क० ख० ।
३. 'कार्येति' नास्ति–क० । ४. परोक्ष–क० ।
५. अपर–क० ख० । ६. दाना–क० ख० ।

पूर्णस्य त्वप्रतिहतं प्रमाणं सर्वतोऽधिकम् ॥२३॥
तत्रैकस्तु महेशानः पुरा सृष्टेरुदाहृतः ।
स्वतन्त्रो ह्यनुपादानः स्वातन्त्र्यभरवैभवात् ॥२४॥
स्वात्मभित्तौ जगच्चित्रं विलासायावभासयत् ।
यथा स्वप्नमनोराज्ये कल्पितं स्वेन केवलम् ॥२५॥
अहंत्वेनैव गृह्णाति देहं तद्वदयं जगत् ।

तस्मादचिन्त्यशक्तिर्जगत्कर्ता। तदिति लुप्तषष्ठ्यन्तं तस्य पूर्णस्याचिन्त्यशक्तेः । जगत्कर्तुर्विमर्शनं तत्त्वावगमको व्याहारात्मा व्यापार आगमः । अस्याचिन्त्यशक्तित्वादेवाशरीरिणोऽपि व्याहारात्मा व्यापार इति ज्ञेयम् । 'यस्मादेवंविधोऽयमागमः, तस्मादप्रतिहतं सर्वथान्यैरबाधितं प्रमाणम् । अत एव सर्वतः प्रमाणेभ्योऽधिकं श्रेष्ठं प्रबलमित्येतत् ॥२३॥ इत्थं दृशिमात्रमिति "अत्रोपपत्तिं वक्ष्यामि" [११।७] इति प्रतिज्ञाय महता प्रबन्धेनागमस्य प्रमाणमूर्धन्यत्वं संसाध्य प्रतिज्ञातार्थनिर्वाहायागमोक्तार्थमनुवदति श्लोकदशकेन—तत्रेति । आगमे इत्यर्थः । उपादानरहित इत्युदाहृतः। तथा चागमः—"आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्"[ऐत०उ० २।१।१],"नासदासीन्नो सदासीत्तदानीम्" [ऋ. १०।१२९।१], "निरुपादानसम्भारः स्वात्मभित्तौ हि लीलया। जगच्चित्रं समुल्लिख्य क्रीडत्येष महेश्वरः ॥" इत्यादिः। स्वातन्त्र्यस्य भर उत्कर्षः, तस्य वैभवान्माहात्म्यादवभासयदित्यन्वयः ॥२४॥ विलासाय क्रीडनाय। यथा स्वप्ने मनोराज्ये वा[२] स्वेन केवलमुपादानाद्यनपेक्ष्य परिकल्पितं देहम् ॥ २५ ॥ तत्कालेऽहंत्वेन गृह्णाति, तद्वद् अयम् ईश्वरः स्वपरिकल्पितं जगदहंत्वेनैव गृह्णाति । यदुक्तम्— "स्वाङ्गभूतेषु[1] भावेषु प्रमाता कथ्यते पतिः" [ई० प्र० ३।१४] इति।

---

1. 'स्वाङ्गरूपेषु' इति तत्रत्यः पाठः ।

१. तस्मा—क० ख० । २. 'वा' नास्ति—क० ।

न ते रूपं यथा देहः स्वप्नव्यावृत्तिहेतुतः ॥२६॥
तथास्य न जगद्देहो व्यावृत्तेः प्रलये ननु ।
देहादिव्यतिरिक्तस्त्वं यथा केवलचिन्मयः ॥२७॥
एवं देवो जगच्छून्यचिदेकवपुरव्ययः ।
तेनेदं स्वात्मनि जगच्चित्रमुन्मीलितं ननु ॥२८॥
क्वोन्मीलयेज्जगच्चित्रं स्वान्यस्य क्वाप्यसम्भवात् ।
ऋते चितिं कदाचिद्वा क्व किं भवितुमर्हति ॥२९॥
यत्राभावश्चितेर्ब्रूयात्[1] स देशो नैव सिध्यति ।
अभावश्च चितेः केन सिध्येत्तस्माच्चितिः परा ॥३०॥
महासत्ता जगद्ग्रासशीला पूर्णाऽवभासते ।

न त इति । यथा हि मनोराज्यपरिकल्पितदेहो न ते स्वरूपम्, स्वप्नादौ व्यावृत्तेः ॥ २६ ॥ दार्ष्टान्तिके योजयति—तथेति । अस्य ईश्वरस्य । अहंत्वेन गृहीतमपि जगन्न देहः, प्रलये जगतो व्यावृत्तेः । यथा जाग्रदाद्यवस्थास्वनुवृत्तस्य चिदात्मनस्तवा'वस्थाननुवृत्तदेहादि-व्यतिरिक्तत्वम्, एवमीश्वरोऽपि प्रलयाननुवृत्तजगद्व्यतिरिक्तशुद्धः चिन्मय इत्याह—देहादीति ॥ २७ ॥ अव्यय इत्यनित्यजगद्व्यतिरिक्तत्व-निर्वाहकं विशेषणम् । तेन चिदेकवपुषा ईश्वरेण ॥ २८ ॥ "पूर्णस्य त्वप्रतिहतम्" [ ११।२३ ] इत्युक्तं पूर्णत्वं साधयति—क्वेति । स्वस्मा-दन्यस्य दृश्यस्य क्वापि स्वसमादन्यत्रासम्भवाज्जगच्चित्रं क्वोन्मील-येदित्यर्थः । कुतः क्वापि स्वान्यस्यासम्भव इति चेदाह—ऋत इति । कदा क्व किमिति कालदेशाकारप्रतिषेधः ॥ २९ ॥ यत्रेति । यत्र चिद-भावस्तद्देशप्रकाशासम्भवान्न सिद्ध्येत्, सिद्धेः प्रकाशायत्तत्वादिति भावः । अभावश्चेति । चितः सर्वप्रकाशकत्वेन तदभावः केन सिध्येदिति भावः । तस्मात् चिदभावस्यासिद्धेः । परा अनिषेध्या,

१. स्तता-क० ।

समुद्रमन्तरा भङ्गा दिवानाथं विना प्रभाः[1] ॥३१॥
यथा न सन्ति तद्वद् वै संविद्रूपं विना जगत् ।
तस्मादेष महादेवः शुद्धचैतन्यविग्रहः ॥३२॥
आसीत् सृष्टेः पुरा तस्मादुत्पन्नं तत्र संस्थितम् ।
तस्मिन् विलीयते चान्ते जगदेतच्चराचरम् ॥३३॥ ✓ १० श्लोक
इत्यागमप्रसिद्धोऽर्थस्तन्न विप्रतिपद्यते ।
अदृष्टार्थेषु संवादात् प्रमाणं ह्यागमो भवेत् ॥३४॥
दृश्यन्ते मणिमन्त्रादिसिद्धयः सर्वतो यतः ।
नाल्पप्रज्ञो विजानीयाद् मणिमन्त्रमहाफलम् ॥३५॥

निषेधावधिभूतत्वात् ॥ ३० ॥ अत एव महासत्ता । महती अपरिच्छिन्ना सत्ता यस्याः । अत एव जगतस्तया व्याप्तत्वाज्जगतो ग्रसनं शीलं यस्याः । अत एव पूर्णा । अत एव तदविनाभूतं जगदिति सदृष्टान्तमाह—समुद्रमिति ॥३१॥ यथा हि [2]समुद्राद्यविनाभूतास्तरङ्गादयस्तथा संविद्रूपाविनाभूतं जगत् । यस्मात्संविदविनाभूतं जगत् तस्माच्छुद्धचैतन्यविग्रहो दृश्यलेशरहित आसीदिति सम्बन्धः ॥ ३२ ॥ तस्मात् महादेवात् यथा हि समुद्रादेरुत्पत्त्यादिमतां तरङ्गादीनां समुद्रादिमात्राद्यात्मत्वम्, एवं जगतश्चिन्मात्रात्मत्वमिति भावः ॥ ३३ ॥ इतीति । "तत्रैकस्तु" [ ११।२४ ] इत्यादिश्लोकदशकोक्तः । तत् आगमोक्तम् । न विप्रतिपद्यते संशयविषयतां न प्राप्नोति । कुत एवमिति चेदाह—अदृष्टेति । यत्प्रमाणं हि क्वचिद्विसंवादि, तत्प्रमितोऽर्थो विप्रतिपद्यते । यत्प्रमाणं सर्वत्राविसंवादि, तत्प्रमितोऽर्थो न विप्रतिपद्यत इति नियमः । आगमस्त्वदृष्ट एव प्रमाणं न क्वचिद्विसंवादि, अतो न तत्सिद्धोऽर्थो विप्रतिपद्यते । अतः सर्वथा आगमः प्रमाणमेव भवेदिति भावः ॥ ३४ ॥ ननु वेदाद्यागमो नेश्वरोक्तः, प्रमाणाभावादिति चेदाह—दृश्यन्त इति । मणिमन्त्रौषधाना-

१. भा—ख० ग० । २. समुद्रावि—क० ख० ।

तस्मात् सर्वज्ञगदितो ह्यागमः सर्वदर्शनः ।
तत्रोक्तो देव एवादौ सृष्टेर्जगत आस्थितः ॥३६॥
निरुपादान एवादौ सृष्टवानखिलं जगत् ।
[1]यस्माद् महेश्वरः पूर्णस्वच्छस्वातन्त्र्यसंयुतः ॥३७॥
चिदात्मभित्तावखिलं चित्रमुन्मीलयेद्[2] जगत् ।
न तज्जगत् सम्भवति बहिः क्वचिदवस्थितम् ॥३८॥
पूर्णत्वादीश्वरस्येह स्थानमन्यन्न विद्यते ।

मागमोक्तानां सिद्धयः फलोत्पत्तयः [3]सर्वतः साधकेषु यतो दृश्यन्ते, तस्मादागमः सर्वज्ञगदित इति सम्बन्धः । यतो मण्यादिफलमीश्वरादन्योऽल्पप्रज्ञो [4]ज्ञातुं न समर्थ इत्याह—नेति ॥ ३५ ॥ सर्वदर्शन इति । दृश्यतेऽनेनेति दर्शनं [5]प्रमाणव्यापारः, सर्वत्र दर्शनं यस्य । दृष्टादृष्टविषय इति यावत् । देवश्चिन्मात्रमूर्तिरीश्वरः, एवकारेण प्रधानादिव्यावृत्तिः ॥३६॥ आदौ स्वयमेकोऽपि सृष्टिकाले उपादानं कुतश्चित् संपादयतीति चेन्नेत्याह—निरुपादान इति । ननु कुलालादिर्हि कर्ता उपादाने मृदादिरूपे आश्रये घटादिकार्यमवभासयति, ईश्वरो निरुपादानश्चेत् कथं क्वावभासयेदिति चेदाह—यस्मादिति । पूर्णमपरिच्छिन्नं स्वच्छमकृत्रिमं सहजं स्वातन्त्र्यम् , तेन युतः ॥३७॥ चिदात्मेति । यस्मात् स्वस्य पूर्णत्वेन स्वान्यस्यासम्भवः, पूर्णस्वातन्त्र्ययुतश्च, तस्मात् स्वस्मिन् चिदात्मरूपभित्तौ अखिलं जगच्चित्रमुन्मीलयेदिति भावः । नन्वात्मभित्तावुन्मीलयतीति कुत एतदिति चेदाह—न तदिति । बहिः चिदात्मनोऽन्यत्र ॥३८॥ कुतो न सम्भवतीति चेदाह—पूर्णत्वादिति । व्रीहिभिः पूर्णे घटेऽन्यस्य स्थानाभाव इव दिगादीनामात्मना पूर्णत्वेन नान्यस्य स्थानमस्तीत्यर्थः । [6]आत्मनोऽपूर्णत्वाभ्युपगमेऽपि न तदन्यत्र

१. अस्मा–क० । २. लय–क० ख० घ० । ३. सर्वत्र–क० ।
४. दातुं–क० । ५. प्रमाणं–क० ख० । ६. आत्मनः पू–ख० ग० ।

अन्यस्थानस्थितं तच्च कथञ्चिन्नैव सिध्यति ॥३९॥
तथा च दर्पणाभोगे प्रतिबिम्बवदेव हि ।
जगदुन्मीलितं देवे चैवं सर्वं समञ्जसम् ॥४०॥
जगदादेर्हि देवस्य योगीव जगतः क्रियाः ।
सङ्कल्पनगरप्रख्या सृष्टिर्देवस्य सम्मता ॥४१॥
राम ते मानसी सृष्टिर्मनोमय्येव केवला ।
अनेकमातृमेयादिप्रचुरा ह्यवभासते ॥४२॥
अनेकभेदभिन्नापि मनसोऽन्या नहि क्वचित् ।
उत्पन्ना मनसस्तत्र स्थिता तत्रैव लीयते ॥४३॥
सा केवलमनोरूपा यथा तद्वज्जगच्छिवात् ।

जगत्सिद्ध्यति, चित्प्रकाशबहिर्गतस्याप्रकाशादित्याह—अन्यस्थानेति ॥३९॥ नन्वेतदसमञ्जसम्, अन्यस्वरूपान्तरन्यावभासादृष्टेश्चिदात्मस्वरूपे जगदवभासानुपपत्तेरित्याशङ्क्याह—तथा चेति । दर्पणेति । दर्पणस्वरूपान्तः प्रतिबिम्बावभासवद् देवे चिदात्मस्वरूपे जगदुन्मीलितमवभासत [1]इत्येवमभ्युपगमात् सर्वं समञ्जसमिति भावः ॥ ४० ॥ ननु निरुपादानस्य कर्तुः कार्यक्रिया न क्वचिद् दृष्टेति चेदाह—जगदादेरिति । जगत्कर्तुरित्यर्थः । ननु तर्हि योगिनिर्मितवज्जगदपि स्वनिर्मातुर्भिद्येत । तथा च कथमुक्तं चिदतिरिक्तं जगन्नास्तीति चेदाह—संकल्पेति । देवस्य जगत्कर्तुः सङ्कल्पनगरवत् कर्तुरनतिरिक्ता सृष्टिरिति भावः ॥ ४१ ॥ ननु सङ्कल्पनगरमपि कर्तुर्भिन्नमेवेति चेन्नेत्याह—रामेत्यादि । मानसी सृष्टिः सङ्कल्पनगरप्रचुरा याऽवभासते, सा मनोमयीति सम्बन्धः ॥ ४२ ॥ एतदेव साधयति—अनेकेति । भेदैर्व्यावृत्तधर्मैर्भिन्नापि मानसी सृष्टिर्यतो मनस्युत्पन्ना तत्रैव स्थिता लीना च, ततो मनसो नह्यन्येति सम्बन्धः ॥ ४३ ॥ सेति । मानसी सृष्टिः ।

१. इत्येवाभ्यु–क० ।

स शिवश्चितिमात्रैकरूपश्चितिरविग्रहा ॥४४॥
त्रिपुरानन्तशक्त्यैक्यरूपिणी सर्वसाक्षिणी ।
सा चितिः सर्वतः पूर्णा परिच्छेदविवर्जनात् ॥४५॥
कालो देशश्च लोकेऽस्मिन् परिच्छेदकरः स्मृतः ।

यथा मनस उत्पत्त्यादिना मानससृष्टेर्मनोमयत्वम्, तथा चिदात्मनः शिवादुत्पत्त्यादिमज्जगच्चिन्मयमित्यर्थः। ननु शिवादुत्पन्नस्य जगतः शिवरूपतैव न चितिरूपतेति चेदाह—स इति। ननु चितेः कुलालवद्विग्रहः स्यादित्याशङ्क्य नेत्याह—अविग्रहेति । नास्ति चिदतिरिक्तो विग्रहो देहो यस्याः ॥ ४४ ॥ सा चितिरेव प्रकरणप्रतिपाद्या त्रिपुरेत्याह—त्रिपुरेति। [1]"शक्तयोऽस्य जगत्सर्वम्" इत्युक्तनीत्या घटाद्याभासरूपा अनन्ता याः शक्तयः, तासामैक्यं सङ्घट्टः, तद्रूपिणी। यथा हि दर्पणे प्रतिभासमानप्रतिबिम्बानां दर्पण एव सङ्घट्टमयं रूपम्, तथेति भावः । ननु तर्हि दर्पणवच्चितेर्जडरूपत्वमपि स्यादिति चेदाह—सर्वसाक्षिणीति । साक्षित्वं च साद्यस्वरूपाभिज्ञत्वम् । तच्च ज्ञानशक्तिरूपं न जडस्य सम्भवतीति भावः । प्रागुक्तमपि पूर्णत्वं सम्यक् साधयितुमुपक्रमते—सा चितिरिति ॥ ४५ ॥ ननु कथं परिच्छेदवर्जितेति चेदाह—काल इति । कालदेशयोरेव परिच्छेदकत्वं[1] लोके प्रसिद्धमिति भावः । ननु परिच्छेदकाभिमतयोर्देशकालयोः किं रूपमिति चेदाह—तत्रेति। तयोर्मध्ये इत्यर्थः। 'इहेदानीं घटः' इत्यत्र इहेति गृहादिरूपो देशः, इदानीमिति प्रातरादिरूपः कालश्च भासते। तत्र

---

1. शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते ।
शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः ॥
इत्ययं श्लोकः परमार्थसारस्याभिनवगुप्तकृतेर्योगराजकृतविवृतौ (पृ० १०) श्रीसर्वमङ्गलाशास्त्रश्लोकत्वेनोद्धृतः ।

१. 'कत्वं'''परिच्छेद' नास्ति—क० ।

तत्राकारमयो देशः कालस्तु स्यात् क्रियामयः ॥४६॥
यां चितिं समुपाश्रित्य स्यादाकारः क्रियापि वा ।
तस्याः परिच्छेदकत्वमनयोः स्यात् कथं वद ॥४७॥
कस्मिन् देशे च काले च चितिर्नास्तीह तद्वद ।
यत्र न स्याच्चितिः सोऽपि कथं स्यादिति वै भवेत् ॥४८॥

गृहादिरूपो देशः पृथिव्यादेः संस्थानविशेषात्माकार एव । कालस्तु सूर्यादिपरिस्पन्दादिरूपा क्रियैव । यदुक्तं श्रीप्रत्यभिज्ञायाम्—"मर्ति-वैचित्र्यतो देशक्रममाभासयत्यसौ । क्रियावैचित्र्यनिर्भासात् कालक्रम-मपीश्वरः ॥" [ २।५ ] इति । तथा कालः सूर्यादिसञ्चारस्तत्तत्पुष्पादि-जन्मैवेति च । नह्याकारक्रियाभ्यां देशः कालो वान्य उदयगिर्यादिरूपेण सूर्यादिक्रियारूपेण वोपाधिनोपहितोऽखण्डः सम्भवति, यतः सर्वव्यव-हारस्योपाधिनैव निर्वाहात्तत्कल्पने प्रमाणप्रयोजनयोरभावात् ॥ ४६ ॥ एवं देशकालयोः स्वरूपं विविच्य ताभ्यां परिच्छेदाभावं चिदात्मनः साधयति—यामिति । लोके हि शतायुषो गृहस्थस्य पुरुषस्य ततो महतः कलियुगात्मककालस्य जम्बूद्वीपात्मकदेशस्यैकांशेन शत-वर्षकालेन गृहरूपदेशेन च परिच्छेद एतावत्कालं स्थित एतद्देशे स्थित इति प्रसिद्धः । प्रकृते चिदात्मैकदेशाश्रयेण सतोर्देशकालयोराकारक्रिया-रूपयोः कथञ्चिदात्मपरिच्छेदकत्वमित्यर्थः ॥ ४७ ॥ ननु [1]न चिदा-त्माश्रितौ देशकालौ [2]यतस्तयोर्महत्तरयोरेकदेशस्थो घटादिवच्चिदा-त्मेति चेदाह—कस्मिन्निति । यत्रेति । देशे काले [3]चेत्यर्थः । सोऽपीति देशः कालोऽपीत्यर्थः । यथा हि घटशरावादिकं मृदविनाभूतं मृदाश्रितं मृदं विना न भवति, यथा[4] च दर्पणाविनाभूतं प्रतिबिम्बवस्तु दर्प-णाश्रितं दर्पणं विना न भवति, तथा चिदविनाभूतौ देशकालौ न

१. 'न' नास्ति—क० ख० ग० । २. यस्त—क० ख० ।
३. वेत्यर्थः—ख० घ० । ४. तथा—क० ख० ।

अस्तिता हि पदार्थानां प्रकाशो नापरः खलु ।
प्रकाशस्तु चितिः प्रोक्ता नाचितेः[1] स्यात् प्रकाशता ॥४९॥
प्रकाशस्तु सुमुख्यः स्याद्यः स्वतन्त्रः प्रकाशते ।
जडा न स्वप्रकाशा हि चितियोगप्रकाशनात् ॥५०॥
अन्यानपेक्षणेनैव चितिः स्वस्मिन् प्रकाशते ।
जडाश्चितिं समाश्रित्य प्रकाशन्ते न चान्यथा ॥५१॥

तां विना स्त इति तदाश्रितावेवेति भावः ॥ ४८ ॥ ननु सौरालोकव-च्चितिर्वस्तुप्रकाशिका, तथा च यथा सौरालोकरहितो घटादिरन्धकारे-ऽस्ति, तथा चितिं विनापि देशादिभावोऽप्यस्त्विति चेदाह—अस्तितेति । सत्त्वमित्यर्थः । वस्तूनां सत्त्वं हि प्रकाशनमेव नेतरत् । सत्त्वात्मकप्रकाशो हि चितिरेव । नास्ति चितिर्यस्य सोऽचितिः, चिदविषय इति तात्पर्यम् । तस्याचितेः[1] प्रकाशता यतो नास्ति, ततश्चितिरेव प्रकाश इत्यर्थः । तथा च सौरालोकं विनाऽन्धकारे घटादेर्भासनादालोकादन्यदस्तित्वं घटादेः । [2]चित्प्रकाशं विना घटादेः कथञ्चिदपि व्यवहाराभावाच्चित्प्रकाश एवास्तित्वमिति भावः ॥ ४९ ॥ नन्वस्तु भावानां सत्त्वं प्रकाश एवेति, तथापि घटः प्रकाशते चितिः प्रकाशत इति व्यवहारसाम्यात् कथं चितिर्घटादेर्दृश्यस्याश्रयभूतेति चेदाह—प्रकाश इति । यः स्वतन्त्रः अन्यानपेक्षः प्रकाशते, तस्य प्रकाश एव [3]सुमुख्यः । जडा इति । जडाश्चिदात्मभिन्ना न स्वप्रकाशाः, अन्यानपेक्षप्रकाशा न भवन्तीत्यर्थः । हि यस्मात् । चितियोगेन चिद्विषयतापत्त्या प्रकाशनात् । चित्तादात्म्यमप्राप्तानामप्रकाशनाच्च जडानां स्वतन्त्रप्रकाश इति भावः ॥ ५० ॥ चितिस्तु न तथेत्याह—अन्येति । स्वस्मिन् अन्यतादात्म्यमनुपगते स्वस्वरूपे[4] समाध्यादिदशासु प्रकाशते ।

१. नाचितः—क० । २. अतश्चि—क० ख० ।
३. मुख्यः—घ० । ४. स्वरूपे—क० ख० ।

अप्रकाशेऽपि वस्तूनामस्तिता चेत्तदा शृणु ।
अस्ति नास्तीति लोकेऽस्मिन् व्यवस्था नहि सेत्स्यति ॥५२॥
तस्माद्वस्त्वस्तिता लोके चित्प्रकाशो न चापरः ।
यथा हि प्रतिबिम्बानां सत्त्वं दर्पण एव हि ॥५३॥
तथा चितिर्जगत्सत्ता ततः सर्वं चितिर्भवेत् ।
अधिकं भासते यत्तु तन्नैर्मल्यमहित्त्वतः[1] ॥५४॥

तस्माच्चिज्जडयोः प्रकाशवैषम्याच्चितिमाश्रित्यैव जडाः प्रकाशन्ते, न स्वातन्त्र्येणेत्यर्थः ॥ ५१ ॥ अस्तु भावानामाकाशाश्रितत्ववच्चिदाश्रितत्वम्, तथाप्यस्ति प्रकाशते चेत्यादिव्यवहारादस्तिता प्रकाशाद्[2] भिन्नैवेति चेदाह—अप्रकाशेऽपीति । नन्वस्तित्वं प्रकाश इत्युभयं [3]समनियतमसमनियतं वा ? आद्ये समनियतयोर्घटत्वकलशत्वयोरिवाभेदः सिद्ध एवेति मत्वा द्वितीये दूषणमाह—अस्तीति । यद्यप्रकाशेऽप्यस्तित्वं घटादेस्तर्हि 'अयं नास्त्यप्रकाशमानत्वात्' इत्यादि व्यवस्था न सेत्स्यतीति भावः । ननु तर्ह्ययं प्रकाशतेऽस्ति च, यतः प्रकाशते ततोऽस्तीत्यादिव्यवहारः कथमिति चेदुच्यते, दृश्यः प्रत्यक्षत्वादित्यादिवन्नेय इति ॥ ५२ ॥ तस्मादिति । प्रकाशास्तित्वयोः समनियतत्वादित्यर्थः । अत्र दृष्टान्तः—यथेति । धर्मधर्मिणोस्तादात्म्याभिप्रायेणोक्तम्—दर्पण एवेति । दर्पणसत्त्वमेव प्रतिबिम्बानां सत्त्वमित्यर्थः ॥ ५३ ॥ एवं चित्प्रकाशयोस्तादात्म्यात् चितिर्जगत्सत्तेति सर्वं जगत् । ननु चितिरेव सर्वं चेत्तर्हि चितिरित्येव भासेत, घटः पट इत्यधिकांशभासनं कथमिति चेदाह—अधिकमिति । तन्नैर्मल्येति । तस्याश्चितेर्नैर्मल्यस्य [1]महित्त्वतो माहात्म्यादित्यर्थः ॥ ५४ ॥ ननु दर्पणेऽधिकावभासः प्रतिबिम्बविधया भवेत्, प्रकृते चिदात्मनि

---

१. महत्त्वतः–क० । २. काशवद्–क० ।
३. 'सम''''आद्ये' नास्ति–क० ।

काठिन्यनिर्मलत्वाभ्यां प्रतिबिम्बावभासनम् ।
तयोस्तु तारतम्येन प्रतिबिम्बः स्फुटोऽस्फुटः ॥५५॥
दर्पणे च जले चापि स्पष्टमेतद्धि लक्ष्यते ।
जडत्वाद् दर्पणादेस्तु स्वातन्त्र्यपरिवर्जनात् ॥५६॥
बिम्बापेक्षा चितेः स्वच्छस्वातन्त्र्यादनपेक्षता ।
निर्मलत्वं स्वतःसिद्धं चितेर्मालिन्यवर्जनात् ॥५७॥

कथमधिकावभास इति चेत्प्रतिबिम्बविषयैवेति वक्तुं प्रतिबिम्बनिमित्तं विवेचयति—काठिन्येति। [१]काठिन्यमरिक्तात्मत्वम् , प्रतिबिम्बावभासनं भवेदिति शेषः। तयोः काठिन्यनिर्मलत्वयोः। तारतम्येन न्यूनाधिकभावेन ॥ ५५ ॥ काठिन्यनिर्मलत्वयोराधिक्येन दर्पणे स्फुटः प्रतिबिम्बः, न्यूनत्वेन जलेऽस्फुटः प्रतिबिम्बः। एतच्च सर्वैः स्पष्टं लक्ष्यते। भित्तौ नैर्मल्याभावादाकाशे काठिन्याभावाच्च न प्रतिबिम्बावभास इति भावः। ननु चितेः स्वान्तः[२] प्रतिबिम्बावभासने दर्पणवद्बिम्बापेक्षापि स्यादिति चेदाह—जडत्वादिति। परिवर्जनाद् बिम्बापेक्षेति सम्बन्धः॥ ५६ ॥ [३]स्वच्छं परिच्छेदमलरहितं सार्वत्रिकं यत स्वातन्त्र्यं तस्मात् चितेर्बिम्बानपेक्षता। यदुक्तम्—

अन्तर्विभाति सकलं जगदात्मनीह
यद्वद्विचित्ररचना मुकुरान्तराले ।
बोधः [1]पुनर्निजविमर्शनसारयुक्त्या[2]
विश्वं परामृशति नो मुकुरस्तथा तु ॥ इति ।
[ त० सा० पृ० १९ ]

---

1. 'परं निज' इति तन्त्रसारस्थः [पृ० १९], ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनीस्थश्च [ भा० २, पृ० २०३ ] पाठः। परमार्थसारयोगराजविवृतौ [ पृ० ३९ ] तु मूलस्थित एव पाठो दृश्यते।
2. 'वृत्त्या' इति तन्त्रसारस्थः पाठः।
१. काठिन्यमरितात्मत्वम्—क० ख०। २. स्वतः—क०। ३. स्वच्छ—क०।

अनेकरसतैव स्याद् मालिन्यं तत्[1] चितेर्नहि ।
ऐकात्म्यरूप्याच्चिच्छक्तेरखण्डत्वाच्च सर्वथा ॥५८॥
अरिक्तात्मभावहेतोर्नैर्मल्यं सर्वतोऽधिकम् ।

ननु जलादेः कतकादिना नैर्मल्यं सम्भवति, चितेः कथमिति चेदाह—निर्मलत्वमिति । आकाशवदसङ्गत्वेन मालिन्यवर्जनात् ॥ ५७ ॥ जलादिगतं मालिन्यं किम् ? यच्चितिरूपे नास्तीत्युच्यते, इत्याशङ्क्याह—अनेकेति । अनेकरसत्वं वस्त्वन्तरसंमिलितत्वम् । यथा पार्थिवरजःसंमिलितत्वं जले मालिन्यम् । यथा च दर्पणे काचान्यांशसंमिलितत्वम् । नन्वेवंविधं मालिन्यं चितेः कुतो नेति चेदाह—ऐकात्म्यरूप्यादिति । अवयविनां स्वावयवान्तरालेषु स्वातिरिक्तांशमेलनान्मालिन्यसम्भवः । चिदात्मनो निरवयवत्वेनैकरूप्यान्न मालिन्यमिति भावः । एवं नैर्मल्ये निमित्तमुक्त्वा काठिन्येऽपि निमित्तमाह—अखण्डेति । अखण्डत्वादरिक्तात्मभावहेतोरिति सम्बन्धः । रिक्तात्मत्वमवकाशात्मत्वम् । अवकाशवत्त्वमिति यावत् । लोके ह्यवयवसंश्लेषतारतम्येन काठिन्यतारतम्यं दृष्टम् । यदवयवानां संश्लेषाधिक्यम्, तत्र काठिन्याधिक्यम् । संश्लेषन्यूनत्वे काठिन्यन्यूनता । दृष्टं चैतत्पाषाणजलयोः । संश्लेषे आधिक्यं चावयवांशानां सम्बन्धाधिक्यनिमित्तम् । तथाहि—यस्माद्यस्यावयवांशा यावन्तोऽधिकाः संयुक्तास्तस्य तावदधिकः संश्लेषस्तावदधिकं काठिन्यं [2]च, तथा यस्य यावदवयवांशा असंयुक्तास्तस्य तावदंशावच्छेदेनान्तरवकाशवत्त्वाद्रिक्तात्मत्वाच्च तस्यानधिककाठिन्यवत्त्वमिति । चितेस्तु निरवयवत्वेनाखण्डत्वादरिक्तात्मत्वमिति भावः ॥५८॥ अरिक्तात्मभावहेतोश्चितेर्नैर्मल्यं सर्वतोऽधिकम् । प्रकृते नैर्मल्यमिति काठिन्यस्याप्युपलक्षणम् । तथा च चितेर्नैर्मल्यं काठिन्यं च सर्वतो दर्पणादेरधिकमित्यर्थः ।

---

१. सा—ग० घ० । २. 'च' नास्ति—क० ख० ग० ।

अस्वतो भासमानस्य भानमन्यानुषङ्गतः ॥५९॥
प्रतिबिम्बस्वरूपज्ञाः प्रतिबिम्बं प्रचक्षते ।
जगदेतादृशं सर्वं सर्वैः समभिलक्षितम् ॥६०॥
स्वतो न भासते क्वापि भासते च चिदाश्रयात् ।
अतो जगत् स्यादादर्शप्रतिबिम्बसुसंमितम् ॥६१॥
चितिर्विचित्राऽन्यभावैरुपरक्तापि भासिनी ।
स्वरूपादप्रच्युतैवादर्शवल्लेशतोऽपि हि ॥६२॥
दर्पणप्रतिबिम्बानां दर्पणानन्यता यथा ।

अवयविनामवयवांशे[1]ष्ववकाशतारतम्यसम्भवात्तदवकाशेषु वस्त्वन्तरप्रवेशतारतम्यसंभवाच्च काठिन्यनैर्मल्यतारतम्यम्, चितेरखण्डत्वेन सर्वथा रिक्तात्मत्वाद्धेतोर्नैर्मल्यं काठिन्यं च सर्वतोऽधिकमिति भावः। ननु जगतः प्रतिबिम्बत्वे प्रमाणाभावान्न प्रतिबिम्बत्वमिति चेत्, प्रतिबिम्बलक्षणयोगात् प्रतिबिम्बत्वमिति वक्तुं प्रतिबिम्बलक्षणमाह—अस्वत इति। अन्यासम्बन्धेऽभासमानत्वे सत्यन्यसम्बन्धेन भासमानत्वं [2]प्रतिबिम्बत्वम्। यथा प्रतिबिम्बघटो दर्पणं विनाऽभासमानो दर्पणसम्बन्धेनैव भासते, एवं चितिं विनाऽभासमानं चितिसम्बन्धेनैव भासत इति जगत् प्रतिबिम्बात्मकमेव ॥ ५९ ॥ प्रतिबिम्बमिति। प्रतिबिम्बत्वमित्यर्थः। एतादृशं प्रतिबिम्बलक्षणवत् ॥ ६० ॥ लक्षणं जगति योजयति—स्वत इति। सुसंमितं समम् ॥६१॥ एवं जगतः प्रतिबिम्बलक्षणयोगात् प्रतिबिम्बत्वमुपपाद्य चितेर्दर्पणतुल्यतां वक्तुं प्रतिबिम्बग्राहिणो लक्षणं चिति योजयति—चितिरिति। अन्यस्वरूपोपरक्तत्वेन भासमानत्वे[3] सत्यप्रच्युतस्वरूपत्वं प्रतिबिम्बग्राहित्वम्। भासिनीति। भासनमात्ररूपा। अत एव लेशतोऽप्यप्रच्युतेत्यन्वयः ॥ ६२ ॥ एवं

१. ऽप्यव–ख०, ऽवव–क०। २. अन्यप्रति–क०।
३. मानेत्यप्र–क०।

चिदात्मप्रतिबिम्बानां चिदात्मानन्यता तथा ॥६३॥
दर्पणे प्रतिबिम्बो हि बिम्बहेतुर्निरूपितः ।
चितिः[ति] स्वातन्त्र्यहेतुः स्यात् प्रतिबिम्बो हि जागतः ॥
स्वसङ्कल्पाद्राम पश्य स्वात्मनि प्रतिबिम्बितान् ।
भावान् बिम्बविनाभूतान्निर्निमित्तावभासनान् ॥६५॥
सङ्कल्प एव स्वातन्त्र्यं चितेरुच्छूनमीर्यते ।
असङ्कल्पदशायां सा चितिः स्वच्छैकरूपिणी ॥६६॥

महता प्रयत्नेन जगतः प्रतिबिम्बत्वे साधिते फलितमाह—दर्पणेति ॥६३॥ "स्वच्छस्वातन्त्र्यादनपेक्षता" [ ११।५७ ] इति चिति प्रतिबिम्बने[1] न बिम्बापेक्षेत्युक्तम्, तन्निर्वाहयितुमुपक्रमते—दर्पण इति । बिम्बं हेतुर्यस्य स बिम्बहेतुः। स्वातन्त्र्यं हेतुर्यस्य स जागतः प्रतिबिम्बः ॥६४॥ बिम्बं विना प्रतिबिम्बने दृष्टान्तमाह—स्वसङ्कल्पेति । स्वात्मनि अन्तःकरणपरिच्छिन्नचैतन्ये। निर्गतं निमित्तं यस्य, निर्निमित्तमवभासनं येषाम्, दर्पणप्रतिबिम्ब इव नालोकादिनिमित्तापेक्षापीति भावः । सङ्कल्पान्मनोराज्ये भासमाना भावाः प्रतिबिम्बलक्षणयोगात् प्रतिबिम्बभूताः, तेषामवभासनं बिम्बाद्यनपेक्षमेव प्रसिद्धम्; एवं परचिति जगत्प्रतिबिम्बनमिति भावः ॥ ६५ ॥ सङ्कल्पपदार्थं विवृणोति—सङ्कल्प इति । चिदात्मनो यत्स्वातन्त्र्यं नाम शक्तिः, तस्य शक्तित्वादेव चिदात्मानतिरेकत्वं सूक्ष्मरूपत्वं च । तद्यदोच्छूनं पुष्टं भवति, दृश्याकारत्वेन स्थूलतां प्राप्नोतीति यावत्, तदा तत्स्वातन्त्र्यमेव सङ्कल्प[2] इतीर्यते । यथा हि तव स्वातन्त्र्यमेव सङ्कल्परूपम् । [3]स त्वय्यनेकभावान् प्रतिबिम्बत्वेनावभासयति, एवमेवेश्वरस्य स्वातन्त्र्यमपि जगदवभासयतीति भावः। असङ्कल्पकाले च यथा [4]तवात्मभूता चितिः प्रति-

---

१. प्रतिबिम्बे—क० ख० ग० । २. 'इतीर्यते'''सङ्कल्प' नास्ति—क० ।
३. तत्त्वमप्यनेक—क० ख० । ४. तथा चात्म—क० ख० ।

एवं चितेर्विशुद्धैकरूपायाः सृष्टितः पुरा ।
बृहत् स्वातन्त्र्यमभवत् सङ्कल्पात्मकमेव तत् ॥६७॥
तत एतत्समाभातं प्रतिबिम्बात्मकं जगत् ।
बृहत्सङ्कल्पसुस्थैर्याच्चिरमेतद् विभासते ॥६८॥
साधारणं जगद् भाति पूर्णस्वातन्त्र्यहेतुतः ।
अन्येषां तदपूर्णत्वाद् भात्यसाधारणात्मना ॥६९॥
अभ्यासान्मणिमन्त्राद्यैः स्वातन्त्र्यं तु यथा यथा ।

बिम्बवर्जनेन स्वच्छैकचिन्मात्ररूपिणी ॥ ६६ ॥ एवं सृष्टेः पुरा प्रलये विशुद्धैकरूपा या परा चितिस्तस्या यद् बृहदपरिच्छिन्नं स्वातन्त्र्यं तदेव सृष्ट्यादौ सङ्कल्पात्मकमभवत् । शुद्धचिद्दशायां स्वातन्त्र्यस्य तदेकरूपत्वेन स्थितस्य सृष्ट्यादौ जगद्रूपतापत्तिरेव सङ्कल्पत्वमिति भावः ॥ ६७ ॥ ततः सङ्कल्पादेतज्जगत्प्रतिबिम्बात्मकं समाभातं भवति । ननु यथाऽस्मत्सङ्कल्पभासितभावानामस्थिरत्वम्, एवमीश्वर-सङ्कल्पभासितस्याप्यस्थैर्यं कुतो नेति चेदाह—बृहदिति । बृहतः सङ्कल्पस्य स्थिरत्वेनैतज्जगच्चिरं भासते, सङ्कल्पजावभासस्य [1]सङ्कल्पान्यूनकालत्वनियमादिति भावः ॥ ६८ ॥ ननु तथापि स्वसङ्कल्पजातं स्वात्मन एव भासते नान्यस्य । ईश्वरसङ्कल्पजातजगतः कथं सर्वसाधारण्येन [2]भासनमिति चेदाह—साधारणमिति । ईश्वरस्य पूर्णस्वातन्त्र्यात् सर्वस्वातन्त्र्याद्धेतोरित्यर्थः । तदपूर्णत्वात् स्वातन्त्र्यापूर्णत्वात् सर्वस्वातन्त्र्याभावादित्यर्थः । ईश्वर इदमीदृशं जगत् प्रमात्रन्तरदृश्यमिति सङ्कल्पयति, ततस्तथा भासते । जीवेन तथा सङ्कल्पितेऽपि जगति प्रमात्रन्तरदृश्यमित्यंशेऽस्वातन्त्र्यान्न सोंऽशो भासत इति भावः ॥ ६९ ॥ जीवानामपूर्णं स्वातन्त्र्यमिति तत्सङ्कल्पितानामसाधारण्यमुक्तम् । तस्यैव स्वातन्त्र्यस्योपायैर्यावत् सङ्कोच-

---

१. कल्पा—क० ख० । २. भान—घ० ।

त्यजेत् सङ्कोचमात्मस्थं तथा तत्र हि भासनम् ।.७०।।
पश्यैन्द्रजालिकं राम निरुपादानयोगतः ।
भासयन्तं जगच्चित्रं सङ्कल्पादेव सर्वतः ।।७१।।
साधारणं स्थिरं स्वार्थक्रियार्हं भूय एव तु ।
स्वात्मन्युपसंहरेच्च जगदेवं विभासते ।।७२।।
योगिनः पश्य सृष्टिं तां पूर्णस्थैर्यसमावृताम् ।
योगिनस्तु मितत्वेन सृष्टिर्बाह्या विभाविता ।।७३।।

हानिस्तावत् पूर्णत्वमित्याह—अभ्यासादिति। अभ्यासः शुद्धचिदात्मतत्त्वस्याहमित्यविच्छिन्नानुसन्धानम्। मणिमन्त्रौ प्रसिद्धौ। आदिनौषधिः। एतैः साधितैः। तत्र तत्स्वातन्त्र्यकल्पिते ॥ ७० ॥ अत्रोदाहरणमाह—पश्येति। ऐन्द्रजालिको हि साधितमणिमन्त्राद्यैर्गजतुरगादिरूपं चित्रं जगदुपादानमनपेक्ष्यैव सङ्कल्पमात्रेण सर्वतो भासयतीति भावः। यद्वा मानससृष्टेर[1]साधारण्यमस्थैर्यमर्थक्रियाभावश्चेति बाह्यसृष्टिवैसादृश्याद् दृष्टान्तान्तरमाह—पश्येति ॥ ७१ ॥ स्वीया याऽर्थक्रिया घटादेरुदकाहरणादिरूपा, तदर्हम्। एवंविधं जगदैन्द्रजालिकः सृष्ट्वा भूयः स्वात्मनि स्वसृष्टं सर्वमुपसंहरेच्च। एवमीश्वरसृष्टमपि जगद्विभासते ॥ ७२ ॥ नन्वेवमप्यैन्द्रजालिकसृष्टेरतिस्वल्पकालस्थायित्वेन वैसादृश्यमेवेति मत्वाह—योगिन इति। विश्वामित्रादेर्योगिनो नक्षत्रादिसृष्टिमाप्रलयस्थायित्वरूपपूर्णस्थैर्यसमावृतां पश्येत्यर्थः। ननु तथापि योगिनः सृष्टिरीश्वरसृष्टिवत् स्वस्वरूपे कुतो नेति चेदाह—योगिनस्त्विति। साधारणयोगिन ईश्वरापेक्षया परिच्छिन्नत्वेन परिमितस्वरूपत्वेन बहिःस्थानलाभात् परिमितशक्तित्वाच्च बाह्या सृष्टिर्विभावितेत्यर्थः। यस्तु पूर्णयोगी स बाह्यमनपेक्ष्य

---

१. सृष्टमसा—क०।

अमितत्वात् सृष्टिरियं चिन्नाथस्यान्तरेव हि ।
अत एव चिदात्मत्वव्यतिरेकादसत्यता ॥७४॥

जगतः प्रतिबिम्बस्यादर्शात्मत्वं विना यथा ।
अत एव विचारेणासत्यतां याति नान्यथा ॥७५॥

सत्यं स्वभावं नो मुञ्चेदसत्यं तं परित्यजेत् ।
जगत् पश्य भार्गवैतत् स्वभावादतिचञ्चलम् ॥७६॥

सत्यासत्ये विभागेन भासेते सर्वतोऽखिलम् ।
प्रतिबिम्बादर्शभानमिव तत्प्रविचारय ॥७७॥

श्रीकृष्णादिवत्[1] स्वस्वरूपे एवाऽखिलविश्ववैचित्र्यमवभासयितुं समर्थं इति ध्येयम् ॥ ७३ ॥ नैवमीश्वर इत्याह—अमितत्वादिति । अत एव अन्तःसृष्टत्वादेव । अन्यान्तरन्यावभासनं [2]प्रतिबिम्बतुल्यमेवेति [3]प्रतिबिम्बस्य दर्पणात्मत्वव्यतिरेकेणासत्यत्ववज्जगतोऽपि [4]चिदात्मत्वव्यतिरेकादसत्यतामाह—चिदात्मत्वेति ॥ ७४ ॥ असत्यता जगत इत्यन्वयः । अत एवेति । प्रतिबिम्बरूपत्वादेवेत्यर्थः । नान्यथेति । प्रतिबिम्बात्मकमेतज्जगदिति विचारे कृते न सत्यतां प्राप्नोतीत्यर्थः ॥ ७५ ॥ एवं प्रतिबिम्बत्वेनासत्यत्वं प्रसाध्यासत्यलक्षणवत्त्वादपि जगतोऽसत्यतां वक्तुं प्रसङ्गात् सत्यासत्यलक्षणमाह—सत्यमिति । अव्यभिचरितस्वभावं सत्यम्, अन्यदसत्यमिति तदर्थः । एतत् प्रत्यक्षं जगत् । अतिचञ्चलं क्षणिकम् ॥ ७६॥ कथमयं निश्चय इति चेद्विचारेण भवेदित्याह—सत्येति । सर्वतः सर्वत्र । अखिलं तज्जगत् प्रविचारय । कथमिति चेदाह—प्रतिबिम्बादर्शभानमिवेति । प्रतिबिम्बादर्शयो-

१. श्रीकृष्णादिः—क० ख० ।
२. 'प्रतिबिम्बतुल्यमेवेति' नास्ति—क० ।
३. 'प्रति' नास्ति—ग० । ४. चिदात्मव्य—क० ख० ।

आदर्शो ह्यचलस्तत्र चलं हि प्रतिबिम्बकम् ।
तथा जगच्चलं संविदचला सर्वभाविता ॥७८॥
अत एव हि भावानां विचारासहरूपता ।
तथा हि सूर्यालोको हि वस्तूनामवभासकः ॥७९॥
उलूकादिदिवान्धानां विपरीतोऽन्धकारवत् ।
प्रकाशत्वान्धकारत्वे न विविक्तेऽनयोः[1] स्फुटे ॥८०॥

रनियतनियत[१]रूपत्वेन भानवद् जगच्चिदात्मनोर्भानं भवेदिति प्रविचारयेति भावः ॥ ७७ ॥ एतदेव दृष्टान्ते विचारपूर्वकं दार्ष्टान्तिके योजयति—आदर्श इति । यावत्प्रतिबिम्बेषु आदर्शस्याव्यावृत्तत्वेनापरित्यक्तस्वभावत्वेन सत्यता, घटप्रतिबिम्बस्य पटादिप्रतिबिम्बकाले व्यावृत्तत्वेन परित्यक्तस्वभावत्वादसत्यतेति भावः । तथेति । घटादेर्जगतः परस्परं व्यावृत्तेः, संविदः सर्वत्राऽव्यावृत्तेर्जगदसत्यं संवित् सत्येति ज्ञेयम् । जगत्संविदोश्चलाचलत्वं सर्वैर्ज्ञातमित्याह—सर्वेति ॥ ७८ ॥ अत एव असत्यत्वादेव । यद्धि असत्यं तन्मरुतोयकेशोड्रकादिवदविचारसहमेव । विचारेणेदमीदृशमिति निर्णीतं न[२] भवेदिति भावः । विचारासहत्वमेवोपपादयति भावेषु—तथा हीति ॥ ७९ ॥ विपरीतः अनवभासकः । न विविक्ते विवेकमप्राप्ते । अनयोः सौरालोकतमसोः । वस्त्ववभासकत्वं प्रकाशत्वम्, अनवभासकत्वं प्रकाशविरुद्धत्वं वान्धकारत्वम् । एवं च सौरालोकस्य मनुष्यादीन् प्रत्यवभासकत्वेन उलूकादीन् प्रत्यनवभासकत्वेन[३], एवं तमसोऽपि मनुष्यादीन् प्रत्यनवभासकत्वेनोलूकादीन् प्रत्यवभासकत्वेन कस्य प्रकाशत्वं कस्य वान्धकारत्वमिति विवेक्तुमशक्यत्वेन विचारासहत्वमिति भावः ॥८०॥

1. 'विविक्तेऽनयोः' इत्यत्र सन्धिरार्षः । ~~ऐशः~~
१. 'नियत' नास्ति—ग० ।
२. 'न' नास्ति—क० ख० ।  ३. कत्वं, नैवं—क० ।

एवं विषं कस्यचित् स्यादविषं कस्यचिद् भवेत् ।
मनुष्यादेः प्रतीघातकरी भीतिर्हि लच्यते ॥८१॥
योगिनां गुह्यकादीनामप्रतीघातलक्षणा ।
कालो देशश्च दीर्घो यो मनुष्यादिप्रभावितः ॥८२॥
स एव विपरीतो वै देवानां योगिनामपि ।
दर्पणे भासमानस्य दूरादेर्दूरता यथा ॥८३॥
तथैवास्य स्वभावोऽपि [1]विचारे न स्थिरो भवेत् ।
अत आश्रयरूपेण विना नास्ति हि किञ्चन ॥८४॥

एवमन्येषामपि स्वभावानवस्थितिमाह—एवमिति । विषं वत्सनाभादिर्मनुष्यादेर्मारकं स्यात्, तदुत्पन्नकृम्यादेरविषममारकम् । प्रतीघातो गमनप्रतिबन्धः ॥ ८१ ॥ अप्रतीघातो लक्षणं यस्याः । प्रतीघातकरी न भवतीति तात्पर्यम् । यः कालो देशश्च मनुष्यादिभिर्दीर्घत्वेन ज्ञातः, स एव देवादीनामदीर्घ इत्याह—काल इति ॥ ८२ ॥ कथमेकस्यैव दूरत्वमदूरत्वं चेति चेत् सदृष्टान्तमाह—दर्पण इति ॥ ८३ ॥ तथैवेति । दर्पणे दृश्यमानो यः सुदीर्घोऽपि देशस्तस्य दर्पणानतिरिक्तत्वेन यथा न दीर्घत्वम्, एवमेवात्र चिति भासमानालोकादीनामप्रकाशत्वादिकं विचारितं सद् न स्थिरं[2] भवतीत्यर्थः । अतः प्रतिबिम्बात्मकत्वाज्जगत आश्रयरूपेण चिदात्मना विना नास्तीत्यर्थः ॥ ८४ ॥ यदिति । यथा दर्पणेऽस्तीति भासमानानां प्रतिबिम्बानां दर्पण एव स्वरूपम्, एवं चिदात्मनि यदस्तीति भाति तत्सर्वं चितिरेव महेश्वरीति स्वस्मिन् प्रतिबिम्बात्मकवैचित्र्यभासने स्वैश्वर्यमेव निमित्तम्, न तु दर्पणस्येव [3]बिम्बमिति सूचितम् । अध्यायादौ यत्पृष्टं कथं

१. विचारो न स्थिरीभवेत्—क० ख० घ० ।
२. अस्थिरं—ग० ।   ३. प्रतिबिम्ब—क० ख० ।

यदस्तीति भाति तत्तु चितिरेव महेश्वरी ।
एवं जगच्चिदेकात्मरूपं ते सम्यगीरितम् ॥८५॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे जगत्तत्त्वनिरूपणे
एकादशोऽध्यायः ॥



चितेरन्यच्चेत्यं[1] नास्तीति, तदियता[2] ग्रन्थेनोपपाद्योपसंहरति—एवमिति ॥ ८५ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायाम्
एकादशोऽध्यायः ॥



१. चैत्यं—क० ख० । २. तदीयता—क० ख० ।

# अथ द्वादशोऽध्यायः

एवं दत्तात्रेयमुखाद् जगत्तत्त्वं निशम्य तु ।
पप्रच्छ भार्गवो भूयः संदेहकलिलान्तरः ॥१॥
भगवन् संश्रुतं प्रोक्तं भवता जागतं ननु ।
यथा ब्रवीषि भगवंस्तत्तथैव न चाऽन्यथा ॥२॥
तथापि कुत एतद्धि भाति सत्यात्मकं सदा ।
कुतो वाऽन्यैर्बुद्धिमद्भिः सत्यत्वेन विनिश्चितम् ॥३॥
त्वत्तः श्रुतं चापि भूयो भाति मे सत्यवत् कुतः ।
ब्रूह्येतत् कृपया नाथ यथा नश्येदयं भ्रमः ॥४॥
इत्यापृष्टो भार्गवेण दत्तात्रेयो महाशयः ।

अत्राऽध्याये चाधिपद्यैर्जगत्सत्यत्वभासनम् ।
दृढभावनयेत्युक्तं शैलाख्यानेन वै स्फुटम् ॥

एवं चितिरेवेति । सन्देहेन [1]कलिलं कलुषितमान्तरं मनो यस्य ॥ १ ॥ जागतम्, स्वरूपमिति शेषः । तथैव चितिमात्ररूपमेव ॥ २ ॥ तथापि असत्यमपि । कुतः कस्मात् कारणात् । सदा सत्यात्मकं भाति । रज्जुसर्पादेरसत्यस्य कदाचिदसत्यत्वेन भानं दृष्टम्, इदं हि जगत् कथं सदा सत्यात्मकं भातीति भावः । नन्वेतद् गगननैल्यतुल्यं मूढैरेव सत्यत्वेन विदितमिति चेदाह—कुतो वेति । अन्यैः परैर्द्वैतवादिभिः । बुद्धिमद्भिस्तर्कनिपुणैः ॥ ३ ॥ अथ च त्वत्तः गुरोराप्ततमाद् असत्यमिदमिति सोपपत्तिकं श्रुतमपि भूयः कुतो मे जगत् सत्यत्वेन भाति, एतद् ब्रूहि ॥४॥ महाशय इति । महान् अपरिच्छिन्नः चिदात्माकार

---

१. कलिकलु—क० ।

जगत्सत्यभ्रान्तिमूलं प्रवक्तुमुपचक्रमे ॥५॥
शृणु राम जगद्भ्रान्तेर्मूलमेतत् सनातनम् ।
वस्त्वविद्यापूर्वकं यद् [१]दृढभावनमेव तत् ॥६॥
पश्यात्मानमविज्ञाय स्वात्मबुद्धिं शरीरके ।
क्व मांसरुधिरास्थीनि क्व चिदात्मातिनिर्मलः ॥७॥
केवलं भावनादार्ढ्याच्चिदात्मा देहकोऽभवत् ।
ज्ञातेऽप्यात्मनि चिद्रूपे भूयो भ्रान्तिः शरीरके ॥८॥
एवमेव भावनया सत्यं भाति जगत् खलु ।
विपरीतं भावयन् वै दृढभ्रान्तिं निवर्तयेत् ॥९॥
यो यथा भावयेदेतज्जगत्तस्य तथा भवेत् ।

आशयश्चित्तं यस्य । जगत् सत्यमिति या भ्रान्तिः, तन्मूलं तन्निमित्तम् ॥५॥ एतद्वक्ष्यमाणम् । सनातनम् अनादि । तदेवाह—वस्त्विति । वस्तुनोऽविद्या अयथावद्ग्रहणम्, एतत्पूर्वकं यद्वस्तुनोऽन्यरूपेण दृढभावनम् । भावनाया[२] दृढत्वं श्रद्धावत्त्वम् । तत् प्रोक्तभ्रमनिमित्तम् ॥ ६ ॥ [३]अत्रोदाहरणमाह—पश्येति । आत्मानमपरिच्छिन्नचिद्रूपमविज्ञाय अयथावत् परिच्छिन्नत्वेन विज्ञाय । शरीरमात्मेति दृढभावनादिति शेषः । स्वात्मबुद्धिमिति । शरीरमात्मेति बुद्धिम् । शरीरं कुतो नात्मेति चेदाह—क्वेति । अतिनिर्मलः चिदेकरसः ॥७॥ आत्मत्वेन दृढभावनाद् [४]देहात्मत्वनिश्चयः । एवं भावनादेव आत्मा चिद्रूपो न देह इत्युपपत्त्युपलब्धिभ्यां ज्ञातेऽपि पुनर्भ्रान्तिः ॥ ८ ॥ एवमेवेति । अनात्मनि देहे भावनयात्मबुद्धिवदेवेत्यर्थः । दृढसत्यत्वभावनया असत्यमिति सम्यग् ज्ञातमपि जगत् सत्यमिति भाति । नन्वेवं सति जगति सत्यत्वबुद्धिरनिवार्यैवेति चेन्नेत्याह—विपरीतमिति । एतज्जगद् असत्यमिति

---

१. दृढा–घ०, द्धदा–क० । २. नायां–घ० ।
३. तत्रो–क० । ४. देहात्मनि–क० ।

योगिनां धारणाध्यानैः पश्य तद्रूपसङ्गतिम् ॥१०॥
अत्र ते वर्तयिष्यामि [1]पुरावृत्तं महाद्भुतम् ।
अस्ति वङ्गे सुन्दराख्यं पुरं परमपावनम् ॥११॥
तत्रासीन्नृपतिर्धीमान् सुषेण इति विश्रुतः ।
तस्य भ्राता महासेनो यवीयान् प्रियकृत् सदा ॥१२॥
शशास राज्यं नृपतिर्धर्मतः सर्वसम्मतः ।
कदाचिदश्वमेधैः सोऽयजद् देवं महेश्वरम् ॥१३॥
तत्र राजकुमारास्तु महाबलपराक्रमाः ।
महत्या सेनया यज्ञाऽश्वं सर्वे ह्यनुसंययुः ॥१४॥
अश्वस्य रोधकान् सर्वान् विजित्य बलिनो बलात् ।
ययुरैरावतीतीरमन्वश्वं नृपतेः सुताः ॥१५॥
ददृशुस्तत्र राजर्षिं तङ्गणाख्यं तपोनिधिम् ।
बलोद्धता अवज्ञाय तमसङ्गम्य ते ययुः ॥१६॥
तद्वीक्ष्य तङ्गणसुतः पित्रवज्ञां रुषान्वितः ।

सदा विपरीतं दृढं भावयन् सत्यत्वभ्रान्तिं निवर्तयेत् ॥ ९ ॥ कुत एवमिति चेदेवमेव भावनासामर्थ्यमित्याह—यो यथेति । क्वैतद् दृष्टमिति चेदाह—योगिनामिति । धारणा ध्यानं च भावनापरिपाकविशेषः । बहुवचनं धारणादेरवान्तरभेदाभिप्रायम् । तद्रूपसङ्गतिं जगतो भावनानुरूपताप्राप्तिम् ॥ १० ॥ अत्र जगतो भावनानुरूपताप्राप्तौ । वर्तयिष्यामि उपक्रमिष्यामि । परमपावनं तीर्थभूतम् ॥ ११ ॥ यवीयान् कनिष्ठः । [2]भ्रातुः प्रियकृत् ॥१२–१३॥ तत्र यज्ञे । अश्वचर्यायामश्वमनुगताः ॥ १४ ॥ रोधकान् शत्रून् । ऐरावती नदी । अन्वश्वम् अश्वपृष्ठतः ॥१५॥ तत्र ऐरावतीतीरे । अवज्ञाप्रकार[3] एव—असङ्गम्येति ।

१. पुनरावृत्तमद्भु—क० । २. भ्राता—क० ।
३. ज्ञाकार—क० ।

जग्राहाश्वं यज्ञियं तं राजपुत्रान् हि भर्त्सयन् ॥१७॥
अथ राजकुमारास्ते रुरुधुः सर्वतो हि तम् ।
तावत्तङ्कणपुत्रोऽपि गण्डशैलं पुरः स्थितम् ॥१८॥
विवेशाश्वं समादाय पश्यत्सु राजसूनुषु ।
साश्वं शिलाविलीनं तं दृष्ट्वा राजकुमारकाः ॥१९॥
विभिदुर्गण्डशैलं तं शस्त्रैरुच्चावचैः पृथक् ।
चूर्णिताद् गण्डशैलात् स महत्या सेनया वृतः ॥२०॥
निर्गत्य तङ्कणसुतो जिगाय युधि तान् क्षणात् ।
निहत्य सेनां सौषेणीं बद्ध्वा राजकुमारकान् ॥२१॥
प्रविवेश गण्डशैलं भूयस्तङ्कणसम्भवः ।
अथ सेनाभटाः शिष्टा गत्वा राज्ञे न्यवेदयन् ॥२२॥
साश्वराजकुमाराणां हरणं गण्डशैलके ।
सुषेणो विस्मितोऽत्यन्तमुवाचावरजं स्वकम् ॥२३॥
वत्साशु गच्छ तं देशं यत्रास्ते तङ्कणो मुनिः ।
तपस्विनोऽचिन्त्यवीर्या अजेया देवमानुषैः ॥२४॥
तं प्रसाद्य सुतानश्वं चासाद्यायाहि सत्वरम् ।
न कालोऽतिव्रजेदेष वसन्तो यज्ञसम्मतः ॥२५॥
अभिमानो न कर्तव्यस्तपस्विषु कदाचन ।
क्रुद्धास्तपस्विनो लोकान् भस्मीकुर्युः क्षणेन वै ॥२६॥
अतः प्रसादनपरो भूत्वा स्वार्थं प्रसाधय ।

प्रणामादिपूर्वकं समीपमगत्वेत्यर्थः । ते राजकुमाराः ॥ १६–१७ ॥ तं मुनिपुत्रम् ॥ १८ ॥ तं मुनिपुत्रम् ॥ १९ ॥ उच्चावचैरुत्तमैरधमैश्च । चूर्णितात् चूर्णितैकदेशात् ॥ २० ॥ तान् राजकुमारान् ॥ २१ ॥ सुन्दरपुरं गत्वा ॥ २२ ॥ तच्छ्रुत्वा विस्मितः ॥ २३ ॥ यतोऽजेयाः, अतः प्रसाद्य । अश्वमेधस्य कालः ॥२४–२६॥ स्वार्थम् अश्वादि-

इत्यादिष्टो महासेनस्तं देशं शीघ्रमाययौ ॥२७॥
अपश्यत्तङ्गणं तत्र समाहितमतिं दृढम् ।
काष्ठकुड्यात्मतां प्राप्तं शान्तेन्द्रियमनोधियम् ॥२८॥
निर्विकल्पदशाम्भोधिनिलीनस्वात्मभावनम् ।
प्रणम्य दण्डवद् भूयः कृताञ्जलिपुटस्तदा ॥२९॥
तुष्टाव विविधैः स्तोत्रैर्महासेनो मुनीश्वरम् ।
तथा तस्य संस्तुवतो ह्यत्यगाद्वै दिनत्रयम् ॥३०॥
अथाजगाम तत्पुत्रः सन्तुष्टः पितृसंस्तवात् ।
प्रोवाच तं महासेनं राजंस्तुष्टोऽस्मि संस्तवात् ॥३१॥
ब्रूहि किं तेऽभिलषितं साधयाम्यविलम्बितम् ।
अहं पुत्रोऽस्म्यस्य विभोस्तङ्गणस्य महामुनेः ॥३२॥
नैतस्य मे पितुः कालो भाषणे शृणु भूमिप ।
समाहितस्वान्त एष द्वादशाब्दादनन्तरम् ॥३३॥
समाधितः समुत्तिष्ठेत्तत्र पञ्चाब्दका गताः ।
सप्तावशेषा एवं हि समयोऽस्य पुरातनः ॥३४॥

मोचनम् । तं देशं तङ्गणेनास्थितम् ॥ २७ ॥ दृढं यथा तथा सम्यक् स्वात्मन्यप्रकम्पतया आहिता स्थापिता मतिर्येन । अत एव काष्ठेत्यादि[ना] देहचाञ्चल्याभावः, शान्तेत्यादिना बाह्यान्तःकरणयोश्चाञ्चल्याभाव उक्तो ज्ञेयः ॥ २८ ॥ निर्विकल्पदशा निर्गता विषयाकारैः परिच्छेदात्मिका विकल्पदशा यस्याश्चितेस्तस्या अपरिच्छिन्नत्वेनाम्भोधिरूपता, तत्र नितरां लीनं सूक्ष्मत्वेन स्थितमात्मनो भावनमहंत्वेन स्फुरणं यस्य । निर्विकल्पस्वरूपस्यापि व्युत्थानानुरोधेन सूक्ष्माहंविमर्शनाभ्युपगम इति ध्येयम् । एवंविधं तङ्गणं प्रणम्य ॥२९–३०॥ अथ चतुर्थे दिने ॥ ३१–३२ ॥ अनन्तरं समुत्तिष्ठेदित्यन्वयः ॥ ३३ ॥ समयः सङ्केतः, सङ्कल्प इति यावत् । अस्य मे पितुः ॥ ३४ ॥ तत् तस्मात् ।

तत्तेऽभिवाञ्छितं ब्रूहि यदस्मात्तत् करोम्यहम् ।
न मां बालं विजानीहि पितृतुल्यं तपस्विनम् ॥३५॥
नासाध्यं विद्यते लोके योगिनां हि तपस्विनाम् ।
श्रुत्वा मुनिकुमारोक्तं महासेनोऽतिबुद्धिमान् ॥३६॥
प्राह तं तङ्गणसुतं प्रणम्य च कृताञ्जलिः ।
मुनिपुत्र ! प्रियं मेऽद्य करोषि यदि सत्यतः ॥३७॥
त्वत्पितुस्तेऽद्य वाञ्छामि समाधेर्व्युत्थितस्य वै ।
सह सम्भाषणं किञ्चिदेतदत्यन्तवाञ्छितम् ॥३८॥
अनुकम्प्यो यद्यहं ते द्रुतमेतत् प्रसाधय ।
श्रुत्वैतद्वचनं राज्ञः प्राह तापसजः पुनः ॥३९॥
राजन्नसाध्यं ह्येतत्ते वाञ्छितं सर्वथा भवेत् ।
तथापि ते करोमीति प्रतिश्रुत्यान्यथा कथम् ॥४०॥
ब्रवीमि भूयस्तत् किञ्चित् प्रतीक्षस्वाभियाचितः ।
मुहूर्तमात्रं मे पश्य सामर्थ्यं योगसम्भवम् ॥४१॥
एष मेऽद्य गुरुः शान्तपदे परमपावने ।
संस्थितस्तं बाह्ययत्नैरपि को वै प्रबोधयेत् ॥४२॥
पश्याहं बोधयाम्येनं योगयुक्त्यैव सूक्ष्मया ।

**यदस्मात्तेऽभिवाञ्छितं तदहं करोमि । अत्र बालं मामसमर्थं न विजानीहि ॥ ३५ ॥** अतिबुद्धिमानिति । **बालानामनवस्थितत्वज्ञ इति भावः ॥ ३६–३७ ॥ पितुरित्यादि षष्ठ्यन्तं तृतीयया विपरिणेयम्, [1]सहयोगात् ॥ ३८–३९ ॥ कथं ब्रवीमीति सम्बन्धः ॥ ४०–४१ ॥ शान्तपदे निर्विकल्परूपे ॥ ४२ ॥ सर्वथाऽशक्यं चेत् त्वमेनं कथं बोधयिष्यसीति चेदाह**—सूक्ष्मयेति । **मादृशस्य[१] सूक्ष्मयोगयुक्तिविदो**

1. उत्तरार्धस्थितेन सहशब्देन योगादित्यर्थः ।

१. मादृशसूक्ष्ययोगं मुक्तिविदां–क० ख०, योगयुक्तिविदां–ग० ।

इत्युक्त्वाथ समाविश्य समाहृत्येन्द्रियाण्यलम् ॥४३॥
प्राणेऽपानं सुसंयोज्य मुख्यप्राणेन निर्गतः ।
देहं पितुः प्रविश्याशु प्रलीनं तस्य मानसम् ॥४४॥
बोधयामास चाकृष्य प्रबोध्याशु विनिर्गतः ।
देहं स्वमाविशद् यावत्तावत् स बुबुधे मुनिः ॥४५॥
अपश्यदग्रगं भूपं[1] स्तुवन्तं प्रणतं तदा ।
किमेतदिति सञ्चिन्त्य सर्वं योगदृशाऽविदत् ॥४६॥
प्रसन्नचित्त आमन्त्र्य पुत्रं प्राह सुशान्तधीः ।

नाशक्यमिति भावः। समाविश्य उपविश्य। अलमत्यन्तमिन्द्रियाणि समाहृत्य संरुद्ध्य ॥ ४३ ॥ प्राणो बहिर्निर्गच्छन्नान्तरो वायुः तस्मिन्। अपानं बाह्यमन्तर्गच्छन्तं वायुम्। सुसंयोज्य एकीकृत्य। अपानं निरुद्ध्य निःशेषेण प्राणवायुविरेचनानन्तरं [2]बाह्यकुम्भकं कृत्वेति भावः। मुख्यप्राणोऽहङ्कारात्मान्तःकरणम्। तेन रूपेण देहान्निर्गतः। तस्य पितुः। मरणे ह्यन्तःकरणं प्रलीनं संस्कारमयं[3] प्राणेन सह निर्गच्छति, [4]तदान्तःकरणस्य लीनत्वादेव स न किञ्चिज्जानाति। परकायप्रवेशे[5] तु नान्तःकरणस्य विलयः, किन्तु बाह्यकुम्भकाभ्यासपरिपाकेन स्वेच्छयैव प्राणमवष्टभ्यान्तःकरणं तेन सह स्वनिर्गमादिकं विदन्नेव निर्गच्छतीति ज्ञेयम् ॥ ४४ ॥ पितुरात्मनि प्रलीनं निरुद्धं मन आकृष्य बोधयामास । अन्तःकरणस्य तमोमयत्वसम्पत्तिर्लयः, रजोमयत्वसम्पत्तिः प्रबोधः, सत्त्वमयतासम्पत्तिर्निरोध इत्यन्तःकरणस्य सुषुप्तिजाग्रत्समाधिषु दशात्रयं ज्ञेयम्। यद्यप्यन्तःकरणस्यातीन्द्रियत्वेन तदाकर्षणमशक्यम्, तथापि योगिनामतीन्द्रियज्ञानं योगसामर्थ्यादिति ज्ञेयम्। पितृदेहाद्विनिर्गतः। सः तज्ज्ञः ॥ ४५ ॥ सर्वं पुत्रादि-

१. भूयः—क० । २. बाह्यं—घ० । ३. मयप्रा—क० ख० ।
४. तदन्तः—क० । ५. प्रवेशने—घ० ।

वत्स ! नैवं पुनः कार्यं क्रोधस्तु तपसो रिपुः ॥४७॥
राज्ञा हि रक्षिते लोके तपो निर्विघ्नमेधते ।
यज्ञविघ्नक्रिया दैत्यस्वभावो न मुनेः क्वचित् ॥४८॥
प्रयच्छाश्वं राजपुत्रानप्यस्मै सुमना द्रुतम् ।
शीघ्रं यात्वेष यज्ञस्य न कालातिक्रमो भवेत् ॥४९॥
इत्युक्तो गण्डशैलं स प्रविश्य क्षणमात्रतः ।
साश्वान् राजसुतांस्तस्मै ददौ प्रीत्या गतक्रुधः ॥५०॥
ततः साश्वान् भ्रातृपुत्रान् संप्रेष्य नगरं प्रति ।
महासेनस्तज्ज्ञणं तं प्रणम्यात्यन्तविस्मितः ॥५१॥
अपृच्छत् प्राञ्जलिर्भूत्वा प्रसाद्य मुनिपुङ्गवम् ।
भगवन् ज्ञातुमिच्छामि साश्वा मे भ्रातृनन्दनाः ॥५२॥
कथं गण्डशैलगर्भे संस्थितास्तत् समीरय ।
एवं राज्ञाऽनुयुक्तोऽथ तज्ज्ञणः प्राह भूपतिम् ॥५३॥
शृणु राजन् प्रवक्ष्यामि पुराऽहं पृथिवीपतिः ।
समुद्रवलयां पृथ्वीमन्वशासं चिरं खलु ॥५४॥
महादेवप्रसादेन ज्ञात्वा चितिमधीश्वरीम् ।
त्रिपुरां लोकसंस्थानं नीरसं विमृशंस्ततः[1] ॥५५॥

चेष्टितम् ॥ ४६ ॥ प्रसन्नचित्त इति । शान्तबुद्धित्वाद् राज्ञि पुत्रे वा न तस्य क्रोध इति भावः । एवं क्रोधेनाश्वहरणादिकम् ॥ ४७ ॥ राजाऽस्माकमुपकारी तस्यापकरणेनास्माकं कृतघ्नता स्यादित्याह—राज्ञेति । अनुपकारिणोऽपि यज्ञे विघ्नोऽयुक्त इत्याह—यज्ञेति ॥ ४८ ॥ सुमना इति । [2]रोषं त्यक्त्वेत्यर्थः । एष राजभ्राता ॥४९॥ सः मुनिपुत्रः । तस्मै महासेनाय ॥ ५०–५२ ॥ कथमिति । गण्डशैलस्य सघनत्वादित्यर्थः ॥ ५३–५४ ॥ आत्मरूपां चितिम् । लोकस्य दृश्यस्य संस्थानं

१. तथा–क० ख० । २. शेषं–क० ।

निर्विण्णो लोकयात्राया न्यस्य राज्यं सुतेष्वथ ।
प्राविशं वनमेतद् वै भार्या मामन्वगात् सती ॥५६॥
तस्याभितप्यतो मेऽद्य ययुरर्बुदवत्सराः ।
भार्यापि मत्सेवनेन परां सिद्धिमुपागता ॥५७॥
कदाचिदथ भाव्यर्थगौरवान्मे प्रिया सती ।
समाधावेव कामार्त्तमानसाऽभूत्ततस्तु सा ॥५८॥
मां दृष्ट्वा रतिमिच्छन्ती समाधिस्थं स्थिरान्तरम् ।
असहन्ती कामवेगं भावयामास मद्रतिम् ॥५९॥
गाढभावनया प्राप्य सम्भोगं तु मया सह ।
दधार गर्भं सुषुवे पुत्रमेनं पुरः स्थितम् ॥६०॥
पुत्रं न्यस्य मदुत्सङ्गे मां समाधेः प्रबोध्य च ।
देहं भूतेषु सात्कृत्य परव्योमात्मतां ययौ ॥६१॥
अथ दृष्ट्वोत्सङ्ग एनं ज्ञात्वा तस्या गतिं पराम् ।
दयाक्रान्तमना जातस्तेनायं वर्द्धितो मया ॥६२॥
श्रुत्वा कदाचिन्मत्तोऽयं राज्यशास्तिं पुरा कृताम् ।
राज्यशासनकामोऽभूत् प्रार्थयामास मामनु ॥६३॥

स्थितिम् । नीरसमिति । चितिप्रतिबिम्बत्वेन निस्तत्त्वभूतत्वात् ॥ ५५ ॥ निर्विण्णो जातालंबुद्धिः । लोकयात्राया व्यवहृतेः ॥ ५६ ॥ परां सिद्धिं मोक्षम् ॥ ५७ ॥ भाव्यर्थगौरवात् भवितव्यस्यानपोह्यत्वात्[1] । समाधावेव निरुद्धं मनः कामाकारेण प्रोद्बुद्धमिति भावः ॥ ५८ ॥ स्थिरान्तरं झटित्युद्बोधयितुमशक्यम् । मया कृतां रतिं भावयामास ॥ ५९–६० ॥ एवं कामविहता देहेऽपि जातनिर्वेदा देहं त्यक्तवतीत्याह—पुत्रमिति । सात्कृत्य संयोज्य । परव्योम परं ब्रह्म ॥ ६१ ॥ तस्याः पत्न्याः । अयं सुतः ॥ ६२ ॥ अयं पुत्रः । मया कृताम् ॥ ६३ ॥

१. स्याबोधत्वात्-क० ।

ततो मदुपदेशेन प्राप्य योगर्द्धिमुत्तमाम् ।
निर्माय भावनायोगाद् लोकमस्मिन् महाश्मनि ॥६४॥
समुद्रवलयां पृथ्वीं शास्ति नित्यं सुतस्त्वयम् ।
तल्लोकेऽश्वः सुता राज्ञो निरुद्धास्ते हि मोचिताः ॥६५॥
इत्येतत्ते समाख्यातं गण्डशैलेऽवरोधनम् ।
इति श्रुत्वा मुनिवचो भूयः पप्रच्छ भूपतिः ॥६६॥
श्रुतं त्वदुक्तमेतद्वै महाश्चर्यकरं परम् ।
तं लोकं द्रष्टुमिच्छामि कृपया मे प्रदर्शय ॥६७॥
इति सम्प्रार्थितो राज्ञा मुनिः पुत्रं समादिशत् ।
वत्सास्मै दर्शय स्वीयं लोकं सर्वं यथेप्सितम् ॥६८॥
इत्युक्त्वा तङ्गणो भूयः प्रविवेश समाहितिम् ।
अथ तं तङ्गणसुतः समासाद्य नृपं ययौ ॥६९॥
गण्डशैलं प्रति ततः प्राविशन्मुनिदारकः ।
प्रवेष्टुं नाशकद् भूप आह्वयन्तं मुनेः सुतम् ॥७०॥
सोऽपि गण्डशिलान्तःस्थो राजानं समुपाह्वयत् ।
अथ भूयो विनिष्क्रम्य प्राह भूपं मुनेः सुतः ॥७१॥
नृपैष लोकस्तेऽसाध्यः प्रवेष्टुं खल्वयोगिनः ।
अयोगाद् गण्डशैलोऽयं घनः सप्रतिघोऽभवत् ॥७२॥
नेतव्यस्त्वं[1] सर्वथैव पितुर्वचनगौरवात् ।

योगर्द्धिं योगैश्वर्यम् । अस्मिन् पुरःस्थिते ॥ ६४–६८ ॥ समाहितिं समाधिम् ॥ ६९ ॥ गण्डशैले प्राविशत् । आह्वयन्तं राजानं मुनिपुत्रस्याह्वानकर्तारमिति भावः ॥ ७० ॥ सोऽपि मुनिपुत्रोऽपि ॥ ७१ ॥ अयोगात् भावनायोगसिद्धिं विना । घनः निबिडः । सप्रतिघः प्रवेशप्रतिबन्धकः ॥ ७२ ॥ यस्मादवश्यं नेतव्यः, तत् तस्मात् । कोटरे

---

१. तेन व्यस्तं–क० ।

तदत्र देहं विन्यस्य कोटरे तृणसंवृते[1] ॥७३॥
मनोमात्रशरीरः सन् शैलं विश मया सह ।
इत्युक्तः प्राह नृपतिरशक्तो देहनिर्गमे । ॥७४॥
कथं मुने देहमिममुत्सृजामि समीरय ।
उत्सृजामि यदि बलान्नाशमेष्यामि सर्वथा ॥७५॥
एवं वदन्तं नृपतिं प्रहस्याह मुनेः सुतः ।
अहो योगानभिज्ञोऽसि चास्तु नेत्रे निमीलय ॥७६॥
इत्युक्त्वा मीलिताक्षं तं प्रविश्य निमिषार्धतः ।
आकृष्य तल्लिङ्गतनुं क्षिप्त्वा श्वभ्रे च तत्तनुम् ॥७७॥
योगसामर्थ्यतः शैले निविश्य नृपसंयुतः ।
सुषुप्तं देहवैकल्यात् स्वसङ्कल्पोत्थदेहके ॥७८॥
संयोज्य बोधयामास प्रबुद्धो नृपतिस्तदा ।
गृहीतं मुनिनाऽपश्यत् स्वं महागगने तदा ॥७९॥
ऊर्ध्वं विष्वक् च संपश्यन् नभो भीममनन्तकम् ।
भीतः प्राह मुनेः पुत्रं मुने मां न परित्यज ॥८०॥
परित्यक्तो विनश्यामि पतिष्येऽहं निराश्रये ।
इति भीतं नृपं दृष्ट्वा प्रहस्याह मुनेः सुतः ॥८१॥

भूबिले । शरीरोपघातककाकादिभ्यो रक्षणाय तृणसंवृत इति ॥ ७३ ॥ देहान्निर्गमे ॥ ७४ ॥ बलात् श्वासप्रतिरोध[2]जिह्वोत्पाटनादिना ॥ ७५-७६ ॥ तं राजदेहम् । तत्तनुं राज्ञः स्थूलतनुम् ॥ ७७ ॥ स्थूलदेहवैकल्यात् । स्थूले स्वसङ्कल्पोत्थान्यदेहके ॥ ७८ ॥ लिङ्गदेहं संयोज्य । ननु प्राग् राजपुत्रादयः कथं स्थूलदेहयुता नीता इति चेदुच्यते—ते हि सुषुप्ता एव शैललोके नीताः। जाग्रतः स्वाभाविकस्थूलदेहवतोऽयोगिनस्तल्लोकावलोकनमशक्यमित्येव तद्योगसामर्थ्यमिति पूर्वोत्तरग्रन्थार्थ-

---

१. संकुले—ग० । २. रोधक—क० ।

परित्यज भयं भूप नोत्सृजामि निशामय ।
एनं शैलान्तरस्थानं लोकं धैर्येण सर्वतः ॥८२॥
अथ धैर्यं समालम्ब्य नृपः समवलोकयत् ।
अधो दूरे सनक्षत्रमभ्रमन्धतमोवृतम् ॥८३॥
प्रविश्य तं देशमपि ततोऽधस्तात् [1]प्रपश्यत ।
चन्द्रमण्डलमास्फीतं तत्रागत्य जडीकृतः ॥८४॥
चन्द्रमण्डलशीतेन मुनिपुत्रेण रक्षितः ।
अथ प्राप्य सूर्यलोकं तत्करैरभितापितः ॥८५॥
मुनिपुत्रेण योगेन शिशिरीकृतदेहकः ।
अपश्यल्लोकमखिलं स्वर्लोकप्रतिबिम्बवत् ॥८६॥
अथ शृङ्गे हेमगिरेर्मुनिना सह संस्थितः ।
मुनिप्रदर्शितं सर्वमपश्यत् पृथिवीपतिः ॥८७॥
[1]दूरान्तरावलोकाय मुनिदत्तशुभेक्षणः ।
अपश्यद्वलयात्मानं लोकालोकाख्यपर्वतम् ॥८८॥
तद्बहिर्ध्वान्तसन्दोहमन्तः सौवर्णमेदिनीम् ।

सिद्धोऽभिप्रायो ज्ञेयः ॥ ७९ ॥ विष्वक् परितः ॥ ८०–८१ ॥ निशामय पश्य । लोकं प्राणिसमुदायम् ॥ ८२ ॥ अथ मुनिवाक्यश्रवणानन्तरम् । अभ्रमाकाशम् । अन्धतमोवृतमिति । नक्षत्रलोकोपर्यन्धकारस्य सर्वबाह्यस्य विद्यमानत्वादिति भावः ॥ ८३ ॥ तं देशं नक्षत्रदेशम् । [2]तत्र चन्द्रमण्डलसमीपे आगत्य राजा शीतेन जडीकृतोऽभवत् ॥८४–८५॥ प्रतिबिम्बवत् स्थितम् ॥८६–८७॥ [3]दूरसान्तरयोर्देशयोरवलोकनाय शुभेक्षणोऽप्रतिहतनेत्रः[4] ॥८८॥ तद्बहिः लोका-

1. अडभावः पदव्यत्ययश्चार्षः ।

१. देशा–क० । २. 'तत्र''''भवत्' नास्ति–क० ।

३. दूरतरयोः–ख० । ४. हृतनेत्रः–क० ।

समुद्रान् सप्तद्वीपांश्च नदीगिरिसमाकुलान् ॥८९॥
भुवनान्यपि सर्वाणि चेन्द्राद्यान् विबुधोत्तमान् ।
दैत्यान् मनुष्यान् रक्षांसि यक्षकिंपुरुषादिकान् ॥९०॥
तत्रापश्यत् सत्यलोके वैकुण्ठे राजते नगे ।
मुनिपुत्रं स्वमात्मानं [1]ब्रह्मविष्णुशिवात्मना ॥९१॥
विभज्य संस्थितं सर्वलोकसृष्ट्यादिहेतवे ।
अथाऽपश्यद् भूविभागे कृत्वा रूपान्तरं तथा ॥९२॥
प्रशासनपरो भूमेः सार्वभौमत्वमास्थितः ।
एवं मुनिकुमारस्य दृष्ट्वा योगर्द्धिमुत्तमाम् ॥९३॥
विस्मितोऽभून्महासेनस्ततः प्राह मुनेः सुतः ।
राजन्नेतल्लोकजातं पश्यतः काल अत्यगात् ॥९४॥
अर्बुदानां द्वादशकमितोऽप्यत्र दिनात्मकः ।
गच्छावो बाह्यलोकं तं यत्रास्ते जनको मम ॥९५॥
इत्युक्त्वा भूभृता तेन सह भूयः खमाप्लुतः[2] ।
पूर्ववत् तद्गण्डशैलान्निर्गत्याभ्याययौ बहिः ॥९६॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे गण्डशैललोकावलोकने द्वादशोऽध्यायः ॥



लोकबहिः । अन्तः लोकालोकान्तः ॥८६-६१॥ भूविभागे भूलोके ॥६२॥ योगर्द्धिं योगैश्वर्यम् ॥६३॥ ततः स्वर्लोकप्रदर्शनानन्तरम् ॥६४॥ बहिर्लोके द्वादशार्बुदवर्षमितोऽप्यत्र लोके एकदिनात्मकः ॥६५॥ भूभृता राज्ञा ॥६६॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां द्वादशोऽध्यायः ॥



१. विधि-ख० ग० घ० । २. समागतः—क० ।

# अथ त्रयोदशोऽध्यायः

मुनिपुत्रः पुनः शैलाद् महासेनं[1] विनिर्गमे[2] ।
विधाय मूर्च्छितं लिङ्गदेहं संस्कारमात्रकम् ॥ १ ॥
समादाय विनिर्गत्य प्राक्षिपत्तच्छरीरके ।
उत्थापयामास तु तं जीर्णदेहसुसङ्गतम् ॥ २ ॥
अथोत्थितो महासेनो बाह्यलोकं समीक्ष्य तु ।
भुवं जनांस्तरून् स्रोतोह्रदादींश्चापि नूतनान् ॥ ३ ॥
बभूव विस्मितोऽत्यन्तं पप्रच्छ मुनिनन्दनम् ।
कतमो वै महाभाग ! लोकोऽयं मे प्रदर्शितः ॥ ४ ॥
पुरादृष्टादपूर्वोऽयं समाचक्ष्वैतदद्भुतम् ।
इत्यापृष्टो मुनिसुतो महासेनमुवाच ह ॥ ५ ॥
शृणु राजन्नयं लोकः पूर्वं योऽस्माभिरास्थितः ।
स एव चिरकालेन परिणामान्तरं गतः ॥ ६ ॥
शैललोकगतानां नो दिनमेकं यदत्यगात् ।
तावतैवात्र कालेन द्वादशार्बुदवत्सराः ॥ ७ ॥

अत्राऽध्याये योधपद्यैः स्वप्नजागरयोः समा ।
स्थितिर्दृश्यं भावनैकसिद्धं चेति निरूप्यते ॥

स्थूलेन्द्रियाद्यभावात् सुषुप्ताविव संस्कारमात्रकम् ॥ १ ॥ शैलाद् विनिर्गत्य । तच्छरीरके प्राक् तृणकोटरन्यस्ते । तं राजानम् ॥२॥ नूतनान् परिणामान्तरं गतान् ॥ ३ ॥ [1]शैलान्तरेवेदं लोकान्तरमिति मत्वा पृच्छति—कतम इति । महान् भागो भाग्यं योगसम्पद्यस्य ॥४–६॥

1. शैलान्तः-शैलमध्ये एवेदं लोकान्तरम् ।
१. सेने–क० । २. गते–क० ।

अतिक्रान्ता अतो लोकस्त्वयं रूपान्तरं गतः ।
भिन्नां व्यवहृतिं पश्य भाषां चापि समन्ततः ॥ ८ ॥
एवमेव जनानां तु कालेन भिद्यते स्थितिः ।
एवं मया तु बहुधा दृष्टा भिन्ना जगत्स्थितिः ॥ ९ ॥
पश्यैष मे स[1] भगवान् समाहितमतिः पिता ।
सोऽयं देशो यत्र पूर्वं त्वया मे संस्तुतः पिता ॥१०॥
एनं पश्य महाशैलं यत्र मे लोक ईक्षितः ।
त्वद्भ्रातुर्वंशपुरुषा अतिक्रान्ताः सहस्रशः ॥११॥
यत्ते पुरं वङ्गदेशे सुन्दराख्यं स्थितं पुरा ।
तत्राभूत् सम्प्रति वनं व्याप्तं श्वापदमण्डलैः ॥१२॥
त्वद्भ्रातृवंशजः[2] सद्यो वीरबाहुरिति श्रुतः ।
मालवेशो विशालाख्ये क्षिप्रातीरे पुरेऽस्ति हि ॥१३॥
त्वद्वंश्योऽपि सुशर्माख्यो द्राविडेष्वभवन्नृपः ।
वर्धने नाम नगरे ताम्रपर्णीसरित्तटे ॥१४॥
लोकस्थितिरियं चेत्थं सर्वदा परिवर्तते ।
अल्पकालेनैवमेतदभवद् नूतनं जगत् ॥१५॥
इतोऽपि चिरकालेन नगा नद्यो ह्रदा भुवः ।
अन्यथाभावमायान्ति एवमेव जगद्गतिः ॥१६॥
गिरयो निम्नतां यान्ति निम्नदेशा महोच्चताम् ।

कुतः परिणामान्तरं गत इति चेदाह—शैलेति ॥ ७ ॥ अतः बहुकालात्ययात् ॥ ८–११ ॥ तत्र तत्प्रदेशे ॥ १२–१४ ॥ परिवर्तते परिणामान्तरं प्राप्नोति ॥ १५ ॥ इतोऽपि द्वादशार्बुदसंख्यातकालादपि । नगाः पर्वताः ॥१६॥ एतदेवाह—गिरय इति । गिरयोऽत्युच्चपर्वताः । अनूपाः

१. पश्यैवमेष–क० ख० । २. भ्रातुर्वंशजः–क० ।

मरुदेशास्त्वनूपाः स्युः पर्वता वालुकामयाः ॥१७॥
कठिना भूः शिलाप्राया भवेदत्यन्तकोमला ।
कोमला भूरपि भवेत् पाषाणसदृशी क्वचित् ॥१८॥
ऊषरा भूरुर्वरा स्यादुर्वरोषररूपिणी ।
रत्नानि [1]शर्कराः स्युर्वै रत्नात्मानस्तु शर्कराः ॥१९॥
क्षारं जलं स्वादुरसं मधुरं क्षारतां गतम् ।
कदाचिन्नरबाहुल्यं कदाचित् पशुसञ्चयम् ॥२०॥
कदाचित् कृमिकीटादिप्रचुरं जगदीक्षितम् ।
एवमेतज्जगत् कालभेदात् परिणतं पृथक् ॥२१॥
तस्मादयं पुरास्माकं लोक एवेदृशः स्थितः ।
इत्याकर्ण्य मुनिसुतवाक्यं स च महीपतिः ॥२२॥
महासेनोऽत्यन्तशोकाविष्टो मूर्च्छामुपागतः ।
मुनिपुत्रसमाश्वस्तः प्रज्ञामासाद्य भूपतिः ॥२३॥
अत्यन्तशोकसंविष्टो विललाप सुदीनवत् ।
भ्रातरं भ्रातृपुत्रांश्च दारान् स्वात्मन एव च ॥२४॥
पुत्रादींश्च पृथक् स्मृत्वा विललापातिदुःखितः ।
अथ तं मोहतो भ्रातृमुखान् शोचन्तमञ्जसा ॥२५॥
मुनिपुत्रो वचः प्राह बुबोधयिषया नृपम् ।
राजंस्त्वं बुद्धिमान्नूनं [2]कं किमर्थं हि शोचसि ॥२६॥

उदकप्रचुराः ॥ १७-१८ ॥ उर्वरा सस्यवती ॥ १९-२० ॥ परिणतं भवतीति शेषः ॥ २१ ॥ तस्मात् परिणामान्तरप्राप्तेः । ईदृशः अपूर्ववत् ॥ २२-२३ ॥ स्वात्मनोऽपि पुत्रादीनिति सम्बन्धः ॥ २४ ॥ तं राजानम् ॥ २५ ॥ बुबोधयिषया बोधयितुमिच्छया ॥ २६ ॥ शोचितस्य फलं

---

१. कर्कराः—क० । २. तत्कि—क० ।

बुद्धिमन्तो हि विफलं जातु कुर्वन्ति कर्म नो ।
अविमृश्य फलं यस्तु कर्म कुर्यात् स बालिशः ॥२७॥
तत्त्वं शोचसि कं ब्रूहि किमर्थं वा हि शोचनम् ।
इत्युक्तः प्राह तं भूपो[1] महासेनोऽतिदुःखितः ॥२८॥
किं न पश्यसि शोकस्य स्थानं मम महामुने !
सर्वं यस्य [2]हतं तस्य कारणं पृच्छसीह किम् ॥२९॥
एकस्मिन्नपि शोकः स्याद्धते लोकस्य सर्वथा ।
कुतस्त्वं पृच्छसि पुनः सर्वनाशे ह्युपस्थिते ॥३०॥
इत्युक्तो मुनिपुत्रोऽपि भूयः प्राह हसन्निव ।
राजन् ब्रूहि किमेतत्ते कुलधर्मः सनातनः ॥३१॥
यच्छोचनमकृत्वा तु प्रत्यवायो महान् भवेत् ।
अथवा शोचिते नष्टं प्राप्यते भूय एव तत् ॥३२॥
राजन् विमृश धैर्येण शोचिते किं फलं भवेत् ।
नष्टेषु बन्धुषु यदि शोचितव्यं तदा शृणु ॥३३॥
अतीता बन्धवो नष्टाः पितामहमुखाः खलु ।

कुतः पृच्छसीति चेदाह—बुद्धिमन्त इति । फलं किञ्चित् स्यादेवेति चेदाह—अविमृश्येति ॥ २७ ॥ तत् तस्मात् ॥ २८-२९ ॥ शोकस्य कारणं कुतः पृच्छसि मम सर्वनाशप्राप्तौ ॥ ३० ॥ एतत् स्वजने नष्टे शोचितव्यमिति । सनातनः परम्परागतः ॥३१॥ यस्मात् कुलधर्माकरणे प्रत्यवायो भवेदतः शोचसि किम् ? तत् नष्टम् ॥ ३२ ॥ नष्टं न प्राप्यते, किन्तु शिष्टाचारत्वाच्छोचितस्य सफलत्वमिति चेदाह—विमृशेति । लोके शोचद्भिः किं फलं प्राप्तं यद् मम भवेदिति विमृशेत्यर्थः । फलं नास्ति, अपि तु कुलधर्म एवेति चेदाह—शृण्विति ॥ ३३ ॥ सर्वदेति ।

१. भूयो–ख० घ० । २. हृतं–क० ।

तत् सर्वदा शोचितव्यं कुतः [1]पूर्वं न शोचितम् ॥३४॥
अथ ते बन्धवः कस्य बन्धुत्वं वा कुतस्तव ।
मातापित्रोः स्वस्य वापि पुरीषक्रमयो हि ये ॥३५॥
असंख्याताः स्वदेहोत्था देहसम्बन्धिनोऽपि च ।
न ते स्युर्बन्धवः कस्मात् कुतो वा ते न शोचिताः ॥३६॥
राजन् विमृश कस्त्वं वै कान् विनष्टान् प्रशोचसि ।
देहस्त्वं देहभिन्नो वा देहः संघातरूपकः ॥३७॥
संघातस्यैकदेशस्य वा नाशान्नाश उच्यते ।
प्रतिक्षणं त्वेकदेशनाशो देहस्य भावितः ॥३८॥
मूत्रोच्चारश्लेष्मनखकेशादेः सन्ततं व्ययः ।
सर्वात्मना तु संघातनाशो नहि विभाव्यते ॥३९॥
भ्रात्रादेस्तव देहांशः स्यात् पृथिव्यादिषु स्फुटम् ।

अनन्तानां बन्धूनां मृतत्वेन तच्छोचनसम्मितं तवायुरेव न भवेदिति तात्पर्यम् ॥ ३४ ॥ ते भ्रात्रादयः । तद्बन्धुत्वं तव कुतो हेतोः । एकगर्भवासादिना भ्रात्रादिबन्धुत्वं ममेति चेदाह—मातेति ॥ ३५–३६ ॥ देह एवाहमिति चेदाह—देहः संघातरूपक इति ॥ ३७ ॥ संघातरूपदेह एवाहं नष्टान् देहात्मकान् बन्धूनेव शोचामीति चेदाह—संघातस्येति । किं बन्धुनाशः समग्रसंघातनाशे वा, उत तदेकदेशनाशे वा त्वयोच्यत इति विकल्प्य द्वितीये[2] दूषणमाह—प्रतिक्षणमिति ॥ ३८ ॥ कुतः प्रतिक्षणं नाश इति चेदाह—मूत्रेति । उच्चारो विट् । यतः सन्ततं क्षयो दृश्यते, अतः प्रतिक्षणं नाशः सिद्धः । प्रथमपक्षं दूषयति—सर्वेति । संघातस्य सर्वात्मना समग्ररूपेण । ३९ ॥ कुत इति चेदाह—भ्रात्रादेरिति । पृथिव्यादिरूपदेहांशः स्यादेवेति स्फुटं सर्वानुभवसिद्धम् ।

---

१. सर्वे–क० । २. द्वितो–क० ।

बुद्धिमन्तो हि विफलं जातु कुर्वन्ति कर्म नो ।
अविमृश्य फलं यस्तु कर्म कुर्यात् स बालिशः ॥२७॥
तत्त्वं शोचसि कं ब्रूहि किमर्थं वा हि शोचनम् ।
इत्युक्तः प्राह तं भूपो[1] महासेनोऽतिदुःखितः ॥२८॥
किं न पश्यसि शोकस्य स्थानं मम महामुने !
सर्वं यस्य [2]हतं तस्य कारणं पृच्छसीह किम् ॥२९॥
एकस्मिन्नपि शोकः स्याद्धते लोकस्य सर्वथा ।
कुतस्त्वं पृच्छसि पुनः सर्वनाशे ह्युपस्थिते ॥३०॥
इत्युक्तो मुनिपुत्रोऽपि भूयः प्राह हसन्निव ।
राजन् ब्रूहि किमेतत्ते कुलधर्मः सनातनः ॥३१॥
यच्छोचनमकृत्वा तु प्रत्यवायो महान् भवेत् ।
अथवा शोचिते नष्टं प्राप्यते भूय एव तत् ॥३२॥
राजन् विमृश धैर्येण शोचिते किं फलं भवेत् ।
नष्टेषु बन्धुषु यदि शोचितव्यं तदा शृणु ॥३३॥
अतीता बन्धवो नष्टाः पितामहमुखाः खलु ।

कुतः पृच्छसीति चेदाह—बुद्धिमन्त इति । फलं किञ्चित् स्यादेवेति चेदाह—अविमृश्येति ॥ २७ ॥ तत् तस्मात् ॥ २८-२९ ॥ शोकस्य कारणं कुतः पृच्छसि मम सर्वनाशप्राप्तौ ॥ ३० ॥ एतत् स्वजने नष्टे शोचितव्यमिति । सनातनः परम्परागतः ॥३१॥ यस्मात् कुलधर्माकरणे प्रत्यवायो भवेदतः शोचसि किम् ? तत् नष्टम् ॥ ३२ ॥ नष्टं न प्राप्यते, किन्तु शिष्टाचारत्वाच्छोचितस्य सफलत्वमिति चेदाह—विमृशेति । लोके शोचद्भिः किं फलं प्राप्तं यद् मम भवेदिति विमृशेत्यर्थः । फलं नास्ति, अपि तु कुलधर्म एवेति चेदाह—शृण्विति ॥ ३३ ॥ सर्वदेति ।

---

१. भूयो—ख० घ० । २. हृतं—क० ।

तत् सर्वदा शोचितव्यं कुतः [1]पूर्वं न शोचितम् ॥३४॥
अथ ते बन्धवः कस्य बन्धुत्वं वा कुतस्तव ।
मातापित्रोः स्वस्य वापि पुरीषकृमयो हि ये ॥३५॥
असंख्याताः स्वदेहोत्था देहसम्बन्धिनोऽपि च ।
न ते स्युर्बन्धवः कस्मात् कुतो वा ते न शोचिताः ॥३६॥
राजन् विमृश कस्त्वं वै कान् विनष्टान् प्रशोचसि ।
देहस्त्वं देहभिन्नो वा देहः संघातरूपकः ॥३७॥
संघातस्यैकदेशस्य वा नाशान्नाश उच्यते ।
प्रतिक्षणं त्वेकदेशनाशो देहस्य भावितः ॥३८॥
मूत्रोच्चारश्लेष्मनखकेशादेः सन्ततं क्षयः ।
सर्वात्मना तु संघातनाशो नहि विभाव्यते ॥३९॥
भ्रात्रादेस्तव देहांशः स्यात् पृथिव्यादिषु स्फुटम् ।

अनन्तानां बन्धूनां मृतत्वेन तच्छोचनसम्मितं तवायुरेव न भवेदिति तात्पर्यम् ॥ ३४ ॥ ते भ्रात्रादयः । तद्बन्धुत्वं तव कुतो हेतोः । एकगर्भवासादिना भ्रात्रादिबन्धुत्वं ममेति चेदाह—मातेति ॥ ३५–३६ ॥ देह एवाहमिति चेदाह—देहः संघातरूपक इति ॥ ३७ ॥ संघातरूपदेह एवाहं नष्टान् देहात्मकान् बन्धूनेव शोचामीति चेदाह—संघातस्येति । किं बन्धुनाशः समग्रसंघातनाशे वा, उत तदेकदेशनाशे वा त्वयोच्यत इति विकल्प्य द्वितीये[2] दूषणमाह—प्रतिक्षणमिति ॥ ३८ ॥ कुतः प्रतिक्षणं नाश इति चेदाह—मूत्रेति । उच्चारो विट् । यतः सन्ततं क्षयो दृश्यते, अतः प्रतिक्षणं नाशः सिद्धः । प्रथमपक्षं दूषयति—सर्वेति । संघातस्य सर्वात्मना समग्ररूपेण । ३९ ॥ कुत इति चेदाह—भ्रात्रादेरिति । पृथिव्यादिरूपदेहांशः स्यादेवेति स्फुटं सर्वानुभवसिद्धम् ।

---

१. सर्वे–क०। २. द्वितो–क०।

अन्ततो देहगगनमविनाश्यस्ति केवलम् ॥४०॥
न त्वं देहः किन्तु देही मद्देह इति भाषसे ।
यथा मद्वस्त्रमित्येवं स देहस्त्वं कथं वद ॥४१॥
यदि त्वं देहभिन्नोऽसि सम्बन्धः कोऽन्यदेहकेः ।
यथा भ्रात्रादिवासोभिर्नास्ति सम्बन्धलेशकः ॥४२॥
अविशेषात्तच्छरीरैर्विनष्टैस्ते[1] कथं शुचा ।
मच्छरीरं मदक्षाणि मत्प्राणो मन्मनस्त्विवति ॥४३॥
वदन् भवान् किंस्वरूपो वद मे पृच्छते नृप ।
एवमुक्तो महासेनो मुहूर्तं सुविचार्य तु ॥४४॥

देहपृथिव्याद्यंशो नष्ट एव स्यादिति चेदाह—अन्तत इति । देहांशपृथिव्यादिनाशाङ्गीकारेऽप्यन्ततः पर्यवसानेऽविनाशिनो गगनस्य केवलस्य शुद्धस्य नाशो दुरुपपाद इत्यर्थः ॥ ४० ॥ अथ च तव महानयं व्यामोह इत्याह—न त्वमिति । देहसम्बन्धी देहादन्य एवेत्यर्थः । कुत इति चेदाह—मद्देह इति । यतो मद्देह इति भाषसे । ननु मद्देह इति भाषणेन किं जातमिति चेदाह—यथेति । मद्वस्त्रमित्यादि मत्प्रत्ययविषयवस्त्राद्यं यथा त्वं न भवसि, [2]तथा [3]मत्प्रत्ययविषयदेहोऽपि त्वं न । एवं सति कथं स देहस्त्वमित्यर्थः ॥ ४१ ॥ इति श्रुत्वा सत्यमहं देहभिन्नोऽस्मीति वदन्तं प्रत्याह—यदीति । देहभिन्नस्यापि मे भ्रात्रादिदेहैः कुतो न सम्बन्ध इति चेदाह—यथेति । यथा भ्रात्रादिवासोभिस्तव सम्बन्धो नास्ति ॥ ४२ ॥ अविशेषादिति । शरीरवस्त्रयोर्ममत्वस्य तुल्यत्वाद् भ्रात्रादिवस्त्रनाशे शोकाभावाद् वस्त्रतुल्यदेहनाशे कथं शुचा शोक इत्यर्थः । अथ च मच्छरीरमित्यादि वदतः शरीरादिभिन्नस्य ते किं रूपमिति पृच्छति—मच्छरीरमिति । अक्षाणि इन्द्रियाणि ॥४३॥ एवं

१. ष्टैस्तः—क० । २. 'तथा' नास्ति—क० ।
३. तत्प्रत्यय—क० ।

[1]अप्राप्यान्तं मुनेः प्रश्ने प्राह दीनतरस्ततः ।
न जाने भगवन् कोऽहमिति सर्वात्मनाप्यहम् ॥४५॥
स्वभावतस्तु शोचामि कारणं तत्र नाविदम् ।
प्रपन्नस्त्वामहं दीनः किमिदं भगवन् वद ॥४६॥
सर्वे शोचन्ति यत् कस्मिन्नपि बन्धौ मृते सति ।
न स्वात्मानं विजानन्ति नान्यं शोचन्ति चैव हि ॥४७॥
एतन्मे ब्रूहि भगवन् शिष्याय तव वै स्फुटम् ।
इति पृष्टो मुनिसुतो महासेनमथाब्रवीत् ॥४८॥
राजन् शृणु महादेव्या मायया मोहिता जनाः ।
स्वात्मानमविदित्वैव व्यर्थं शोचन्ति सर्वदा ॥४९॥

कस्त्वमित्यादि ॥४४॥ अन्तं निश्चयम् । दीनतर इति । बन्धुनाशेन दीनः स्वात्मानमविदन्नात्मनाशमपि प्राप्त इव दीनतर इत्यर्थः । ततः प्राहेत्यन्वयः । सर्वात्मना विचारपरोऽप्यहं न जाने ॥४५॥ शोचनेऽपि निमित्तमविदन्नाह—स्वभावत इति । यथा क्षुधातृषादिकमदृष्टहेतुकमेवं मम शोकोऽपीति भावः । हतबन्धुः प्रायो हतात्माहं दीनस्त्वां प्रपन्नः । अतः किमिदं शोकादिकं सकारणमुत निष्कारणं वेति वद ॥४६॥ किमिदमिति सामान्यतः पृष्टमेव विवृणोति—सर्व इति । कस्मिन्नपि बन्धौ मृते सति सर्वे शोचन्तीति यत् तत्कुत इति शेषः ॥४७॥ एतत् मृतबन्धुशोचनादिनिमित्तम् । तव शिष्याय मे । अथ प्रश्नानन्तरम् ॥ ४८ ॥ त्रिपुरामायया मोहितत्वेनात्मानमविदित्वा शोचन्तीत्याह—राजन्निति । तथा च शोके आत्माज्ञानं हेतुः, आत्माज्ञाने च चिदात्मन ईश्वरस्य मायाख्यं स्वातन्त्र्यमेव हेतुरित्युक्तं भवति । औपनिषदमतेऽपि मूलाज्ञानं भगवच्छक्तिर्माया, तदंशत्वात्तद्धेतुकत्वं जीवावरकतूलाज्ञानस्येति ज्ञेयम् ॥ ४९ ॥ एवमज्ञानस्याखिलानर्थहेतुत्वमुक्त्वा तन्निवर्तक-

१. अप्राप्य तं—क० ।

यावन्न विदितं स्वात्मसत्तत्त्वं[1] तावदेव वै ।
जनाः शोचन्ति विज्ञाय भूयः शोचन्ति न क्वचित् ॥५०॥
यथा निद्रामोहितात्मा स्वमविज्ञाय शोचति ।
ऐन्द्रजालिकमन्त्रोत्थमायया मोहितो नरः ॥५१॥
तत्प्रकल्पितसर्पादिभीत्या यद्वद्धि शोचति ।
तथैव मायया मुग्धः स्वमज्ञात्वा प्रशोचति ॥५२॥
यथा स्वप्नात् प्रबुद्धो वा ज्ञातैन्द्रजालिकागमः ।
न शोचति क्वचिच्चान्यान् शुचायुक्तान् हसत्यपि ॥५३॥
एवं स्वात्मविदो मायामुक्ताः शोचन्ति न क्वचित् ।
शोचतस्त्वादृशान् मायामूढान् प्रविहसन्ति च ॥५४॥
तत् त्वं विज्ञायात्मतत्त्वं मायामुत्तीर्य दुर्गमाम् ।
जहि शोकं महाबाहो मोहोत्थं सद्विमर्शनात् ॥५५॥

मात्मविज्ञानमेवेत्याह—यावदिति । [illegible] त्त्वं स्वरूपम् । भूयः पुनः । विज्ञानानन्तरं पूर्ववन्न शोचन्तीति भावः ॥ ५० ॥ अत्र दृष्टान्तमाह—यथेति । स्वमात्मानं पर्यङ्के सुप्तमविज्ञाय स्वप्ने क्वचिन्मार्गे स्वाप्नचोराद्यैर्हृतसर्वस्वः शोचति, एवमैन्द्रजालिकमायया मोहितो मोहितमात्मानमज्ञात्वा तन्निर्मितसर्पादेर्भीत्या शोचतीत्यन्वयः ॥ ५१ ॥ मुग्धो मूढः । स्वमात्मानम् ॥ ५२ ॥ ज्ञानिनः शोको नास्तीत्यत्र दृष्टान्तमाह—यथेति । यथा स्वप्नात् प्रबुद्धः सन् पर्यङ्कस्थमात्मानं विदन् चोराद्यैः सर्वस्वहरणं वितथं मत्वा शोकमवधूय भूयस्तन्निमित्तं न शोचति, अन्यान् तथा शोचतो हसत्यपि । ऐन्द्रजालिकस्यागमो मन्त्रः, स मोहको ममेति ज्ञातो येन ॥ ५३ ॥ दार्ष्टान्तिके योजयति—एवमिति ॥ ५४ ॥ तत् तस्मात् । शोकस्याज्ञानमूलत्वादित्यर्थः । त्वमात्मतत्त्वं विज्ञाय, मायामज्ञानरूपेण परिणतां दुर्गमामतिक्रम्य

१. सतत्त्वं–क० ।

इत्युक्तः पुनरप्याह महासेनो मुनीश्वरम् ।
भगवन् यस्त्वया प्रोक्तो दृष्टान्तो विषमः स हि ॥५६॥
स्वाप्नो वा मायिको वापि शून्यात्मा भासते परम् ।
अयं जाग्रत्प्रपञ्चस्तु सत्यः सर्वार्थसाधकः ॥५७॥
अबाधितः स्थिरश्चापि कथं स्वाप्नसमो भवेत् ।
इत्युक्तः पुनराचख्यौ मुनिपुत्रोऽतिबुद्धिमान् ॥५८॥
शृणु राजन् यत्त्वयोक्तं दृष्टान्तो विषमस्त्विति ।
एष मोहो द्वितीयस्ते स्वप्ने स्वाप्नस्य यादृशः ॥५९॥
स्वाप्नवृक्षोऽपि तत्काले किं न साधयते हितम्[1] ।

गन्तुमन्यैरशक्याम् उत्तीर्य मायावरणान्निर्गत्य, सत आत्मतत्त्वस्य विमर्शनाद् भूयोऽनुसन्धानाद् जहि ॥ ५५ ॥ दृष्टान्तः स्वप्नेन्द्रजालादिरूपः ॥ ५६ ॥ वैषम्यमेवोपपादयति—स्वाप्न इति । मायिकः ऐन्द्रजालिकोद्भावितः चोरसर्पादिः । शून्यात्मा असद्रूपः । परं केवलं [2]भासत एव, तद्भासनं वस्त्वविषयमिति तात्पर्यम् । अयमिति । सर्वानुभवसिद्ध इत्यर्थः । सर्वार्थसाधकत्वेन सर्वानुभवसिद्धत्वात् सत्य इत्यर्थः ॥ ५७ ॥ अबाधित इति । सर्वार्थसाधकत्वेनाबाधितत्वेन स्थिरत्वेन च सर्वानुभवसिद्धत्वाज्जाग्रत्प्रपञ्चः सत्यः, एतद्विपरीतत्वात् स्वाप्नादिप्रपञ्चोऽसत्य इति भावः ॥ ५८ ॥ एष इति । दृष्टान्तो विषम इति निश्चय इत्यर्थः । द्वितीय इति । दृश्यं द्रष्टुर्विभिन्नं सत्यात्मकमस्तीत्याद्यो मोहः भ्रमः[3] । तत्र दृश्येषु स्वाप्नादिरसत्य इति द्वितीयो भ्रमः । स्वप्नदशायां स्वाप्नपुरुषस्य रज्जौ सर्पभ्रमसदृश इत्यर्थः ॥ ५९ ॥ जाग्रत्प्रपञ्चवत् स्वाप्नस्यापि सर्वार्थसाधकत्वादिकं त्वदुक्तहेतुत्रयमस्तीत्युदाहरति—स्वाप्नेति । तत्काले स्वप्नकाले । यथा जाग्रद्वृक्षो जाग्रत्यर्थसाधकोऽबाधितः स्थिरश्च, एवं

१. तीहितम्—ग० । २. 'भास' इत्येव—क० । ३. समः—क० ।

पान्थानां किं न हरति तापं छायाप्रदानतः ॥६०॥
फलाद्यैः स्वाप्नमर्त्यादीन्न तर्पयति किं वद ।
स्वप्ने क्व बाधितः स्वाप्नः [1]क्वास्थिरश्चोपलक्षितः ॥६१॥
अखिलं बाधितं जाग्रद्दशायामिति चेच्छृणु ।
जाग्रत्प्रपञ्चोऽपि सर्वः सुषुप्तौ किं न बाधितः ॥६२॥
न बाधितः परदिनेऽप्यनुवृत्तेस्तथेति चेत् ।
स्वाप्नस्यापि परदिने नानुवृत्तिः क्व वा वद ॥६३॥
नानुवृत्तिर्भाति स्वप्ने इति चेन्नृपते शृणु ।
जाग्रत्यपि क्वानुवृत्तिभासो नव्यावभासके ॥६४॥
नव्येऽनुवृत्त्यभानेऽपि भात्यन्यत्रेति चेच्छृणु ।

स्वाप्नवृक्षोऽपि [2]स्वप्नकाले स्वार्थसाधकोऽबाधितः स्थिरश्चेत्यर्थः ॥ ६०-६१ ॥ अखिलमिति । स्वाप्नवृक्षाद्यखिलं जाग्रत्यभासनाद्बाधितमिति चेज्जाग्रत्प्रपञ्चोऽपि सुषुप्तावभासनाद् बाधित [3]एवेत्याह—जाग्रत्प्रपञ्चोऽपीति ॥ ६२ ॥ ननु बाधो नाम नानवभासनम्, किन्तूत्तरकालसम्बन्धरूपानुवृत्त्यभावः[4] । तथा च जाग्रत्प्रपञ्चस्य परदिने सोऽयमित्याद्यनुसन्धानहेतुनाऽनुवृत्तिसत्त्वान्न [5]बाध इत्याशङ्कते—न बाधित इति । [6]तथा स्वप्नवन्न बाधित इति चेदित्यन्वयः । स्वाप्नस्याप्येतत्तुल्यमित्याह—स्वाप्नस्येति ॥ ६३ ॥ स्वाप्नस्यानुवृत्तिर्नानुभूयत इति चेज्जाग्रत्यपि तुल्यमित्याह—जाग्रतीति । कुत एतदिति चेदसम्भवादित्यभिप्रायेणाह—नव्यावभासक इति । जाग्रति हि प्रतिक्षणं वस्तु नव्यमवभासते, एवं सति कथमनुवृत्तिसम्भव इति भावः ॥ ६४ ॥

---

१. क्व स्थिर—क० । २. प्रभात—क० ख० । ३. इत्याह—क० ।
४. 'नुवृत्त्यभावः ...हेतुना' इत्यस्य स्थाने 'नुवृत्त्याद्यनुसन्धानहेतुता' इति पाठः—क० ।
५. बाधते न इत्या—क० । ६. यथा—घ० ।

तथा स्वप्नेऽपि भात्येवानुवृत्तिः स्थिरभासने ॥६५॥
मृषानुवृत्तिस्तत्रेति चेज्जाग्रत्यपि सा तथा ।
सूक्ष्मबुद्ध्या विमृश तद्वस्तु जाग्रति संस्थितम् ॥६६॥
देहवृक्षनदीदीपादिकं क्षणविभेदितम् ।
कथं तदनुवृत्तिर्वै भवेदवितथात्मिका ॥६७॥
अचलानामपि नहि द्वितीयक्षणसङ्गतम् ।
रूपमस्ति सर्वदैव निर्झरैर्भेदितात्मनाम् ॥६८॥
मूषकैरुपदीकाभिः सूकरैर्निर्झरादिभिः ।
सर्वतस्तु विभिद्यन्ते पर्वताः सर्वदैव हि ॥६९॥

ननु क्रियादिक्षणिकभावानां नव्यानामननुवृत्तावप्यन्येषां पृथ्वीगिरिसमुद्रादीनामनुवृत्तिरनिवार्यैवेति चेदेतच्च स्वप्नेऽपि तुल्यमित्याह—तथेति । स्थिरभासन इति । स्थिरं वर्षादिरूपचिरकालस्थायि भासनं यस्य स्वप्नस्य । दीर्घस्वप्ने पुत्रकलत्रादीनामनुवृत्तेः सर्वानुभवसिद्धत्वादिति भावः ॥ ६५ ॥ स्वाप्नपुत्रकलत्रादीनामसत्यत्वेन तदनुवृत्तिभासनं भ्रमरूपमिति चेत्तुल्यमेतत्तवापीत्याह—जाग्रतीति । सा अनुवृत्तिः । तथा मृषेत्यर्थः । जाग्रत्यप्यनुवृत्तिभासनं भ्रमरूपमेवेति भावः । कथमेतत् प्रत्येयमिति चेदाह—सूक्ष्मेति । अन्धपरम्परागतस्थिरत्वाभिमानवर्जितबुद्ध्येति भावः ॥ ६६ ॥ देहेति । आदिना मेघमण्डलादि । देहादीनां सर्वैः सुस्पष्टं क्षणिकत्वेन ज्ञातानां[1] कथमनुवृत्तिरवितथा भवेदित्यर्थः ॥ ६७ ॥ ननु देहादेरनुवृत्त्यभावेऽपि पर्वतादीनामनुवृत्तिः सम्भवेदिति चेदाह—अचलानामिति । क्षणिकत्वनिर्वाहकं[2] विशेषणम्—निर्झरैरिति । अनवरतं निर्झरैर्भिद्यमानानां द्वितीयक्षणसङ्गतं रूपं नाचलानामस्तीत्यर्थः ॥६८॥ ननु निर्झराणां पर्वतभेदकत्वं न ग्रीष्मादिष्विति चेदाह—मूषकैरित्यादि । उपदीकाः येषां लालासम्बन्धेन [3]काष्ठादीनि

१. ज्ञानानां—क० घ० । २. हकविशे—क० । ३. काष्ठादिमृं—क० ।

[१]पर्वताम्बुधिभूमुख्या अप्येवं क्षणभेदिनः ।
अथ ते सम्प्रवक्ष्यामि पश्य सूक्ष्मधिया नृप ॥७०॥
परिच्छिन्नानुवृत्तिर्हि समैव स्वाप्नजाग्रतोः ।
अपरिच्छिन्नाऽनुवृत्तिः कार्येष्वत्यन्तदुर्लभा ॥७१॥
अनुवृत्तिः कारणेन रूपेणास्ति हि सर्वदा ।
इति चेत्[२] कारणं रूपं पृथिव्यादिमयं किल ॥७२॥
तच्चानुवृत्तं[३] स्वप्नेऽपि पृथिव्यादेर्हि भासनात् ।

मृत्तिकात्वमापद्यन्ते[४] ते कृमिविशेषाः[1] । आदिना वनगजादिभिः[५] ॥ ६९ ॥ भूः भूमिः[६] । पर्वताम्बुधिभुवो[७] मुख्याः[८] स्थिरत्वेनाभिमतानां येषां देवलोकादीनाम् । अम्बुधेर्नदीतोयमेलनाद् भुवो नद्यादिभिर्भेदनात् क्षणिकत्वम् । प्रकारान्तरेण जाग्रत्स्वप्न[९]भावयोरनुवृत्तिसाम्यं वक्तुमाह—अथेति । पश्य विचारय ॥ ७० ॥ परिच्छिन्नेति । जाग्रद्भावस्यानुवृत्तिः कालपरिच्छिन्ना न वा ? आद्ये परिच्छिन्नानुवृत्तिः स्वाप्नजाग्रतयोः[१०] समैव । द्वितीये दृश्यत्वेन कार्यात्मनः सिद्धजाग्रद्भावस्यापरिच्छिन्नानुवृत्तिर्दुर्लभैवेत्यर्थः ॥ ७१ ॥ ननु कार्यस्य कारणादत्यन्तभिन्नत्वमारम्भवाद्यभ्युपगतम्, तत्र हि प्रोक्तदोषावकाशो भवेत् । परिणामवादाश्रये तु न कोऽपि दोषः । जाग्रद्भावस्य कार्यरूपेण व्यावृत्तावपि कारणरूपेणानुवृत्तेरित्याशङ्क्य समाधातुमाह—इति चेदिति । पृथिव्यादीति । कारणरूपं पृथिव्यादिमयम्, भौतिकानां महाभूतकार्यत्वात् । यद्वा पृथिव्यादिमयं पृथिव्यादिनिखिलकार्यप्रचुरं प्रधानतत्त्वमित्यर्थः । कार्यमात्रस्य कारणे सूक्ष्मरूपेणावस्थानादिति

1. 'दीमक' इत्याख्यया भाषायां प्रसिद्धाः ।

१. पर्वता बुद्धि—क० । २. तत्—क० । ३. वृत्तस्व—क० । ४. द्यते—क० । ५. दयः—क० । ६ भूःभूमीति—क० । ७. तानां बुद्धिभुवो—क० । ८. मुख्यानां—क० । ९. स्वाप्न—ख० । १०. ग्रतोः—क० ।

अथ स्वाप्नस्य बाधो हि जाग्रति ह्यनुभूयते ।।७३।।
न जागरस्य बाधस्तु भासते कस्यचित् क्वचित् ।
इति चेच्छृणु वक्ष्यामि बाधो ह्यनवभासनम् ।।७४।।
सुषुप्तौ सर्वजगतोऽप्यनुभूतं ह्यभासनम् ।
अथ बाधो ह्यप्रमाणदर्शनं चेत्तदा शृणु ।।७५।।
अप्रमाणदृशिर्नास्ति[1] भ्रान्तानां [2]त्वादृशां खलु ।

भावः ।। ७२ ।। एवमपि स्वाप्नभावानां तुल्यतेत्याह—तच्चेति । कारणरूपमित्यर्थः । स्वप्नेऽपि प्रत्यहं पृथिव्यादिकारणरूपस्य भासमानत्वादनुवृत्तिरस्तीत्याह—अनुवृत्तमिति । यद्वा पृथिवीति कार्योपलक्षकम् । तथा च पृथिव्यादिकार्यस्यादिभूतं कारणं यत्प्रधानम्, तस्य सुखदुःखमोहात्मकगुणत्रयमयस्य स्वप्ने [3]भासनादिति । प्रकारान्तरेण पुनराशङ्कते—अथेति । स्वाप्नभावानां बाधो जाग्रति सर्वैरनुभूयत इत्यर्थः ।। ७३ ।। न जागरस्येति । जागरभावस्य बाधस्तु न क्वचिदवस्थायां कस्यचित् प्रमातुर्भासत इत्यर्थः । समाधत्ते—शृण्विति । अनवभासनमिति । अवभासनाभाव इत्यर्थः । यद्यपीदं रजतमित्यादौ नेदं रजतमित्यादिर्विपरीतग्रह एव बाध इत्युच्यते, तथाप्यवभासमानमेव सदिति नियमादनवभासनस्यासत्त्वनियमाच्चानवभासनमेवासत्त्वप्रयोजकमिति बाध इत्युच्यत इति ज्ञेयम् ।।७४।। सुषुप्ताविति । अविशेषेण सर्वस्य जगतोऽनवभासनं[4] सर्वाऽनुभूतं बाधो भवत्येवेत्यर्थः । ननु नह्यनवभासनं बाधः, घटावभासनप्राक्कालिकघटानवभासनस्य बाधत्वप्रसक्तेः । किन्त्वन्यदेवेत्याह—अथेति । अप्रमाणदर्शनमिति । अप्रमाणमिति भावप्रधानो निर्देशः । अप्रामाण्यदर्शनं बाध इत्यर्थः । प्रबुद्धस्य स्वाप्नदर्शने नेदं प्रमाणमिति ज्ञानं सर्वजनीनम् ।

---

१. सदृशी नास्ति—क० ।   २. त्वदृशां—क० ।
३. भासमाना—क० घ० ।   ४. भासनसर्वा—क० ख० ।

ज्ञातविज्ञेयतत्त्वानामप्रमाणदृशिः स्फुटा ॥७६॥
तस्मादिदं दृश्यजालं स्वाप्नदृश्यसमस्थिति ।
दीर्घकालोऽपि च स्वप्ने भासते निर्विशेषतः ॥७७॥
तस्मादबाधितो ह्यर्थक्रियाकारी स्थिरोऽपि च ।
स्वाप्नभावस्तेन तुल्यो जाग्रद्भावोऽपि सर्वशः ॥७८॥
यथा जाग्रति जाग्रत्त्वं गृहीतं जागरे स्फुटम् ।
स्वप्नेऽपि जागरत्वं तु गृहीतं तद्वदेव हि ॥७९॥

एतदेव बाधः। नह्येवंविधबाधो जाग्रत्यस्तीति भावः ॥७५॥ यथा हि स्वाप्नप्रमातुः स्वाप्नेष्वप्रामाण्यदर्शनं नास्ति, एवमज्ञातज्ञेयतत्त्वानामेव जाग्रत्यप्रामाण्यदर्शनं नास्तीत्याह—अप्रमाणेति । जाग्रत्यप्रमाणदृशिः । "ज्ञेयस्य तु परं तत्त्वं चितिरेव न चेतरत्" इति नीत्या ज्ञातविज्ञेयतत्त्वानां जाग्रति स्फुटाऽप्रमाणदृशिः ॥७६॥ तस्मादिति । स्वाप्नभावानामर्थक्रियादिसत्त्वेनावैषम्यादित्यर्थः । ननु जाग्रद्भावो दीर्घकालो भासते, न तु स्वाप्न इति चेदाह—दीर्घकाल इति । निर्विशेषत इति । जाग्रत्कालवदविशेषाद्[1] भासत इत्यर्थः ॥ ७७ ॥ तस्मादिति । प्रोक्तदिशा वैषम्याभावादित्यर्थः। स्वस्वकालेऽबाधितत्वादेः सत्त्वात् स्वाप्नजाग्रद्भावयोः सर्वांशेन तुल्यत्वमिति भावः ॥ ७८ ॥ नन्वेवमपि जाग्रतो जाग्रत्त्वं[2] भाति, नैवं स्वप्नस्य जाग्रत्त्वं भातीत्यस्ति वैषम्यमित्याशङ्क्य परिहरति—यथेति । अथ जाग्रति स्वाप्नानुसन्धानं स्वाप्नस्य स्वाप्नत्वग्रहः, नैवं स्वप्ने जागरानुसन्धानादिरित्यस्ति वैषम्यमिति चेत्, सत्यम्, आपातदर्शिनामस्त्येव वैषम्यम् । सम्यग्दर्शिनां तु न तल्लेशोऽपि । तथा हि—स्वप्ने किमखिलजाग्रदनुसन्धानं नास्ति, उत यत्किञ्चिज्जाग्रदनुसन्धानं नास्तीत्युच्यते । उभयथाऽपि न दोषः । जाग्र-

१. दसत—क० । २. त्वं विनैवं—क० ।

एवं स्थिते कुतो राजन् विशेषः स्वप्नजाग्रतोः ।
तत्स्वाप्नान्निजबन्धूंस्त्वं नहि शोचसि वै कुतः ॥८०॥
केवलं भावनामात्रात् सत्यता जगति स्थिता ।
शून्यताभावनेनापि शून्यं निष्प्रतिघं भवेत् ॥८१॥
भावना ह्यप्रमाणत्ववैधुर्येण स्थिरीकृता ।
भवेत्तदात्मभावेन सत्यमेतद् महीपते ॥८२॥

त्यपि निखिलस्वाप्नानुसन्धानस्य यत्किञ्चित्तदनुसन्धानस्य वाऽभावः सर्वानुभवसिद्ध एव। न च यत्किञ्चित्स्वप्नानुसन्धानमस्ति जाग्रति नैवं स्वप्न इति वाच्यम्, अनुसन्धानं हि स्मृतिः, तथा च पूर्वदिने[1] न मयेत्थं भाषितमित्यादिजाग्रद्व्यवहारस्मृतेरानुभविकत्वात् । एवं स्वप्ने सेयं जाग्रदासीदिति जागरस्य जाग्रत्त्वग्रहादिकं सर्वमप्रतिहतमेवेति सूक्ष्मविमर्शिभिर्ज्ञेयम् ॥ ७९ ॥ [2]एवं सर्वसाम्ये स्थिते। तत् तस्मात् स्वप्नजाग्रतोरविशेषात् ॥ ८० ॥ नन्वेवं [3]स्वप्नजाग्रतोः साम्ये सर्वेषां जगति सत्यताभासनं कुत इति चेदाह—केवलमिति। सत्यं जगदिति भावनानुसन्धानम्, तन्मात्रात्। तदेकनिमित्ता सत्यतेत्यर्थः। केवलमिति। असत्यमिति विपरीतभावनानन्तरितमित्यर्थः। स्थिता दृश्यत इति शेषः। अत एव शून्यत्वभावने इदमेव जगत् शून्यमभावप्रत्ययविषयं भवेत्। निष्प्रतिघमाकाशवदप्रतिरोधकं च ॥ ८१ ॥ ननु मया सम्प्रति शून्यत्वेन भाव्यमानमपि जगत् कुतो न शून्यात्मतां यातीत्याशङ्क्य ते[4] भावनाऽसिद्धा, तस्मान्न शून्यात्मतासम्पत्तिरिति वक्तुं भावनायाः [5]सिद्धिप्रकारमाह—भावनेति। भावना इदमीदृगिति प्रत्यय-

---

१. दिनेऽनेन–क० घ०, दिने तेन–ख० । २. 'एवं' नास्ति–क० ।
३. स्वाप्न–क० ख० । ४. शङ्कते–क० ।
५. सिद्ध–क०, असिद्धिः–ख० ।

निदर्शनं [1]त्वत्र चेदं मज्जगद् दृष्टमेव ते ।
इमं शैलं परिक्रम्य [2]चैहि पश्याव सम्प्रति ॥८३॥
इत्युक्त्वा नृपतिं हस्ते गृहीत्वा परिचक्रमे ।
परिक्रम्य गण्डशैलं राज्ञा सह समेत्य तु ॥८४॥
पुनः प्राह महासेनं मेधावी मुनिनन्दनः ।
राजन् दृष्ट एष शैलः पादगव्यूतिमात्रकः ॥८५॥
दृष्ट एवास्य गर्भे ते लोकः सुविततः स्फुटः ।
एष जाग्रदुत स्वप्नः सत्यो मिथ्यात्मकोऽपि वा ॥८६॥
शैललोके यद् दिनैकं तदत्र द्वादशार्बुदाः ।

सन्तानः । तस्याः स्थैर्यमेव सिद्धिः । स्थैर्यं चाप्रमाणत्वनिश्चयेनोन्मूलनाभावः । यथा शुक्ताविदं रजतमिति [3]भावना नेदं रजतमिति ज्ञानेनाप्रमाणत्वेन निश्चिते उन्मूलिता भवति छिन्नसन्ताना भवति । सेयं भावना असिद्धा । या त्वप्रामाण्यनिश्चयवैधुर्येण स्थिरीकृता अनुन्मूलिता स्यात्तदा तदात्मभावेन भावितवस्तुरूपेण सा भावनैव भवेत् । भावितं सर्वसाधारणं भायादित्यर्थः । स्वेनानुभूतत्वादाह—सत्यमेतदिति ॥ ८२ ॥ निदर्शनमुदाहरणम् । ते त्वया । शैलान्तस्तावान् प्रदेशः स्यादिति तव शङ्का भवेदत इमं शैलं परिक्रम्य पश्यावेत्याह—इममिति ॥ ८३ ॥ शैलं परिचक्रमे । राज्ञा सह परिक्रम्य ततः समेत्य स्वस्थानमागत्य ॥ ८४ ॥ मेधावी शिष्यबोधनेऽतिकुशलः । गव्यूतिः क्रोशयुगम् ॥ ८५ ॥ स्फुटः जाग्रत्सदृशः । एष [4]मल्लोकावभासः । सत्यो मिथ्यात्मक एव वा, विवेचयेति शेषः ॥ ८६ ॥ पादगव्यूतिपरि-

---

१. तत्र—घ० । २. यौ हि—क० ।
३. भावने—क० ख० । ४. शैला—क० ।

वत्सरास्त्वनुभूतास्ते सत्यासत्ये विवेचय ॥८७॥
विवेचनं नास्य भवेत् स्वप्नयोर्भिन्नयोरिव ।
अस्मादेतद्विद्धि जगद् भावनामात्रसारकम् ॥८८॥
अभाव्यमानं चैतत्तु लीयेत क्षणमात्रतः ।
तस्माच्छोकं जहि नृपावेत्य[1] स्वाप्नसमं जगत् ॥८९॥
स्वाप्नचित्रभित्तिभूतं स्वात्मानं संविदात्मकम् ।
दर्पणप्रतिमं मत्वा संस्थितोऽसि यथा तथा ॥९०॥

मितशैलेऽनन्तदेशस्य विरुद्धत्वान्नैतद्विवेचयितुं शक्यम्, एवं कालस्यापि विरुद्धत्वादित्याह—शैल्लोक इति । बहिः पादगव्यूतिमात्रो देशो द्वादशार्बुदमितश्च कालः, अन्तरनन्तो[2] देशो दिनैकात्मकः कालश्चेति परस्परविरुद्धस्वरूपयोर्मध्ये । सत्यासत्ये विवेचय ॥ ८७ ॥ ननु बाह्यविरुद्धमान्तरमसत्यमिति चेदुभयोर्भासनस्य तुल्यत्वेनान्तरविरुद्धं बाह्यमप्यसत्यमिति वक्तुं शक्यमिति नैतन्निर्णयः शक्यक्रिय इति सदृष्टान्तमाह—विवेचनमिति । भावनामात्रसारकं स्वप्नवद् भावनामात्रस्वरूपम्, न ततोऽधिकं किञ्चिदित्यर्थः ॥ ८८ ॥ मया अभाव्यमानमेतच्छैलजगत् क्षणमात्रेण लीयेत,[3] एवं ब्रह्मणाऽभाव्यमानं बाह्यजगदपीति तात्पर्यम् । तस्मात् भावनामात्रसारत्वाज्जगतः ॥८९॥ कथं शोकं त्यजामीति चेदाह—स्वाप्नेति । स्वाप्ना ये भावास्ते हि चित्रसदृशाः । चित्रस्य भासमानस्य [4]न भित्त्यतिरिक्तं स्वरूपमस्तीत्यविवादः । तथा च स्वाप्नचित्रभित्तिभूतं संविदात्मकं स्वात्मानं दर्पणप्रतिमं मत्वा यथा संस्थितोऽसि, स्वाप्नबन्धुनाशे[5] राज्यलाभे[6] वा यथा न शोचसि न

१. वेक्ष्य—क० । २. रनन्तरो—क० ख० ।
३. यते—क० घ० । ४. नासत्यातिरिक्तं—क० ।
५. नाश—क० ख० घ० । ६. भयोर्य—ख० ।

जाग्रच्चित्रदर्पणं चावेह्यात्मानं चिदात्मकम् ।
परमानन्दितस्वान्तो भव शीघ्रं महीपते ॥९१॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे शैललोकदर्शनं नाम
त्रयोदशोऽध्यायः ॥



प्रहृष्यसि च ॥ ९० ॥ तथाऽवेहीत्यन्वयः । [1]स्वप्नजाग्रतोरत्यन्तसाम्यात् स्वाप्नभाववज्जाग्रद्भावा अपि चिदात्मदर्पणप्रतिबिम्बरूपा एवेति निश्चित्य स्वाप्नशोकाद्यैरस्पृष्ट इव जाग्रच्छोकाद्यैरस्पृष्टः । अत एव निखिलवासनाप्रहाणमात्रेण निःसारितोदकघटान्तरभिव्यक्ताकाशवद् वासना[2]रिक्तस्वान्ताभिव्यक्तात्मानन्दो भवेति भावः ॥ ९१ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
त्रयोदशोऽध्यायः ॥



१. स्वाप्न–क० घ० । २. नातिरि–क० ।

# अथ चतुर्दशोऽध्यायः

इत्याकर्ण्य मुनिवचो विचार्य शुभया धिया ।
जगत्स्थितिं स्वाप्नसमां ज्ञात्वा शोकं जहौ द्रुतम् ॥ १ ॥
धैर्यमालम्ब्य निःशोको भूयोऽपृच्छन्मुनेः सुतम् ।
मुनिपुत्र महाबुद्धे त्वं परावरदर्शनः ॥ २ ॥
न[1] तेऽप्यविदितं किञ्चिन्मन्ये स्यादिति लेशतः ।
पृच्छामि यदहं तन्मे कृपया वक्तुमर्हसि ॥ ३ ॥
भावनाप्रभवं ह्येतत् सर्वं वदसि तत् कथम् ।
मया भूयो [2]भावितं च न बहिः सर्वथा भवेत् ॥४॥
त्वया तु भावनासिद्धया [3]शैले लोकः प्रकल्पितः ।
अथापि देशः कालश्च युगपद् विविधः कथम् ॥ ५ ॥

अत्राध्याये साधुपद्यैर्भावनामात्रकं जगत् ।
भावनायाः सिद्धिमपि प्राह तत्त्वान्यपि क्रमात् ॥

जगद् भावनामात्रसारमित्याकर्ण्य शुभया सत्तर्कयुतया धिया ॥ १ ॥ जगतः स्वाप्नसाम्यज्ञानेऽपि वासनादार्ढ्याद् भूयः शोक आपतति, अत आह—धैर्यमिति । धैर्यं धृतिः, जगतः [4]स्वाप्नतुल्यत्वाभिमानात्यागः । परावरदर्शनः [*]सेन्द्रियातीन्द्रियज्ञः ॥ २ ॥ अत एवाह—न[5] त इति । लेशतोऽप्यविदितमिति योजना ॥ ३ ॥ सर्वं जगत् । तज्जगन्मया भूयो भावितमपि बहिः सर्वसाधारणं सर्वथा न भवेत् तत् कथमिति योजना ॥ ४ ॥ त्वया तु भावना-

---

१. ततो-क० । २. भाविते-क० ग० घ० । ३. शैललोकः-क० ।
४. स्वप्न-घ० । ५. तत-क० ।

[1]तत्रासत्यमन्यतरत् कतमं तन्ममेरय ।
इति पृष्टो मुनिसुतः प्रवक्तुमुपचक्रमे ॥ ६ ॥
सङ्कल्पो भावना प्रोक्ता सिद्धाऽसिद्धेति सा द्विधा ।
सिद्धिर्विकल्पाऽसम्भेदो [2]विकल्पस्त्वेकनिष्ठितेः ॥ ७ ॥
ब्रह्मभावनया पश्य जातं जगदिदं ननु ।

सिद्धया कल्पितः । कथंविधा सा भावनासिद्धिरिति पूर्वाध्याये संक्षेपेणोक्तस्य सिद्धिहेतोर्विस्तरप्रश्न इति तात्पर्यम् । प्रश्नान्तरम्—अथापीति । युगपदिति । एकस्मिन्नेव काले एक एव देशः कालश्च विविधः कथमित्यर्थः ॥ ५ ॥ तत्र दीर्घादीर्घत्वाभ्यां भासमानयोर्मध्ये । यद्यपि [3]पूर्वाध्याये द्वयोः स्वाप्नतुल्यत्वमुक्तम्, तथापि जाग्रत्प्रपञ्चे सत्यवासनाविष्टो भूयः पृच्छति—अन्यतरत् सत्यं भवेदिति ॥ ६ ॥ क्रमेणोत्तरमाह—सङ्कल्प इति । भावना हि सङ्कल्पः । सङ्कल्पो नामेदमीदृशमित्यादिर्मानस उल्लेखः । सा भावना । तस्याः केयं सिद्धिरिति चेदाह—सिद्धिरिति । इदमीदृगिति सङ्कल्पधारामध्ये नेदमीदृगिति विरुद्धकल्पनया असम्भेदः अयोगः । एवं विकल्पासम्भेदसम्पादनाय विकल्पकारणमाह—विकल्पस्त्विति । एकनिष्ठितेः, भवेदिति शेषः । एकत्र निष्ठितेः सत्यत्वग्रहादित्यर्थः । अयं भावः—बाह्यसृष्टौ सत्यत्वग्रहात् स्वमानससृष्टावसत्यत्वविकल्पोदयः, यावदेवं विकल्पसम्भेदो भावनायास्तावन्न सिद्धिरिति । यद्वा विकल्पासम्भेदे उपायं वक्तुमाह—अविकल्पस्त्विति । नास्ति विकल्पो यस्य सः, सङ्कल्प इत्यर्थः । एकनिष्ठितेः एकत्र सङ्कल्पविषयमात्रे नितरां मनसः स्थितेः । सङ्कल्पविषयान्मनसोऽप्रचलनेऽविकल्पः[4] सङ्कल्पो भवेदिति भावः ॥ ७ ॥ [5]तथा [6]चावि-

---

१. तथा–घ० । २. 'अविकल्पस्तु' इत्यपि पाठो व्याख्यातष्टीकायाम् ।
३. पूर्वपूर्वा–क० । ४. लने विक–ख० ।
६. यथा–क० ख० । ५. वा विक–क० ।

एतत् सर्वैः सत्यरूपं भावितं सुदृढत्वतः ॥ ८ ॥
तथा स्वसङ्कल्पभवे नास्ति कस्यापि भावना ।
विकल्पसम्भेद एषोऽसिद्धा तस्माद्विभावना ॥ ९ ॥
भावनायाः सिद्धिरत्र बहुधा संस्थिता भवेत् ।
जन्मना मणिना तद्वदौषधेन च योगतः ॥१०॥
तपसा मन्त्रसिद्ध्या च वरेण च भवेन्नृप ।
जन्मना ब्रह्मणः सा वै मणिना यक्षरक्षसाम् ॥११॥
औषधेन तु देवानां योगिनां योगतो भवेत् ।
तपसा तापसानां सा मान्त्रिकाणां तु मन्त्रतः ॥१२॥
विश्वकर्ममुखानां च वरप्राप्त्या हि साऽभवत्[1] ।
सङ्कल्पितं तथा भाव्यं पूर्वविस्मरणे सति ॥१३॥

कल्पसङ्कल्पात्मकसिद्धभावनाभावितं सर्वसाधारणं भासेत[2] । तत्र च यः कश्चिन्नेदं सत्यमित्यविकल्पसङ्कल्पपरो भवेत्तं प्रति तद् दृश्यं तथैव भवेत् । अत एवाह—ब्रह्मेति । ब्रह्मणश्चतुर्मुखस्य सिद्धभावनयेदं जगज्जातम् । एतज्जगत् सर्वैः प्रमातृभिरनेकजन्माभ्यासात् सुदृढत्वतः सत्यरूपं भावितम्, अतः सर्वसाधारणं सत्यत्वेन भासत इति शेषः ॥८॥ तथा ब्रह्मसृष्टे इव । तव स्वसङ्कल्पभवे जगति सत्यत्वभावना न कस्यापि । एष तावक एव नेदं सत्यमिति यो विकल्पस्तत्सम्भेदोऽस्ति । तस्मात्ते भावनाऽसिद्धा ॥ ९ ॥ कथं भावनासिद्धिर्ब्रह्मादीनामिति चेदाह—भावनाया इति । अत्र जगति ॥ १० ॥ कस्य कीदृशी भावनासिद्धिरित्येतदाह—जन्मनेति । सा भावनासिद्धिः ॥ ११ ॥ औषधेन अमृतेन ॥ १२ ॥ विश्वकर्ममुखा विश्वकर्ममय[3]प्रभृतयः । भावनासाधनप्रकारमाह—सङ्कल्पितमिति । सङ्कल्पनमित्यर्थः । तथा भाव्यं तथा कर्तव्यम् । पूर्वविस्मरणे सति यथा स्थिरं भवेदिति शेषः ।

---

१. भवेत्–ख० । २. भासते–क० । ३. 'मय' नास्ति–क० ।

स्थिरं तावद्भवत्येव यावत् पूर्वं नहि स्मरेत् ।
एवमेव निर्विकल्पभावना यदि सुस्थिरा ॥१४॥
अनिच्छया विकल्पस्य यावत् सम्भेदनं नहि ।
तावत् सा भावना सिद्धा साधयेद्वै महाफलम् ॥१५॥
सम्भेदात्तु विकल्पेन न सिद्धा तव भावना ।
भावनां साधय क्षिप्रं यदि स्रष्टुं समीहसि ॥१६॥
शृणु राजन् देशकालद्वैविध्यं वदतो मम ।
अव्युत्पन्नोऽसि लोकस्य व्यवहारे[1] ततस्तव ॥१७॥
एतच्चित्रं भासते वै शृणु सम्यग् ब्रवीमि ते ।
जगद्भावस्वभावोऽयं विविधत्वेन भासनम् ॥१८॥

सङ्कल्पस्य पूर्वमारम्भः, यस्य यथा सङ्कल्प इत्थं कृत इत्यस्य विस्मरणे सति सङ्कल्पनं स्थिरं भवेत्। एवं सङ्कल्पनं कर्तव्यमिति भावः ॥ १३ ॥ एवं पूर्वविस्मरणमेव भावनासिद्धिसम्पादकमित्याह—स्थिरमिति । पूर्वं न स्मरन् सङ्कल्पमेवानुवर्तयेत्। एवं चिराभ्यासेन यावत् [2]पूर्वं न स्मरेत् तावद् भावनं स्थिरं भवतीति भावः। एवमेव निरन्तराभ्यासेनैव, निर्विकल्पभावना विरुद्धविकल्पासम्भिन्ना भावना यदि सुस्थिरा, तदा महाफलं साधयेदिति व्यवहितेन सम्बन्धः ॥ १४ ॥ ननु कियत्कालं सुस्थैर्येण भावना सिद्धा स्यादित्याशङ्क्याह—अनिच्छयेति । विरुद्धविकल्पसम्भेदोऽनिच्छया नैव भवेदिति सुस्थिरा यदि[3] तदा भावना सिद्धेत्यर्थः। अनिच्छया यावद्विकल्पसम्भेदो नास्ति, तावत् सिद्धा भावना महाफलं ब्रह्माण्डादिकं सर्वसाधारणं साधयेत् ॥ १५ ॥ तव तु विकल्पसम्भेदाद् भावना न सिद्धेत्याह—सम्भेदादिति ॥ १६ ॥ एवं प्रथमप्रश्नोत्तरमुक्त्वा द्वितीयप्रश्नोत्तरमाह—शृण्विति । तवैतच्चित्रं भासत इति सम्बन्धः ॥ १७ ॥ एतत् एकदैव देशकालयोर्दीर्घत्वं ह्रस्वत्वं

१. हारैह्यत—क० । २. स्तर्ते—घ० । ३. यदा—क० ।

एक एव हि सूर्यस्य[1] प्रकाशो द्विविधः स्थितः ।
दिवान्धानामन्धकार इतरेषां तु भासकः ॥१९॥
जलं मनुष्यपश्वादेः श्वासस्य प्रतिरोधकम् ।
मत्स्यादीनां बहिः श्वासप्रतिरोधो जले नहि ॥२०॥
अग्निर्दहति मर्त्यादींस्तं भक्षयति तित्तिरिः ।
वह्निर्नश्यति तोयेन स जले ज्वलति क्वचित् ॥२१॥
एवं सर्वे जागतास्तु भावा द्वैरूप्यतः स्थिताः ।
एवं सेन्द्रियवृत्तान्तास्त्वन्ये केऽपि निरिन्द्रियाः ॥२२॥
स्वभावतो विरुद्धा वै शतशोऽथ सहस्रशः ।
अत्रोपपत्तिं वक्ष्यामि समाहितमनाः शृणु ॥२३॥
एते हि चाक्षुषा भावाश्चक्षुर्विकृतिमात्रकाः ।
न चाक्षुषादंशतोऽन्यद् दृश्यमस्ति क्वचिद् बहिः ॥२४॥

च । अत्र कारणं ब्रवीमि । भावस्य विरुद्धत्वेन भासनं स्वभाव एव ॥ १८ ॥ कुत एवं विदितमिति चेद् भूयो दर्शनादिति वक्तुं कांश्चित्तादृशान् भावानुदाहरति—एक एवेति । द्वैविध्यमेवाह—दिवान्धानामिति ॥ १९ ॥ स्वस्मिन्निमग्नमनुष्यपश्वादेः । बहिः निर्जले देशे ॥ २० ॥ तित्तिरिर्भक्षयति तं न दहति । क्वचित् वडवानलकुण्डादौ ॥ २१ ॥ विरुद्धद्विरूपतया[2] सर्वे भावाः स्थिताः । तत्र केचित् प्रसिद्धाः । अन्येऽप्यप्रसिद्धा भूम्यादयो मर्त्यानां प्रतिरोधकाः, पिशाचादीनामप्रतिरोधका बुद्धिमद्भिर्ज्ञेयाः । सेन्द्रियाः अपरोक्षाः, निरिन्द्रियाः परोक्षाः, भावानां विरुद्धस्वभावाः ॥ २२ ॥ निरिन्द्रियाः सेन्द्रियाश्च भावा अन्येऽपि विरुद्ध[3]द्विस्वभावाः सन्तीत्याह—स्वभावत इति । कथमेकस्य विरुद्धोभयरूपतेति चेदुपपत्तिपूर्वकं वक्तुमुपक्रमते—अत्रेति ॥ २३ ॥ भावानां बहिरसत्त्वान्नास्ति विरोध

१. सर्वस्य—क० ।   २. तायां—ख० ।   २. 'द्वि' नास्ति—क० ।

यथा पित्तप्रदुष्टाक्षो बहिः पीतं प्रपश्यति ।
यथा तैमिरिकोऽन्यस्तु पश्यत्येकं द्विधा स्थितम् ॥२५॥
एवं विचित्रदुष्टाक्षाः पश्यन्ति विविधं जगत् ।
अस्ति पूर्वसमुद्रस्य मध्ये कारण्डकाह्वयः ॥२६॥
द्वीपस्तत्र जना भावान् रक्तान् पश्यन्ति वै सदा ।
एवं रमणकद्वीपे सदा पश्यन्ति वै जनाः ॥२७॥
व्यत्यस्तमूर्ध्वाधरतो निखिलं भावमण्डलम् ।
एवमन्येषु द्वीपेषु विविधं[1] भावमण्डलम् ॥२८॥
जना नेत्रस्वभावेन पश्यन्ति खलु सर्वदा ।
तत्र तेषामन्यथा तु दृश्यते यदि कुत्रचित् ॥२९॥
नेत्रं सुसाध्यौषधेन पश्यन्ति प्राग्वदेव हि ।
अतस्तु चक्षुषा यावद् दृश्यते जगतीतले ॥३०॥
तावद् भवेच्चाक्षुषोंऽशः पीतवत् पित्तचक्षुषः ।
एवं घ्राणादीन्द्रियाणामंशा गन्धादयोऽपि हि ॥३१॥

इति वदति—एत इति ॥ २४ ॥ अत्र दृष्टान्तः—यथेति । तैमिरिकः तिमिरदोषोपहतनेत्रः ॥ २५ ॥ एवमन्येऽपि दृष्टिदोषवैचित्र्याद् विविधं जगत् पश्यन्तीति सोदाहरणमाह—एवमिति ॥ २६ ॥ सर्वभावान् रक्तान् पश्यन्ति ॥२७॥ व्यत्यस्तम् अधोमस्तकमूर्ध्वपादमित्यादि ॥२८॥ तन्नेत्रस्य न स दोषः, किन्तु स्वभाव एवेत्युपपादयति—तत्रेति । तेषु द्वीपेषु तेषां जनानां यद्यरक्तमव्यत्यस्तं वा दृश्यते, तदा तैः [ ते ] स्वनेत्रमौषधैरञ्जनाद्यैरदुष्टं संसाध्य प्राग्वद्रक्तं व्यत्यस्तं च पश्यन्तीत्यर्थः ॥२९–३०॥ पित्तचक्षुषो यथा दृश्यमानः पीतवर्णश्चाक्षुषोंऽशस्तथा पुरुषस्य चक्षुषा यावद् दृश्यते तावत् सर्वमपि चाक्षुषोंऽश एव । एवं चक्षुर्विषयस्य तदंशत्वं प्रसाध्यान्येन्द्रियविषयेष्वेतदतिदिशति—

१. विविधा—क० ।

मानसाश्च मनोमात्रास्तथैवाखिलजागताः[1] ।
क्रमोऽप्यत्तस्वभावोत्थ[2]स्ततः किञ्चिद् बहिर्नहि ॥३२॥
शृणु राजन् बहिरिति यल्लोके भाति केवलम् ।
तदाद्यं सर्वजगतां जगच्चित्रस्य भित्तिवत् ॥३३॥
तस्य बाह्यस्य वक्तव्यमपादानं ध्रुवं [3]ननु ।
शरीरं स्यादपादानं नेतरद् भवितुं क्षमम् ॥३४॥

त्वमिति । येनेन्द्रियेण यत् प्रकाशते तस्य तदिन्द्रियांशत्वमिति भावः ॥३१॥ एवं मनोविषयाणामपि मनोंऽशत्वमित्याह—मानसाश्चेति । तथा च देशक्रमस्य कालक्रमस्य क्रियाक्रमस्य च चाक्षुषत्वाच्चक्षुरंशत्वमित्याह—क्रमोऽपीति । क्रमः पौर्वापर्येणावस्थितत्वम् । तथा च द्रव्यक्रमो हि दिक् । प्रयागात् काशी पूर्वेति [4]पूर्वव्यवहारविषयः क्रम एव । एवं क्रियागतः क्रमः कालः । कासाश्चित् क्रियाणां पौर्वापर्यावस्थितत्वरूपक्रमस्यैव घटिकादिकालव्यवहारविषयत्वं ज्ञेयम् । एवं च यद्यत्काले[5] देशः कालो वा यथा यथा महत्त्वेनाल्पत्वेन वा भासते, स सर्वोऽपि तत्तत्कालिकश्चाक्षुषोंऽश एव विभिन्न इति नैकस्य विरुद्धोभयरूपतादोष इति भावः ॥३२॥ एवं पित्तादिदुष्टाक्षाणां भासमानपीता[6]दिव्रर्णदृष्टान्तेन दृश्यं बहिर्नास्तीति प्रसाध्य बहिर्वस्त्वंश[वंस्त्व]सम्भवादपि तन्नास्तीति साधयितुमुपक्रमते—शृण्विति । चित्रस्य भित्तिरिव बहिःपदार्थो जगच्चित्रस्याश्रयत्वात् कारणत्वाच्चाद्यमित्यर्थः ॥३३॥ तस्य प्रोक्तस्य, बाह्यस्य बहिःपदार्थस्य, ध्रुवमवधिभूतमपादानं वक्तव्यम् । कस्मात् ? बहिरित्यपादानस्याकांक्षितत्वात् । घटादेः शरीरादन्यस्यापि बाह्यत्वेनापादानत्वासम्भवाच्छरीरमेवापादानं

१. संगताः—ख० । २. भावस्य-क० ।
३. न तु-ख० । ४. पूर्वस्य-घ० ।
५. 'काले' नास्ति-क० । ६. पित्ता-क० ख० ।

तस्यापि बहिराभासाद[1]पादानं कथं नु तत् ।
पर्वताद् बहिरित्युक्ते पर्वतो न बहिर्भवेत् ॥३५॥
यथा घटो भासते हि [2]बहिस्तद्वच्छरीरकम् ।
भासकाद् बहिरित्येवं वक्तुं वापि न सम्भवेत् ॥३६॥
दीपसूर्यालोकबहिर्गतानां[3] नहि भासनम् ।
अतस्तु भासकस्यान्तर्भास्यमस्तीति युज्यते ॥३७॥
भासकं तु न देहादिर्भास्यत्वात् पर्वतादिवत् ।
न सर्वथा यत्तु भास्यं भासकं तद्धि युज्यते ॥३८॥
भासकस्यापि भास्यत्वे भासकस्यानवस्थितिः ।
स्वस्यैव भासकत्वं च भास्यत्वं नहि युज्यते ॥३९॥

स्यादिति सम्भावयति—शरीरमिति ॥ ३४ ॥ शरीरस्यापि बहिष्ठत्वेनाभासनान्नापादानतेत्याह—तस्यापीति । अत्र दृष्टान्तः—पर्वतादिति । पर्वतो न बहिष्ठो भवेदित्यर्थः ॥ ३५ ॥ शरीरस्य बहिष्ठत्वे दृष्टान्तमाह—यथेति । अथ घटादिशरीरान्तर्भासक आत्मैवापादानमिति शङ्कते—भासकादिति । इत्येवं वा वक्तुमिति योजना ॥ ३६ ॥ ननु यदि भासकोऽपादानं तर्हि सूर्यालोकाद् बहिर्गतानामन्धकारस्थानामभासनमिव भासकाद् बहिष्ठानां भासनमेव न भवेदतो भासकान्तरेव भास्यमभ्युपेयम् । तथा च बहिष्ठानां भासक आत्मा नापादानमित्याह—दीपेत्यादि ॥३७॥ एतावता बहिःपदार्थस्यापादानानिरूपणाद्दर्पणेऽतिविततगगनाभासवद् भासकान्तरेव बहिःपदार्थविभास इति सिद्धम् । अथ भासकमात्रात्मता भास्यस्येति हेतोश्च भास्यस्य बहिःपदार्थस्य न भासकमपादानमिति वक्तुं भासकस्वरूपं विवेचयति—भासकं त्विति । नन्वस्तु स्थूलोऽहं पश्यामीत्यनुभवाद्देहस्य भास्यत्वं भासकत्वं चेति चेदाह—न सर्वथेति ॥ ३८ ॥ ननु भास्यस्य भासकत्वे का हानिरिति चेत्, यदि

1. दुपा—क० । 2. प्राहु—क० ख० । 3. गंतान्तं—क० ।

अतस्तु भासकं शुद्धं भासकैकस्वरूपकम् ।
तच्च भारूपमेवेह पूर्णमेकरसात्मकम् ॥४०॥
तेन व्याप्ता देशकाला भासनात्तस्य पूर्णता ।

एक एव देहः स्वात्मनः स्वयंवेद्यो[1] वेदकश्चेति चेदेकस्य कर्तृकर्मत्वविरोधः, देहान्तरस्य[2] भास्यो भासकश्चेति चेत्[3] स्वस्याभासमानस्य भासकत्वासिद्धेर्भासकदेहानां परम्परया भासकान्तरापेक्षणान्मूलक्षतिकरी भासकानवस्थेत्याह—भासकस्येति । नहि युज्यत इति । कर्तृकर्मत्वविरोधादिति शेषः ॥ ३९ ॥ अतः अनवस्थादिदोषात् । शुद्धम् [4]अभास्यमित्यर्थः । एतस्यैव स्पष्टोक्तिः—भासकैकस्वरूपकमिति । ननु भासकं भासनक्रियावत्, क्रिया चानित्यो धर्मः, तथा च भासकत्वस्य कालपरिच्छिन्नत्वात् कथं भासकैकस्वरूपकमिति चेदाह—तच्चेति । भासकमित्यर्थः । भारूपमेवेहेति । लोकवदिह न कर्तृक्रिययोर्भेदः, किन्तु क्रियात्मक एव कर्तेत्यर्थः । दर्पणप्रतिबिम्बवत् कार्यस्य स्वस्वरूपानतिरिक्तत्वेन स्वरूपातिरिक्तक्रियानुपयोग इति तात्पर्यम् । अत एव पूर्णमेकरसात्मकं च । एकरसः वस्त्वन्तरासम्भिन्न आत्मा यस्य ॥ ४० ॥ तेन भारूपभासकेन । कुत इति चेदाह—भासनादिति । सर्वत्र भासनाद्देशकाला व्याप्ता इत्यर्थः । अत एव तस्य पूर्णता । नहि घटपटयोरिव भासकभास्ययोर्भासनम्, किन्तु दर्पणप्रतिबिम्बयोरिव । तथा च दर्पणस्य प्रतिबिम्बव्यापकत्वमिव भासकस्य भास्यव्यापकत्वमिति भावः। ननु दर्पणप्रतिबिम्बन्यायेन भास्यस्य[5] भासकानन्यत्वमलौकिकं कुतः कल्प्यत इति चेदाह—अभारूपस्येति । भारूपतादात्म्यानापन्नस्येत्यर्थः । अभानादिति । यदि भास्यस्य भारूपभासकानन्यत्वं नोच्यते, तदा तस्य भानमेव न स्यादित्यर्थः । अतो भास्यं भारूपैकरसमेव । अय-

१. स्वयम्बोधो–क० । २. न्तरस्थभा–क० । ३. 'चेत्' नास्ति–क० ।
४. अभास्य–ख०, आभास्य–क० घ० । ५. भास्यभास–क० ।

तस्यापि बहिराभासाद[1]पादानं कथं नु तत् ।
पर्वताद् बहिरित्युक्ते पर्वतो न बहिर्भवेत् ॥३५॥
यथा घटो भासते हि [2]बहिस्तद्वच्छरीरकम् ।
भासकाद् बहिरित्येवं वक्तुं वापि न सम्भवेत् ॥३६॥
दीपसूर्यालोकबहिर्गतानां[3] नहि भासनम् ।
अतस्तु भासकस्यान्तर्भास्यमस्तीति युज्यते ॥३७॥
भासकं तु न देहादिर्भास्यत्वात् पर्वतादिवत् ।
न सर्वथा यत्तु भास्यं भासकं तद्धि युज्यते ॥३८॥
भासकस्यापि भास्यत्वे भासकस्यानवस्थितिः ।
स्वस्यैव भासकत्वं च भास्यत्वं नहि युज्यते ॥३९॥

स्यादिति सम्भावयति—शरीरमिति ॥ ३४ ॥ शरीरस्यापि बहिष्ठत्वेनाभासनान्नापादानतेत्याह—तस्यापीति । अत्र दृष्टान्तः—पर्वतादिति । पर्वतो न बहिष्ठो भवेदित्यर्थः ॥ ३५ ॥ शरीरस्य बहिष्ठत्वे दृष्टान्तमाह —यथेति । अथ घटादिशरीरान्तर्भासक आत्मैवापादानमिति शङ्कते—भासकादिति । इत्येवं वा वक्तुमिति योजना ॥ ३६ ॥ ननु यदि भासकोऽपादानं तर्हि सूर्यालोकाद् बहिर्गतानामन्धकारस्थानामभासनमिव भासकाद् बहिष्ठानां भासनमेव न भवेदतो भासकान्तरेव भास्यमभ्युपेयम् । तथा च बहिष्ठानां भासक आत्मा नापादानमित्याह—दीपेत्यादि ॥३७॥ एतावता बहिःपदार्थस्यापादानानिरूपणाद्दर्पणेऽतिविततगगनाभासवद् भासकान्तरेव बहिःपदार्थावभास इति सिद्धम् । अथ भासकमात्रात्मता भास्यस्येति हेतोश्च भास्यस्य बहिःपदार्थस्य न भासकमपादानमिति वक्तुं भासकस्वरूपं विवेचयति—भासकं त्विति । नन्वस्तु स्थूलोऽहं पश्यामीत्यनुभवाद्देहस्य भास्यत्वं भासकत्वं चेति चेदाह—न सर्वथेति ॥ ३८ ॥ ननु भास्यस्यैव भासकत्वे का हानिरिति चेत्, यदि

१. दुपा–क० । २. प्राहु–क० ख० । ३. गतान्तं–क० ।

अतस्तु भासकं शुद्धं भासकैकस्वरूपकम् ।
तच्च भारूपमेवेह पूर्णमेकरसात्मकम् ॥४०॥
तेन व्याप्ता देशकाला भासनात्तस्य पूर्णता ।

एक एव देहः स्वात्मनः स्वयंवेद्यो[1] वेदकश्चेति चेदेकस्य कर्तृकर्मत्व-विरोधः, देहान्तरस्य[2] भास्यो भासकश्चेति चेत्[3] स्वस्याभासमानस्य भासकत्वासिद्धेर्भासकदेहानां परम्परया भासकान्तरापेक्षणान्मूल-क्षतिकरी भासकानवस्थेत्याह—भासकस्येति । नहि युज्यत इति । कर्तृ-कर्मत्वविरोधादिति शेषः ॥ ३९ ॥ अतः अनवस्थादिदोषात् । शुद्धम् [4]अभास्यमित्यर्थः । एतस्यैव स्पष्टोक्तिः—भासकैकस्वरूपकमिति । ननु भासकं भासनक्रियावत्, क्रिया चानित्यो धर्मः, तथा च भासकत्वस्य कालपरिच्छिन्नत्वात् कथं भासकैकस्वरूपकमिति चेदाह—तच्चेति । भासकमित्यर्थः । भारूपमेवेहेति । लोकवदिह न कर्तृक्रिययोर्भेदः, किन्तु क्रियात्मक एव कर्तेत्यर्थः । दर्पणप्रतिबिम्बवत् कार्यस्य स्वस्वरूपानति-रिक्तत्वेन स्वरूपातिरिक्तक्रियानुपयोग इति तात्पर्यम् । अत एव पूर्णमेक-रसात्मकं च । एकरसः वस्त्वन्तरासम्भिन्न आत्मा यस्य ॥ ४० ॥ तेन भारूपभासकेन । कुत इति चेदाह—भासनादिति । सर्वत्र भासनाद्देश-काला व्याप्ता इत्यर्थः । अत एव तस्य पूर्णता । नहि घटपटयोरिव भासकभास्ययोर्भासनम्, किन्तु दर्पणप्रतिबिम्बयोरिव । तथा च दर्पणस्य प्रतिबिम्बव्यापकत्वमिव भासकस्य भास्यव्यापकत्वमिति भावः । ननु दर्पणप्रतिबिम्बन्यायेन भास्यस्य[5] भासकानन्यत्वमलौकिकं कुतः कल्प्यत इति चेदाह—अभारूपस्येति । भारूपतादात्म्यानापन्नस्येत्यर्थः । अभानादिति । यदि भास्यस्य भारूपभासकानन्यत्वं नोच्यते, तदा तस्य भानमेव न स्यादित्यर्थः । अतो भास्यं भारूपैकरसमेव । अथ-

१. स्वयम्बोधो–क० । २. न्तरस्थभा–क० । ३. 'चेत्' नास्ति–क० ।
४. अभास्य–ख०, आभास्य–क० घ० । ५. भास्यभास–क० ।

अभारूपस्य चाभानाद् भारूपैकरसं हि तत् ॥४१॥
अन्तर्बहिर्वा यत् किञ्चिद् भारूपोदरसंस्थितम् ।
अतस्तन्नापादानं स्यात् शृङ्गस्येव हि पर्वतः ॥४२॥

मत्राऽभिप्रायः--यदि भास्यं भारूपबहिर्गतं तर्हि कथं तस्य भासनमुपपद्यते। नहि भासनं नीलादिरिव भास्यधर्मः, सर्वदा भासनप्रसक्तेः; मम भासत इति व्यवहारानुपपत्तेश्च । अन्यथा हि मम नील इति व्यवहारोऽपि स्यात् । ननु घटादौ सौरालोकवद् भास्ये भासनमन्यत उपनिपतितम् । तथा चान्यभासनसम्बन्धाद्भास्यभासनमुपपद्यत इति । स्यादेतद् घटसौरालोकयोः संयोग इव भास्यभासकयोस्तृतीयः सम्बन्धो यदि भवेत् । स एव न सम्भवति । तथा हि—किं स सम्बन्धो भास्यात्मकः, उत भासकात्मकः, आहोस्विदुभयात्मकः, अथवाऽनुभयात्मकः ? भास्यात्मकत्वे तद्भासनाय सम्बन्धान्तरापेक्षायामनवस्था। भासकात्मकत्वे भासकस्य भानमात्ररूपत्वेन [1]भानस्वरूपे भेदानुपपत्तेर्भूयो निरूपितत्वात् स्वस्य [2]स्वसम्बन्धताऽनुपपत्तिः । नोभयात्मकत्वम्, भासनभास्ययोश्चिज्जडात्मत्वेनैकस्य तदुभयरूपताविरोधात् । नाप्यनुभयात्मकत्वम्, अपसिद्धान्तात् । अनुभयात्मकं ह्यनिर्वचनीयम् । अनिर्वचनीयवादिनो हि भानात्मकब्रह्मरूपादन्यन्न किञ्चिदभ्युपगच्छन्ति । ते हि पूर्णे ब्रह्मणि [3]दृश्यमनिर्वचनीयमाभासमानमभ्युपगच्छन्तो[न्ति।] दृश्यस्य दर्पणप्रतिबिम्बतुल्यताभ्युपगतैव । यदाहुः—"विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गतम्" [द० स्तो० १] इति। तस्माद्दर्पणे प्रतिबिम्बवद्भानान्तरेव भास्यं भासत इति तज्जगदपि, दर्पणैकरसात्मकप्रतिबिम्बवद् भारूपैकरसमिति सिद्धम् ॥ ४१ ॥ अन्त इति। अन्तःपदार्थो बहिःपदार्थो वा यत्किञ्चिदपि भानान्तर्गतमेवेति हेतोः । तद् भासकमात्मरूपम् ।

१. भासन–क० ख० । २. 'स्व' नास्ति–क० । ३. सादृश्य–क० ।

एवंविधं हि भारूपं ग्रस्तसर्वप्रपञ्चकम् ।
भाति स्वतन्त्रतः स्वस्मिन् सर्वत्रापि च सर्वदा ॥४३॥
एतत् परा चितिः प्रोक्ता त्रिपुरा परमेश्वरी ।
ब्रह्मेत्याहुर्वेदविदो [1]विष्णुं वैष्णवसत्तमाः ॥४४॥
शिवं शैवोत्तमाः प्राहुः शक्तिं शक्तिपरायणाः ।
एतद्रूपादृते किञ्चिद् यदि ब्रूयुस्तदल्पकम् ॥४५॥
तया व्याप्तं तु चिच्छक्त्या दर्पणप्रतिबिम्बवत् ।

यथा पर्वतान्तर्गतशृङ्गविशेषस्य पर्वतो नापादानं तथेति ॥ ४२ ॥ एवमखिलजगच्चित्रभित्तिभूतबहिःपदार्थो[र्थोऽ]पादानासिद्ध्याऽसिद्ध इति भित्त्यसिद्धौ चित्रासिद्धिरिव देशकालादिभास्यरूपासिद्धावज्ञातरज्जोः[2] सर्पजलधाराभू[3]च्छिद्रत्वादिरूपवद् भासकस्यैव भानात्मनो महदल्पदेशकालादिरूपतेति संसाध्य सम्प्रति गगनान्तर्भासमानभिन्नभाववद्भानान्तरमपि भास्यं भिन्नमेव कुतो न भवेदित्याशङ्कां[4] शमयितुमुपक्रमते—एवंविधमिति । सर्वं स्वोदरे कृत्वा स्थितमित्यर्थः । तदेवाह—ग्रस्तेति । भातीति । सर्वत्र देशे सर्वदा काले स्वतन्त्रतोऽन्यानपेक्षं [5]सदेवंविधं भाति ॥ ४३ ॥ सर्वेषु शास्त्रेष्वेतदेव मुख्यत्वेन प्रतिपादितमित्याह—एतदिति । एतद्भारूपमेव परा चितिरपरिच्छिन्ना चिच्छक्तिस्त्रैपुरे शास्त्रे त्रिपुरा परमेश्वरीत्युच्यते ॥ ४४ ॥ शक्तिपरायणाः शाक्ताः । ननु नीलमेघश्यामादिमूर्त्तिं वैष्णवाद्या मुख्यत्वेनाहुरिति चेदाह—एतदिति । [6]परचितिरूपं विना यद्यन्यत् किञ्चिन्मुख्यं ब्रूयुस्तर्हि तदल्पकं कालदेशपरिच्छिन्नमेव भवेत् । तस्मात् त्रिपुरादिनाम्नाप्येतदेव मुख्यमिति वक्तव्यमिति भावः ॥ ४५ ॥ ननु ग्रस्तसर्वप्रपञ्चकमित्युक्त्या जगद्व्याप्तिराकाशस्येव[7] स्यादिति चेन्नेत्याह—तयेति । ननु

१. विष्णुं वै–घ० । २. रज्जौ–क० म० । ३. च्छिद्रादि–क० ।
४. शङ्क्य–क० । ५. सदैवं–क० । ६. परा–क० । ७. स्यैव–क० ।

तस्य भास्यकृतं भासकत्वं च न स्वतः स्थितम् ॥४६॥
भास्यं तु भाननिर्मग्नमादर्शे नगरादिवत् ।
दर्पणे नगरं यद्वद् दर्पणान्नातिरिच्यते ॥४७॥
तथा चिति जगद् भाति यत्तन्नैवातिरिच्यते ।
दर्पणात्मनि सम्पूर्णे निबिडे चैकरूपिणि ॥४८॥
यथा हि भिन्नं नगरं सर्वथा नोपपद्यते ।
तथा [1]पूर्णे सुनिबिडे चैकरूपे चिदात्मनि ॥४९॥

सर्वस्य जगतः स्वस्वरूपाव्यतिरिक्तत्वेऽपि चितेर्भासकत्वं घटादेर्नीलादिवद्भिन्न एव धर्मः स्यात् । तथा च भारूपस्य चाभानमिति भासकत्वस्याभानप्रसक्तिरिति चेदाह—तस्येति । भानस्येत्यर्थः । तस्य भास्यकृतत्वेनौपाधिकत्वात् स्फटिकस्थजपाकुसुमलौहित्यवत् तदपि प्रतिबिम्बात्मकमेवेति भावः ॥ ४६ ॥ तस्मादादर्शे नगरादिवत् सर्वं भास्यं भाननिर्मग्नमेवेत्याह—भास्यं त्विति । दर्पणे भासमाननगरादेर्दर्पणानन्यत्ववच्चिति भासमानस्य प्रपञ्चस्य चिदव्यतिरिक्तत्वमित्याह—दर्पण इति ॥ ४७ ॥ तथा प्रतिबिम्बत्वेन चिति[2] यज्जगद्भातीत्यन्वयः । ननु दर्पणप्रतिबिम्बवदेव चिति जगद्भासनमिति कोऽयं निर्बन्धः, गगने जगद्भासनवदेव कुतो नाभ्युपेयत इति चेदाह—दर्पणेति । सम्पूर्णे छिद्ररहिते, निबिडे अशिथिलावयवे, एकरूपिणि वस्त्वन्तरासम्भिन्ने । सच्छिद्रे हि पृष्ठतः स्थितं भासते, शिथिलावयवे ह्यवयवसन्धिसन्निविष्टं वस्त्वन्तरं भासते, वस्तुसमुदाये च समुदितं विचित्रं भासते, दर्पणस्य त्वनैवंविधत्वाद्दर्पणाद्भिन्नस्य तत्र भानं नोपपद्यत इति भावः ॥ ४८ ॥ यथा नोपपद्यते तथोपपत्तिं न समश्नुत इत्यन्वयः । ननु दर्पणे न प्रतिबिम्ब इति कश्चन विशेषः, किन्तु दर्पणप्रतिरुद्धैः परावृत्तैश्चक्षुरश्मिभिर्बिम्बस्यैव ग्रहणमिति चेन्न, भित्ति-

१. पूर्णेऽस्तु—क० । २. चितिवज्ज—क० ।

जगत् सर्वात्मना नैव ह्युपपत्तिं समश्नुते ।
आकाशस्त्ववकाशात्मा शून्यरूपत्वहेतुतः ॥५०॥
द्वैतं जगत् प्रसहते सर्वत्रैव हि सर्वदा ।
सती चितिरशून्यात्मरूपिण्येकरसा कथम् ॥५१॥

प्रतिरुद्धैरपि तैर्मुखग्रहणप्रसङ्गात् । न च नैर्मल्यं हि प्रतिरोधे तन्त्रमिति वाच्यम्, सौरालोकादौ भित्त्यादिप्रतिरोधदर्शनेन प्रतिरोधे काठिन्यस्यैव नियामकत्वस्य क्लृप्तत्वात्, रसासम्पृक्तेन निर्मलेनाऽपि दर्पणेन प्रतिरोधादर्शनाच्च, दर्पणपार्श्वन्यस्तहस्तस्य प्रतिबिम्बेन सह युगपद्ग्रहणानुपपत्तेश्च, प्रतिबिम्बमुखादेर्दर्पणाश्रयत्व[1]सम्मुखत्वावभासानुपपत्तेश्च । न च चाक्षुषरश्मीनां दर्पणसम्पर्कदोषादेव मुखे दर्पणाश्रयत्वादेः पार्श्वन्यस्तहस्ते द्वित्वस्य च भ्रान्त्याभासः सम्भवति, प्रतिबिम्बे यादृशदर्पणादिधर्मस्य निमित्तत्वं तादृशधर्मस्यैव चाक्षुषरश्मिप्रतिरोधनियामकत्वं चेति सर्वं समञ्जसमिति वाच्यम्; दर्पणसामर्थ्यात् स्वसम्पृक्तचाक्षुषरश्मीनां हस्तमुखादौ द्वित्वदर्पणाद्याश्रयत्वावभासकत्वकल्पनातो दर्पणे प्रतिबिम्बकल्पनस्यैव युक्तत्वात् । एवं च मुखानुकारोऽयं दर्पण इत्याद्यभ्रान्तप्रत्यया अप्यनुगृहीता भवेरन्नि[युरि]ति ध्येयम् ॥४९॥ जगदित्यस्य चिदात्मनो भिन्नमित्यादिः । आकाशस्य चिदात्मवैसादृश्यान्नैवमित्याह—आकाशस्त्विति । तुरिति सादृश्यव्यावर्तकः । अवकाशो रिक्त आत्मा यस्य । कुत इति चेदाह—शून्यरूपेति । अभावरूपत्वादित्यर्थः । पृथिव्यादिचतुष्टयाभाव एवाकाश इति तात्पर्यम् ॥ ५० ॥ अत एव सर्वकाले सर्वत्र स्वदेहे द्वैतं स्वस्माद्भिन्नं जगत् प्रसहते । चिदात्मा त्वनैवंविधत्वात् स्वान्तर्द्वैतं कथं प्रसहेतेत्याह—सतीति । सद्रूपत्वा-

१. श्रयत्वा–घ० ।

द्वितीयलेशं प्रसहेदादर्शात्मवदञ्जसा ।
तस्मादादर्शवत् संवित् स्वातन्त्र्यभरवैभवात् ॥५२॥
भासयेदद्वितीये स्वे रूपे सर्वं चराचरम् ।
निमित्तोपादानहीनं द्वितीयमतिचित्रितम् ॥५३॥
यथाऽनेकरूपविधे भासमानेऽपि दर्पणे ।
एकत्वं भासते स्पष्टमविशेषाददूषितम् ॥५४॥
तथा विचित्रे जगति भासमानेऽप्यनेकधा ।
अनुसन्धानसंसिद्धमेकं दोषविवर्जितम् ॥५५॥
राजन् स्वात्मनि सम्पश्य मनोराज्यदशास्थितिम् ।

देवाशून्यात्मरूपत्वम् । एकरसत्वं निबिडस्वरूपता ॥५१॥ आदर्शो यथा सद्रूपत्वेनाशून्यात्मा अशिथिलावयवत्वेनैकरसो यथा द्वितीयं स्वान्तर्न सहते, एवं चितिरपीत्याह—आदर्शेति । तस्मादिति । चिदात्मनः स्वान्तर्द्वितीयस्यानुपपत्तेरित्यर्थः । आदर्शवत् संवित् स्वातन्त्र्यभरवैभवादात्मन्यद्वितीयेऽवभासयेदिति सम्बन्धः ॥ ५२ ॥ दर्पणवन्न बिम्बापेक्षेत्युक्तम्—स्वातन्त्र्यभरवैभवाद् भासयेदिति । स्वातन्त्र्यमनन्यापेक्षत्वम् । तस्य भर आधिक्यम् । अपरिच्छिन्नस्वातन्त्र्यमित्येतत् । तस्य वैभवान्माहात्म्यात् । अद्वितीये अखण्डे चिदेकरसे स्वे रूपे[1] अद्वितीये । सर्वं चराचरं निमित्तोपादानाभ्यां हीनं रहितम् । अतिचित्रितं परस्परविलक्षणं भासयेत् ॥ ५३ ॥ एवं विचित्रानेकरूपत्वेन भासमानस्यापि चिदात्मन एकत्वमबाधितमेवेति सदृष्टान्तमाह—यथेति । तत्तत्प्रतिबिम्बरूपेणानेकविधे । अविशेषात् दर्पणसामान्यरूपात् । अदूषितमबाधितम् ॥५४॥ विचित्रे जगति स्वात्मस्थे भासमानेऽपि योऽहं प्राक् [2]स्वाप्नानन्वभूवं स एवाहमिदानीं जागरमनुभवामीत्याद्यनुसन्धानशतेन सम्यक्सिद्धमेकमबाधितं स्वरू-

---

१. स्वरूपे–क० । २. स्वप्ना–क० ।

अनेकवैचित्र्यवपुरपि चैतन्यमात्रकम् ॥५६॥
सृष्टौ वा प्रलये वापि निर्विकल्पैव सा चितिः ।
प्रतिबिम्बस्य भावे वाप्यभावे वेव[1] दर्पणः ॥५७॥
एवंविधैकरूपापि चितिः स्वातन्त्र्यहेतुतः ।
स्वान्तर्विभासयेद् बाह्यमादर्शे गगनं यथा ॥५८॥

पम् ॥ ५५ ॥ एवं दर्पणदृष्टान्तेन साधितमपि जगच्चिदात्मैकरूपमिति सम्यग् हृदयङ्गमाय दृष्टान्तान्तरेण निरूपयति—राजन्निति । अनेकवैचित्र्यरूपापि मनोराज्यस्थितिश्चैतन्यमात्रात्मिका । मनोराज्यं नाम[2] मानसः सङ्कल्परूपः । सङ्कल्पकाले हि स्वान्तरखिलं भासते । तच्च प्रतिबिम्बविधयैवेति वक्तव्यम् । न तत्र बिम्बाद्यपेक्षा दृश्यते । तथा चायं पूर्णो दृष्टान्त इति ज्ञेयम् । न च मनोराज्ये संस्कारस्य भावसूक्ष्मरूपस्यापेक्षास्तीति वाच्यम्, संस्कारात्मकभावस्य प्रतिबिम्बाधायकत्वस्याक्लृप्तत्वात् । अन्यथा घटसंस्कारवद् मृत्पिण्डसाम्मुख्येऽपि दर्पणे घटप्रतिबिम्बापत्तेः ॥ ५६ ॥ यस्माद्दर्पणप्रतिबिम्बमनोराज्यतुल्यता दृश्यप्रपञ्चस्य तस्मादाह—सृष्टाविति । यथा प्रतिबिम्बस्य सत्त्वदशायामसत्त्वदशायां च दर्पणस्य दर्पणमात्रात्मत्वम्, एवं सृष्टौ प्रपञ्चभासनकाले प्रलये तदभासनकाले च सा परा चितिर्निर्विकल्पैव । चितिमात्ररूपैवेति भावः ॥५७॥ एतावता ग्रन्थेनैकस्यैव कालस्य देशस्य च युगपदल्पत्वं[3] बहुत्वं कथमिति कृतप्रश्नस्य बाह्यसृष्टेर्मनोराज्यतुल्यत्वेन कल्पनामात्रसारत्वान्न कश्चन विरोध इति समाधानमुक्तम् । सृष्टेः कल्पनामात्रसारत्वेन चितेः सदा निर्विकल्पकरूपत्वे कथं निर्विकल्पचितेरेषा विकल्पमयी सृष्टिः प्रवृत्तेत्याशङ्कायामागमाभ्युपगतषट्त्रिंशत्तत्त्वक्रमेण सृष्टिं निरूपयितुमादौ सर्वसृष्टिनिदानाविद्योद्भवं वक्तुमुपक्रमते—एवमिति । निर्विकल्पचिदेकरसरूपा-

१. नैव—ख०। २. वा—क० । ३. दन्यत्वं—क० ।

एषा हि प्रथमा सृष्टिरविद्या तम उच्यते ।
पूर्णस्यांशेनेव भानं बाह्याभासनमुच्यते ॥५९॥

पीत्यर्थः। आदर्शे यथा गगनं भासते, एवं सा चितिः स्वान्तर्बाह्यं पदार्थं बहिरिति पदस्यार्थभूतमवभासयेत्। ननु दर्पणे बिम्बभूतबाह्यगगननिमित्तको गगनाभासः, चिदात्मनि बाह्याभासे किं निमित्तमिति चेदाह—स्वातन्त्र्यहेतुत इति। स्वातन्त्र्यमनन्यापेक्षता, तद्रूपहेतुत इत्यर्थः। दर्पणस्य जडत्वेन पारतन्त्र्याद् बिम्बापेक्षा। चितेरजडत्वेन स्वातन्त्र्यान्न बिम्बापेक्षेति। यदाहुः—

अन्तर्विभाति सकलं जगदात्मनीह
यद्वद् विचित्ररचना मुकुरान्तराले।
बोधः [1]पुनर्निजविमर्शनसारयुक्त्या
विश्वं परामृशति नो मुकुरस्तथा तु॥ इति ॥५८॥
[ त० सा० पृ० १६ ]

एषेति बाह्यार्थावभासनरूपा। सर्वसृष्टेरेतदवभासनपूर्वकत्वात् प्रथमा। एतद्बाह्यावभासनमेवाविद्येति तम इति चोच्यते। ननु पूर्णस्य चिदात्मनः कथं बाह्यावभासनमिति चेदाह—पूर्णस्येति। वस्तुतोऽशाभावादंशेनेवेति। स्वस्य एकांशेनेव यद्भानं तदेव बाह्याभासनमिति। परमेश्वरो हि निर्विकल्पचिदेकवपुर्जडव्यावृत्तरूपत्वात् स्वतन्त्र इत्युच्यते। जडस्य स्वपराभासनेऽन्यापेक्षणात् पारतन्त्र्यमुच्यते। चिदात्मनः स्वपरावभासनेऽन्यानपेक्षणात् स्वातन्त्र्यमुच्यते। एतत् स्वातन्त्र्यमेव शक्तिः, क्रिया, विमर्श इत्यादिशब्दैरागमेषूच्यते। एतच्च स्वातन्त्र्यं सृष्टौ जगदवभासनविषयम्। प्रलयादौ स्वरूपमात्रावभासनविषयम्, प्रलयादावपि स्वरूपस्फूर्तेरक्षतत्वात्।

1. अत्रैव १६८ पृष्ठस्थे टिप्पण्यौ द्रष्टव्ये।

पूर्णाहम्भावविच्छेदादनहम्भावरूपता ।
एषैवाव्यक्तमित्युक्ता जडशक्तिश्च कथ्यते ॥६०॥

( तथा[1] चैतत् स्वातन्त्र्यं नित्यानन्यधर्मः शिवस्योच्यते । ) प्रलयान्ते च तदेव स्वातन्त्र्यं परिपक्वप्राण्यदृष्टसहकृतं सद् अंशेनेवावभासयति स्वरूपम् । परिच्छिन्नत्वेनावभासयतीति यावत् । एतदेव बाह्यावभासनम् । यतः परिच्छिन्नात्माभासनं हि स्वव्यतिरिक्तदेशाभासनाविनाभूतमिति स्पष्टमेव ॥५६॥ बाह्यस्यैव स्वरूपं भूयो विवेचयति—पूर्णेति । स्वदेहं व्याप्ता पूर्णाहन्ता यथा छिन्ने हस्ते, अनहम्भावरूपता अहंभावरूपता न भवति, एवमात्मनः परिच्छेदभासनेन परिच्छिन्नेतरांशेऽनहम्भावरूपता । अहम्भावोऽहन्त्वं तद्रूपभिन्नत्वं भवति । अहम्भावरूपधर्मरहिततेति[२] तात्पर्यम् । आत्मन्येतद्भासनमेव बाह्यभासनम् । एवंरूपतैवाव्यक्तं जडशक्तिरिति च कथ्यते । एवं च पूर्णचिदात्मनः स्वातन्त्र्यशक्त्या स्वात्मनः परिच्छेदावभासनात्मकमविद्याख्यबाह्यावभासनं भगवतः प्राथमिकी सृष्टिरित्युक्तम् । इदमेव बाह्याभासनमौपनिषदानां मते मूलाविद्येत्युच्यते । स्वातन्त्र्यं च भगवतश्चिच्छक्तिरेव । तस्याश्चावस्थात्रयम्—प्रलयादिनिर्विकल्पदशायां चिच्छक्तिरूपता, तदन्ते विकल्पाभिमुख्यदशायां मायाशक्तिरूपता, विकल्पदशायामविद्यात्मकजडशक्तिरूपतेति । एतदेव क्वचित् चित्प्रकृतिः, मायाऽविद्ययोरैक्येन जडप्रकृतिरिति च द्वैविध्येन निरूपितम् । यदाह भगवान्—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ इति ।

[ भ० गी० ७।४-५ ]

1. कोष्ठान्तर्गतः पाठो घपुस्तके नास्ति । अप्रासङ्गिक इव च प्रतीयते ।
२. रहितेति–घ० ।

या चितिश्चात्र विच्छिन्नाभासिनी बहिरात्मनः ।
शिवतत्त्वमिति प्रोक्ता शक्तिस्तद्भासनं भवेत् ॥६१॥

भूम्याद्यष्टविधा प्रकृतिर्जडप्रकृतिरपरा कार्यभूता । परा प्रकृतिस्तु चिच्छक्तिः प्रतिबिम्बानां दर्पणतुल्यत्वाद् जगज्जीवभूता । अत एव ययाऽष्टप्रकृत्यात्मकं जगद्धार्यत इत्युक्तम् । ननु जडशक्त्यवभासनात् पूर्वमेतत् [ मेव ] कारणस्वातन्त्र्यसहकारित्वेन प्राण्यदृष्टम्, तत्परिपाकः, परिपाचकः काल इत्येतावदवश्यमभ्युपगन्तव्यम्, अन्यथा वैषम्यादिदोषप्रसक्तिः । तथा चैतदभ्युपगमे सृष्टेः पूर्वमद्वितीयचिदात्ममात्रपरिशेषाभ्युपगमहानिः । अथ च प्राण्यदृष्टपरिपाचको हि कालः, स चेश्वररूपो वाऽतिरिक्तो वा ? उभयथाऽपि तस्य प्रलये भेदकोपाध्यन्तराभावेन प्रलयारम्भात् समाप्तिपर्यन्तमविशेषादेकरूपत्वेन प्रलयारम्भद्वितीयादिक्षणे एवादृष्टपरिपाकेन सृष्ट्यापत्तिरिति चेदत्राहुः—सत्कार्यवादे हि सृष्टेः पूर्वमपि निखिलकार्यस्य सूक्ष्मरूपेण मायायां प्रलीनत्वान्मायाप्रलीनप्राण्यदृष्टस्य तत्प्रलीनसूक्ष्मकाल एव परिपाचकः । तथाविधमायायाः शक्तित्वेनैव चिदात्माव्यतिरेकादद्वैताभ्युपगमनिर्वाहश्चेति । परे तु सृष्टेः स्वप्नमनोराज्यैन्द्रजालिकसृष्टितुल्यत्वेन न तत्रोपपत्तिप्रयोजनगन्धोऽपि । यथा हि मरुमरीचिकातोयादेरनुपपद्यमान एव स्वभावः, एवं सृष्टेरपि । अत एवागमेषु सृष्टिनिरूपणप्रक्रियाभेदोऽपि सङ्गच्छते । आत्मव्यतिरेकेण निषेध्यायाः सृष्टेः क्रमनिरूपणं कथञ्चिन्निषेध्यस्य चित्तारूढाय । अत एव—"न सृष्टिर्नापि संहारो न स्थितिर्नापि च क्रमः । चिदानन्दघनं चेत्थमात्मतत्त्वं प्रकाशते ॥" इति पारमेश्वराद्यागमवचनसङ्गतिरिति प्राहुः ॥ ६० ॥ एवं सृष्टेराद्यमविद्योल्लासमुक्त्वा तत्त्वक्रमेण सृष्टिं निरूपयिष्यन्नादौ शिवतत्त्वं विभजति—या चितिरिति । अत्र तत्त्वं नाम तस्य भावस्तत्त्वमित्या[1]

---

१. मित्याह महा—क० ख० ।

बहीरूपं महाशून्यं कल्पितं यत्तदेव तु।
अहम्भावाच्छादनेन सदाशिवमयं स्मृतम् ॥६२॥

महाप्रलयस्थायि पृथिव्यादिसामान्यरूपम्। तथा हि—पृथिव्यादिसामान्यरूपमा महाप्रलयस्थायि भवति, नैवं घटादिसामान्यम्। भूतलयो हि महाप्रलयः, भौतिकघटादेस्ततः प्रागेव नाशात्। अत्र सृष्टिकाले। बहिरात्मनोऽविद्याख्या या चितिर्विच्छिन्नत्वेनावभासिनी सा शिवतत्त्वमिति प्रोक्ता भवति। अयं भावः—परचिदात्मनः स्वातन्त्र्यात् पूर्णस्यांशेनैवावभासनमित्युक्तम् ( [1]तत्त्वांशेनावभासनं )। यथा हि निस्तरङ्गैकरूपाम्बुधेरकस्मात् परस्परं भेदिनां तरङ्गानामुदयः, एवं परचिदात्मन्यनन्तपरिच्छिन्नस्वांशानामुदयः। तथा च तत्तत्परिच्छिन्नचिदंशदृष्ट्या स्वेतरबाह्यभासः। पूर्णात्मनः परशिवस्य तु न बाह्याभास इति स्थितिः। तत्र परिच्छिन्नानन्तशुद्धचिदंशानुगतं सामान्यं शिवतत्त्वमुच्यते। न चेदमेव शिवतत्त्वं परशिवरूपमिति वाच्यम्, सामान्यरूपस्याखिलविशेषगर्भितत्वेन परशिवरूपस्य निःसामान्यविशेषत्वादिति। तथा च परिच्छिन्ननिर्विकल्पचितिसामान्यं शिवतत्त्वमिति पर्यवसितम्। शक्तिरिति। तस्याः परिच्छिन्ननिर्विकल्पचितेरहमिति यद्भासनं तद्भासनसामान्यं शक्तितत्त्वं द्वितीयम्। यद्यपि "प्रकाशस्यात्मविश्रान्तिरहम्भावो हि कीर्त्तितः" [ अज० प्र० सि० २२ ] इत्युक्त्याहम्भासनं चितेः स्वरूपमेव, तथा च शिवशक्तितत्त्वयोर्न भेदः, तथापि निर्विकल्पचितित्वेन शिवतत्त्वात्मता, अहम्भासनत्वेन शक्तितत्त्वतेति ज्ञेयम् ॥ ६१ ॥ यच्च परिच्छिन्नचितिदृष्ट्या बहिःपदार्थरूपमविद्याख्यं भाति, तज्जगच्चित्राश्रयत्वेन महाकाशतुल्यत्वान्महाशून्यं स्वात्मनः परिच्छेदाभासमात्रोल्लसितत्वात् कल्पितम्। एवंविधं बहीरूपं यदाऽहमेवेदमित्यहम्भावेनाहन्त्वेनाच्छादयति, तदा

1. कोष्ठान्तर्गतः पाठो घपुस्तके नास्ति। अप्रासङ्गिक इव च प्रतीयते।

तदेव जाड्यमुख्यत्वे ईश्वराख्यं प्रचक्षते ।
अनयोः संवेदनं तु भेदाभेदविमर्शनम् ॥६३॥
शुद्धविद्येति सम्प्रोक्तमेतावच्छुद्धमुच्यते ।
भेदशक्तेरप्ररूढ्या चाभेदात्मावभासनात् ॥६४॥

सदाशिवमयं तृतीयं तत्त्वं स्मृतम्। सैव परिच्छिन्नचितिः स्वस्माद् व्यावृत्तं वहीरूपमहमिदमिति सामानाधिकरण्येनाहम्प्रत्ययविषयत्वेनावभासयति। एवमाभासात्मकपरिच्छिन्नचितिसामान्यं तृतीयं सदाशिवतत्त्वमिति भावः ॥ ६२ ॥ तदेव सदाशिवतत्त्वमेव। जाड्यमुख्यत्वे तुर्यमीश्वराख्यं तत्त्वम्। अहमिदमिति चिदात्मकाहमंशेन बहीरूपेदमंशनिषेकाच्चित्प्रधानाभासनरूपं सदाशिवतत्त्वम्। ईश्वरतत्त्वं तु इदमहमिति जडात्मकेदमंशेन चिद्रूपाहमंशनिषेकाज्जाड्यप्रधानाभासनरूप(¹मीश्वरतत्त्व)मिति भावः। अनयोः सदाशिवेश्वरयोर्भेदाभेदविमर्शनरूपमहमिदमिदमहमिति यत्संवेदनमाभासनं तत् पञ्चमं तत्त्वं शुद्धविद्येति सम्प्रोक्तमित्यन्वयः। यद्यपि भेदाभेदविमर्शनात्मकाहमिदमिदमहमिति सामानाधिकरण्याभासनमेव क्रमात् सदाशिवतत्त्वमीश्वरतत्त्वं च, तथाप्युभयविधाभासनानुगतसामान्यरूपेण ताभ्यां भिन्नं पञ्चमं शुद्धविद्यातत्त्वं ज्ञेयम् ॥ ६३ ॥ एतावदिति। शिवादिशुद्धविद्यान्तं तत्त्वपञ्चकमित्यर्थः। शुद्धमिति। शुद्धम्, मिश्रम्, अशुद्धमिति त्रिविधं तत्त्वम्। तत्रैतत्पञ्चकं शुद्धमित्यागमेषूच्यते। अत्र हेतुः—अभेदात्मावभासनादिति। अद्वितीयचिन्मात्रात्मनाऽवभासनात्। अत्रापि हेतुमाह—भेदशक्तेरप्ररूढ्येति। भेदशक्तिः प्रोक्तजडशक्तिः, तस्या अप्ररूढिः परिणतकार्यरूपत्वाभावः, तयेत्यर्थः। बहिरवभासरूपा (या) जडशक्तिर्बीजाङ्कुरवृक्षवदवस्थात्रयवती। यथा हि बीजेऽङ्कुराद्यात्मकभेदस्याप्ररूढिरेवं जडशक्तौ स्वप्राधान्यकार्यरूपभेदाप्ररूढि-

1. 'ईश्वरतत्त्वम्' इति पाठोऽनावश्यकः, तथापि सर्वासु मातृकासु दृश्यते।

अथ चित्स्वातन्त्र्यभरात् प्ररूढे भेदभावने ।
जडशक्तिर्धर्मिभावं चितिर्धर्मात्मतां ययौ ॥६५॥
तदा सा जडशक्तिस्तु मायातत्त्वं प्रचक्षते ।
माया विभेदबुद्धिस्तु भेदप्रचुरभावनात् ॥६६॥
भेदप्रचुरसंवीता चितिः सङ्कुचितात्मिका ।
पञ्चकञ्चुकसंव्याप्ता पुरुषत्वं प्रपद्यते ॥६७॥

स्तदा चिदात्मनोऽपृथग्भूय भासनाच्चित्प्राधान्याच्छुद्धत्वम् । यदा ह्यङ्कुरवज्जडशक्तेः[1] सूक्ष्मकार्यरूपभेदप्ररूढिः, तदा चिदचिदुभयप्राधान्यान्मिश्रत्वं मायादिपुरुषान्ततत्त्वसप्तकस्य । यदा वृक्षवत् स्थूलकार्यरूपभेदप्ररूढिः, तदाऽचित्प्राधान्यादशुद्धत्वं प्रकृत्यादिपृथिव्यन्तचतुर्विंशतितत्त्वस्येति भावः ॥ ६४ ॥ अथ शुद्धतत्त्वसृष्ट्यनन्तरम् । चिदात्मनः स्वातन्त्र्यस्य भर आधिक्यम्, तस्माद् भेदभावने प्ररूढे सति । शुद्धतत्त्वपञ्चके हि भेदस्य जडशक्तेरह[2]मिदमित्यादिरूपेण चितिनिर्मग्नत्वादप्ररूढिः, सम्प्रति चितेरुन्मग्नत्वेन भेदभावने प्ररूढे सति । भेदभावनं भेदसङ्कल्पः । शुद्धतत्त्वेषु चिदंशस्य धर्मित्वं जडांशस्य तन्निर्मग्नत्वेनाभिन्नधर्मत्वम् । प्रकृते हि तद्व्यत्यय इत्याह—जडशक्तिरिति ॥ ६५ ॥ तदा एवं धर्मधर्मिभावव्यत्यासे सति । सा धर्मित्वं प्राप्ता जडशक्तिर्मायातत्त्वम् । तत्स्वरूपमाह—मायेति । भेदस्य जडशक्तेः[3] प्रचुरत्वेन धर्मित्वेन भावनाद्विभेदबुद्धिसामान्यरूपिणी माया मायाख्यं तत्त्वम् ॥ ६६ ॥ भेदस्य प्रचुरं प्राचुर्यम्, तेन संवीता व्याप्ता चितिः, भेदाधिक्ये चिदंशाच्छादनात् सङ्कुचितात्मिका चितिः, वक्ष्यमाणपञ्चकञ्चुकैर्व्याप्ता कञ्चुकिता पुरुषत्वं प्रपद्यते प्राप्नोति । पञ्चकञ्चुकितचितिसामान्यं पुरुषतत्त्वं भवेदिति भावः । यद्यपि मायाऽनन्तरं कलादि-

---

१. जडचितोः—क० ख० । २. 'मिद' नास्ति—क० ख० ।
३. शक्तिप्रचु—क० ख० ।

कलाविद्यारागकालनियतिः पञ्चकञ्चुकम् ।
कला किञ्चित्कर्तृता स्याद्विद्या किञ्चिज्ज्ञता भवेत् ॥६८॥
रागस्तृष्णा परिच्छित्तिरायुषा काल उच्यते ।
नियतिः परतन्त्रत्वमेतैर्युक्तस्तु पूरुषः ॥६९॥
चितिशक्तिमधिष्ठाय विचित्रानादिकर्मणाम् ।
जनानां वासनापिण्डः स्थितः प्रकृतिरुच्यते ॥७०॥
फलं तु त्रिविधं यस्मात् कर्मणां सा त्रिरूपिणी ।
अस्या अवस्थाभेदो हि चित्तमित्यभिधीयते ॥७१॥

पञ्चकं तदनन्तरमेव पुरुषतत्त्वमित्यागमिकः क्रमः, तथापि कलादेः पुरुषधर्मत्वेन पुरुषस्य प्राधान्यादादौ निरूपणं ज्ञेयम् ॥६७॥ कञ्चुकान्येवाह—कलेति। तेषां स्वरूपमाह—कला किञ्चिदिति। किञ्चित्कर्तृत्वं कला। किञ्चिज्ज्ञत्वं विद्या ॥ ६८ ॥ तृष्णा इदं मे स्यादिति विषयसामान्येच्छा रागः। शतवर्षादिरूपायुषा परिच्छित्तिः परिच्छेदः कालः। किञ्चित्करणे तत्साधनापेक्षारूपपरतन्त्रत्वं नियतिः। एतैः कलादिनियत्यन्तैः प्रोक्तैः पञ्चभिः कञ्चुकैः, युक्तो वेष्टितः, परिच्छिन्नतामापादितः पुरुषः। परमशिवस्य सर्वकर्तृत्वं सर्वज्ञत्वं नित्यतृप्तत्वं नित्यत्वं स्वतन्त्रत्वं चेति पञ्च शक्तयः। ता इमाः सङ्कुचिताः पुरुषस्य पञ्च कञ्चुकानीत्युच्यन्ते। एवं च किञ्चित्कर्तृत्वादि प्रतिपुरुषं भिन्नं तत्सामान्यं कलादितत्त्वमिति भावः ॥ ६९ ॥ चितिशक्तिमिति। विचित्राणि शुक्लकृष्णाद्यनेकविधानि, अनादिकालतः पारम्पर्येण प्रवृत्तानि यानि जनानां कर्माणि, तेषां वासनाः संस्कारा अदृष्टाभिधाः, तासां पिण्डः समुदायः। चितिशक्तिं चिदात्मनो ज्ञानशक्तिरूपं प्रकाशांशमधिष्ठाय आश्रित्य स्थितः प्रकृतिरित्युच्यत इत्यर्थः। जीवसम्बन्धी प्राक्कृतकर्मसंस्कारपिण्ड एव प्रकृतिरिति तात्पर्यम् ॥ ७० ॥ कर्मणां फलस्य सुखदुःखमोहरूपत्वेन त्रैविध्यात् तत्फलजनककर्मवासनापि त्रिविधेति सत्त्वरजस्तमोमयी प्रकृति-

सुषुप्तौ प्रकृतिर्ज्ञेया तदन्ते चित्तमुच्यते ।
वासनापिण्डसहिता चितिश्चित्तमुदीरितम् ॥७२॥
अव्यक्तमेतदेवोक्तं वासनापिण्डभावतः ।
पुरुषाणां विभेदेन चित्तं बहुविधं भवेत् ॥७३॥
जीवानामविभेदेन सुषुप्तावेकधा हि तत् ।
प्रकृतित्वं समायाति तदन्ते चित्ततामियात् ॥७४॥

त्रिरूपिणीत्याह—फलं त्विति । अस्याः प्रकृतेः ॥ ७१ ॥ एतदेवाह—सुषुप्ताविति । सुषुप्तिकाले स वासनापिण्डः प्रकृतिरित्युच्यते । तदन्ते सुषुप्त्यन्ते जाग्रत्स्वप्नयोरादौ स एव वासनापिण्डश्चित्तमित्युच्यते । या हि वासनापिण्डसहिता चितिशक्तिः प्रकृतिरित्युक्ता सुषुप्तौ, सैव कालान्तरे चित्तमित्युच्यत इत्याह—वासनेति ॥ ७२ ॥ उभयोरेकतां द्रढयितुं प्रकृतिरेव चित्तमित्युक्त्वा भूयश्चित्तमेव प्रकृतिरित्याह—अव्यक्तमिति । वासनापिण्डभावत इति । प्रकृतिचित्तयोर्वासनापिण्डत्वरूपैकरूप्यान्न भेद इति तात्पर्यम् । अथ चित्तप्रकृत्योः स्वरूपभेदं वक्तुमाह—पुरुषाणामिति । पुरुषभेदेन चित्तं भिन्नम्, अतो बहुविधमित्यर्थः ॥ ७३ ॥ एवं पुरुषभेदेन भिन्नमपि चित्तं सुषुप्तौ जीवानामभेदहेतुनैकधा भवति, एवमेकीभूतं तत् चित्तमेव प्रकृतिः, सैव सुषुप्त्यन्ते विभिन्ना चित्तमित्याह—जीवानामिति । तच्चित्तम् । तदन्ते सुषुप्त्यन्ते । जीवो हि परिच्छिन्नचिद्रूपः, परिच्छेदश्च देहादिकृतः, देहादेश्च जाग्रत्स्वप्नयोर्विभिन्नत्वाज्जीवानां भेदो युक्तः । सुषुप्तौ तु देहादेरनवभासनात् तत्परिच्छेदाभासनमप्यात्मनि नास्तीति निस्तरङ्गसमुद्रे तरङ्गानामभेद इव जीवानामभेदः । जीवानामभेदे च तद्गतकर्मवासनानामप्येकराशिता । सेयं प्रकृतिः । सुषुप्तिर्नाम परिपक्वकर्मणां भोगेन क्षयेऽन्येषामपरिपाके सति दग्धेन्धनानलवच्चिदात्मनो ज्ञानशक्तेर्विषयसंयोजकपरिपक्व-[1]कर्माभावेनाऽबहिर्मुखत्वे मध्ये भोगरहितदशाविशेषः । एवं स्थितेऽ-

१. 'कर्मभावेन' इति—क० ख० पाठोऽशुद्धः ।

एतदेव पुमान् प्रोक्तश्चितिप्राधान्यहेतुना ।
अव्यक्तप्राधान्यतस्तु चित्तप्रकृतितामियात् ॥७५॥
क्रियाभेदात् तत् त्रिविधमन्तःकरणमुच्यते ।
अहङ्कारबुद्धिमनोरूपेण नृपसत्तम ॥७६॥
ज्ञानकर्मेन्द्रियाणां तु पञ्चकं स्यात्ततः पृथक् ।
शब्दादिगगनादीनि भूतानि स्थूलसूक्ष्मतः ॥७७॥

परिपक्वकर्मसु तावता सुषुप्तिकालेन केषाञ्चित् परिपाके सति परिपक्वकर्मणा[1] ज्ञानशक्तिर्विषयाभासेन संयोज्यते । एवं विषयसंयोजककर्मवासनापिण्डविशिष्टा ज्ञानशक्तिरेव चित्तमिति भावः ॥७४॥ एतदेव चित्तमेव । चित्तमेव चित्प्राधान्यविवक्षायां पुरुष इत्युच्यते । प्रकृतिप्राधान्यविवक्षायां चित्तमित्युच्यत इत्याह—पुमान् प्रोक्त इत्यादि । चित्तप्रकृतितां चित्तरूपताम् । यद्वा चित्ततां प्रकृतितां चेत्यर्थः । एवं च चित्तं न तत्त्वान्तरम्, किन्तु पुरुषे प्रकृतौ वाऽन्तर्भूतमिति विशिष्टग्रन्थतात्पर्यम् ॥७५॥ एवंविधं प्रकृतितत्त्वं त्रिगुणात्मकमेवान्तःकरणमित्युच्यते । तच्च त्रिविधम्, अभिमाननिश्चयसङ्कल्पात्मकत्रिविधक्रियावत्त्वादित्याह—क्रियाभेदादिति । क्रियाभेदात् तत्प्रकृतितत्त्वमहङ्कारबुद्धिमनोरूपेण त्रिविधमित्यर्थः ॥ ७६ ॥ ज्ञानेति । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि पञ्च ज्ञानेन्द्रियाणि । वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि । शब्दस्पर्शरूपरसगन्धाः पञ्च सूक्ष्मभूतानि । आकाशवाय्वग्निसलिलभूमयः पञ्च महाभूतानि । तत इति । त्रिगुणात्मकादहङ्कारादित्यर्थः । अहङ्कारस्य सत्त्वरजस्तमोंऽशैर्ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां सूक्ष्मभूतानां पञ्चकं पृथगासीत् । सूक्ष्मभूतेभ्यः स्थूलभूतान्यासन्निति भावः । एतत् षट्त्रिंशत्तत्त्वनिरूपणविस्तरः स्वच्छन्दाद्यागमेषु द्रष्टव्यः । एवं प्रसङ्गागतं तत्त्वक्रमं निरूप्य पुनः प्रकृतं[2] भावनामात्र-

१. कर्मणां—क० ख० । २. प्रकृते—क० ।

एवं सा परमा संविद् बाह्याभासप्रपूर्वकम् ।
क्रीडां करोति सृष्ट्यादिक्रमेण सर्वसाक्षिणी ॥७८॥
तत्राद्यया श्रीत्रिपुराशक्त्या सृष्टौ प्रभावितः ।
हिरण्यगर्भो यो ब्रह्मा तस्यैतद् भावनोत्थितम् ॥७९॥
जगत्तत्र तु या संवित् त्वमहंरूपभासिनी ।
सा परैव हि चिच्छक्तिस्तद्भेदो न तु विद्यते ॥८०॥
भेदस्त्वौपाधिको भाति ह्युपाधिर्ब्रह्मभावितः ।
तद्भावनोपसंहारे नास्ति भेदस्य भासनम् ॥८१॥

सारत्वं जगतो निरूपयति—एवमिति । एवं षट्त्रिंशत्तत्त्वक्रमेण सा प्रसिद्धा परमाऽनवच्छिन्ना संविद् बाह्याभासप्रपूर्वकं सृष्टिस्थित्यादिकं क्रमेण कुर्वती क्रीडां करोति । क्रीडां करोतीति परसंविदात्मनः सृष्ट्यादौ न प्रयोजनान्तरमिति सूचितम् । सर्वसाक्षिणीति । यथा साक्षिणः साक्ष्यगतगुणदोषैरलेपः, एवं सृष्ट्यादिगतगुणदोषैरलेपः संविदात्मनो ज्ञेयः ॥ ७८ ॥ ननु यथा शैलान्तर्लोको भवद्भावनोत्थित इति भवद्भावनामात्रसारः, एवमयं बाह्यलोकोऽपि भावनामात्रसारश्चेत् कस्य भावनयोत्थित इत्याशङ्क्याह—तत्रेति । लोकस्य भावनासारत्वे सिद्ध इत्यर्थः । आद्यया सर्वकारणभूतया । सृष्टौ सृष्टिविषये, सृष्ट्यर्थमिति यावत् । प्रभावितः भावनायोगाद् भावितः । हिरण्यगर्भाख्यो यो ब्रह्मा तस्य भावनयैतज्जगदुत्थितमिति सम्बन्धः ॥ ७९ ॥ ननु ब्रह्माद्युद्भाविते लोके सति सर्वकर्तृता कथं त्रिपुरायाः स्यादित्याशङ्क्याह—तत्रेति । सृष्टिसामान्य इत्यर्थः । ब्रह्मभाविते मद्भावितेऽन्यभाविते वा लोके त्वमहमित्यादिरूपेण भासिनी सर्वापि परिच्छिन्नसंवित् त्रिपुरा परैव । यथा हि घटाद्यवच्छिन्नगगनस्य न महाकाशभेदः, एवमत्रापि भेदो न विद्यते ॥ ८० ॥ ननु भेदाभावे कथं भेदभासनमिति चेदाह—भेदस्त्विति । औपाधिको गगनस्य घटाद्भिरिव देहप्राणाद्युपाधिकृतो

चितो या भावनाशक्तिर्मायया ते समावृता ।
तदावरणहाने तु तव सा सिद्धिमेष्यति ॥८२॥
देशः कालोऽथवा किञ्चिद् यथा येन विभावितम् ।
तथा तत्त्र भासेत दीर्घसूक्ष्मत्वभेदतः ॥८३॥
मयैकदिनरूपेण भावितं तद् दिनैककम् ।
ब्रह्मणा तावदेवात्र द्वादशाऽर्बुदरूपतः ॥८४॥
भावितं तेनैवमेतच्चिरशीघ्रत्वभासनम् ।
ब्रह्मणा निर्मिते शैले पादगव्यूतिसम्मिते[1] ॥८५॥
मयाऽनन्तप्रदेशस्य भावितत्वादनन्तता ।

भेदः । ननूपाधेः कुत उत्थितिरिति चेदाह—ब्रह्मभावित इति । तत्तल्लोककर्तृभावनयोत्थित इत्यर्थः । भेदस्यौपाधिकत्वादेवाह—तद्भावनेति । तेषां जगत्कर्तृणां भावनाया उपसंहारे विरामे उपाधेर्लयात् तत्परिच्छिन्नसंविदां घटादीनां नाशे परिच्छिन्नगगनानामिव न भेदस्य भासनमस्ति[1] ॥८१॥ ननु चिदात्मनो भावनायां स्वातन्त्र्यं नैसर्गिकम्, तत् कुतो मम न दृश्यत इति चेदाह—चित इति । ते भावनाशक्तिर्मायया भगवतः स्वातन्त्र्यशक्त्या समावृताऽस्तीति शेषः । तस्या भावनायाः प्रोक्तयुक्त्या आवरणहाने सति । तव सा भावना सिद्धिं सर्वसाधारणसृष्टिसामर्थ्यम्, एष्यति ॥ ८२ ॥ किञ्चित् गजतुरगादिकम् । येन अनावृतभावनेन । तद् देशकालादिकम् । तत्र भावितप्रदेशादौ । भावनानुरोधेन दीर्घसूक्ष्मत्वभेदतो भासेत ॥ ८३ ॥ एतदेव शैललोकबाह्यलोकयोरुपपादयति—मयेति । तावत् दिनैककमेव । अत्र ब्रह्मसृष्टलोके । रूपतो भावितमित्यन्वयः ॥८४॥ तेन भावनाभेदेनैव । एकस्मिन्नेव काले चिरशीघ्रत्वभासनम् । एवमेव देशेऽपीत्याह—ब्रह्मणेति ॥ ८५ ॥ द्वयमपि एतद्बाह्यलोकस्य देशकालौ,

1. अत्रैव घमातृकाऽवसिता ।

एवं च द्वयमप्यत्र सत्यं चासत्यमेव च ॥८६॥
त्वमप्यन्तः क्रोशमितं देशं कालं कलात्मकम् ।
विभाव्य भूयस्तत्रैव भावयानन्तयोजनम् ॥८७॥
असंख्यकालमपि च भासेद् यावद्धि भावनम् ।
तस्माद् भावनमात्रात्मरूपमेतज्जगद् बहिः ॥८८॥
चिदात्मरूपेऽव्यक्ते वै भासते मनुजाधिप ।
तस्माद् बाह्यात्मकाव्यक्तभित्तौ चित्रमयं जगत् ॥८९॥
अव्यक्तभित्तिमात्रं स्यात् सा स्वभित्तिचिदात्मिका ।
अत एव चिराद् गम्यो दूरदेशोऽपि योगिनः ॥९०॥

शैललोकस्य देशकालौ च । अर्थक्रियाकारित्वादिरूपव्यावहारिकसत्यलक्षणसत्त्वात् सत्यम्, अनवभासनरूपबाधसत्त्वात् परमार्थतोऽसत्यमपि ॥ ८६ ॥ नैतच्चित्रमित्याह—त्वमपीति । अन्तःसङ्कल्पभूमौ आदौ क्रोशमितं पर्वतादिरूपं देशं कलात्मकं सूक्ष्मकालं च विभाव्य भूयस्तत्रैव क्रोशमिते देशे कलात्मके काले चासंख्ययोजनमनन्तकालं च भावयेति सम्बन्धः ॥ ८७ ॥ यथा वितस्तिमात्रदर्पणे गिरिनगरादिविपुलदेशस्य, मुहूर्त्तमिते स्वप्ने वर्षात्मकचिरकालस्य च भासनम्, एवं यावत्ते भावनमस्ति तावद्भासेदेव । भावनावरणापगमे त्वेतदेव सर्वसाधारणतया भासेतेति भावः । तस्माद्भावनारूपमेवैतज्जगच्चिदात्मरूपेऽव्यक्ते बहिरात्मनि भासत इति सम्बन्धः ॥८८॥ तस्माद्भावनामात्ररूपत्वेनासत्यत्वाद्यथा चित्रस्य भित्तिमात्रात्मता, तथाऽव्यक्तभित्तिचित्रकल्पं जगदव्यक्तभित्तिमात्रमिति सम्बन्धः ॥ ८९ ॥ साऽव्यक्तात्मिका जडशक्तिरपि चिदात्मभित्तौ चित्रकल्पा चिदात्मिकैव । अत एव चिदात्मव्यतिरेकेण जगतोऽसत्यत्वादेव । योगिनः

क्षणेन गत्वा पश्यन्ति करामलकवद् ध्रुवम् ।
तस्माद् दूरं समीपं वा चिरं शीघ्रमथापि वा ॥९१॥
भावनामात्रसंसिद्धं चिद्दर्पणसमाश्रितम् ।
निश्चित्यैवं त्यज भ्रान्तिं शुद्धचिद्भावनक्रमात् ॥९२॥
ततस्त्वमप्यहमिव स्वतन्त्रस्तु भविष्यसि ।
इति श्रुत्वा मुनिसुतवचनं मुनिसत्तमः ॥९३॥
परित्यज्याखिलभ्रान्तिं ज्ञातज्ञेयः शुभाशयः ।
समाध्यभ्यासयोगेन संसाध्य निजभावनाम् ॥९४॥
स्वातन्त्र्यमधिगम्याथ चिरकालं विहृत्य तु ।
देहाभासमथोन्मूल्य महागगनसंश्रयः ॥९५॥
निर्वाणं परमं प्राप्तो महासेनोऽपि भार्गव ।
एवं जगत् सत्यभावभावनामात्रहेतुतः ॥९६॥

पश्यन्तीत्यन्वयः ॥ ९० ॥ क्षणेनेति । दूरत्वस्य सत्यत्वे क्षणेन गमनमसम्भाव्यमिति भावः । तस्माद् दूरादेरसत्यत्वात् । दूरं समीपमित्यादि भावनामात्रसारं निश्चित्येत्यन्वयः ॥ ९१ ॥ चिदात्मकदर्पणे प्रतिबिम्बवत् समाश्रितं तदतिरेकेणासत्यमेवैतज्जगदिति निश्चित्य देहाद्यतिरिक्तशुद्धचिन्मात्रस्य याऽहमस्मीति भावना, तस्या दीर्घकालनैरन्तर्यानुवृत्तिरूपक्रमाद् जगत्सत्यत्वभ्रान्तिं त्यजेत्यर्थः ॥ ९२ ॥ ततः सत्यत्वाभिमाननिवृत्त्यनन्तरम् ॥ ९३ ॥ अखिलभ्रान्तिं जगत्सत्यत्वदेहात्मत्वादिभ्रान्तिम् । ज्ञातं ज्ञेयं जगत्प्रतिबिम्बदर्पणात्मकात्मतत्त्वं येन । अत एव शुभः कामक्रोधादिरहित आशयो यस्य ॥ ९४ ॥ सृष्ट्यादौ स्वातन्त्र्यमधिगम्य । अथ चिरकालविहारानन्तरम् । देहाभासस्योन्मूलनं बाधितदेहाभासस्यापि त्यागः । महागगनं निर्विकल्पपरसंवित् ॥ ९५ ॥ निर्वाणमिति । बाधितानुवृत्तिमपि देहाभासं परित्यज्य निर्विकल्पसंविन्मात्रमूर्त्तिः सन् परमं निर्वाणं विदेहमुक्तिं

भाति सत्यात्मरूपेण विमृशैतद् भृगूद्वह ।
विचारेण शमं यायाद् भ्रान्तिस्ते चित्तसंश्रया ॥९७॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे शैललोकाख्यानं नाम
चतुर्दशोऽध्यायः ॥



प्राप्त इत्यर्थः । एवमुक्तरीत्या । सत्यभावभावनामात्रहेतुतो जगद् भातीत्यन्वयः ॥ ९६ ॥ सत्यात्मरूपेण जगद् भाति । एतन्मयोक्तं विमृश विचारय । भूयो मननरूपविचारेण भ्रान्तिः शमं यायात् ॥ ९७ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
चतुर्दशोऽध्यायः ॥



# अथ पञ्चदशोऽध्यायः

इति श्रुत्वा शैललोकाख्यानमत्यद्भुतं तदा ।
भूयोऽत्यन्तं विस्मितोऽभूद् रामो भृगुकुलोद्वहः ॥ १ ॥
विमृश्य गुरुणा प्रोक्तं बुद्ध्या निश्चित्य शुद्धया ।
दत्तात्रेयं पुनर्गत्वा नत्वा पप्रच्छ सादरम् ॥ २ ॥
भगवन् यत्त्वया प्रोक्तमाख्यानैर्विविधैस्तु तत् ।
तत्र सारमियज्ज्ञातं मयाऽत्यन्तं विचारतः ॥ ३ ॥
संवेदनं सत्यमेकं संवेद्यं तत्र कल्पितम् ।
आदर्शनगरप्रख्यं मृषैव प्रविभावितम् ॥ ४ ॥
सा चितिः परमा शक्तिः संविद्रूपा महेश्वरी ।
स्वात्मभित्तौ जगच्चित्रमव्यक्तादिप्रभेदितम् ॥ ५ ॥

अत्राष्टावक्रकथया पद्यैः कनकसंमितैः ।
प्राह वेद्यमवेद्यं च संक्षेपादात्मनो वपुः ॥

पूर्वाध्याये विमृशेति गुरुणोक्तम् । [1]स्वस्थानं गत्वा सम्यक् कुतर्करहितया शुद्धया बुद्ध्या निश्चित्य पुनरागत्य संशयं पप्रच्छेत्याह—विमृश्येति ॥ १–२ ॥ भगवन्निति । त्वया यत्प्रोक्तं तत्र मया विचारत इयज्ज्ञातमिति योजना ॥ ३ ॥ तदेवाह—संवेदनमिति । तत्र संवेदने । अत्र दृष्टान्तः—आदर्शेति । अत एव मृषैव प्रविभावितं मिथ्याभूतमसदेव ज्ञातम् ॥ ४ ॥ एवं मृषाप्रविभावने संविदात्मनः स्वातन्त्र्यमेव निमित्तमित्याह—सेति । यत्र वेद्यं कल्पितमेकस्मिन् संवेदने तस्य वेद्याद्वैलक्षण्यनिरूपणाय चितिरित्यादि विशेषणम् । चितिः स्वपर-[2] प्रकाशमयी, परमा अपरिच्छिन्ना शक्तिर्दुर्लक्ष्या । संविदेव रूपं यस्याः ।

१. स्वस्थाने–क० ख० ग० । २. 'पर' नास्ति–क० ।

[1]भासयेत् स्वातन्त्र्यमात्राद् निरुपादानहेतुकम् ।
एतावत्तु मया ज्ञातं विचार्यं सूक्ष्मया धिया ॥ ६ ॥
किन्त्वेवंविधसंवित्तिर्वेद्यवन्ध्या निरूपिता ।
उपलब्धुमशक्यैव सवेद्यायाः सदा स्थितेः ॥ ७ ॥
वेद्यं विना तु संवित्तेः कथं स्यादुपलम्भनम् ।
उपलम्भं विना तस्याः पुरुषार्थो न विद्यते ॥ ८ ॥
पुरुषार्थोऽपि मोक्षः स्यात् स वा किंविध उच्यते ।
विज्ञाने सति मोक्षः स्यान्मुक्ते व्यवहृतिः कथम् ॥ ९ ॥
ज्ञानिनोऽपि च दृश्यन्ते व्यवहारपरायणाः ।
कथं तेषां हि संवेद्यमुक्तं संवेदनं स्थितम् ॥१०॥

महतां ब्रह्मादीनामपीश्वरी नियन्त्री । अव्यक्तं बहिःपदार्थः ॥ ५ ॥ स्वातन्त्र्यमात्रात् स्वातन्त्र्यैकनिमित्तात् । निरूपादानहेतुकं जगत् ॥६॥ एवमुपदिष्टेषु निर्णीतांशमुक्त्वा शेषमाह—किन्त्विति । वेद्यवन्ध्या शुद्धा निर्विकल्पा । या निरूपिता सोपलब्धुमशक्येत्यर्थः । अत्र हेतुः—सवेद्याया इति । सदा सवेद्यत्वेनैव तस्या उपलभ्यमानत्वादिति भावः । कथमिति ? अयं घटोऽयं पट इति वेद्याकारेणैव तस्या उपलम्भनियमात् । माऽस्तु तस्या उपलम्भ इति चेदाह—उपलम्भमिति । तस्या वस्तुतस्तथाविधत्वेऽप्युपलम्भस्यैव पुरुषार्थसाधकत्वम्, अन्यथा बन्ध एव न संभवेदिति भावः ॥ ८ ॥ संशयान्तरम्—पुरुषार्थ इति । सः मोक्षः । किंविधः किंरूपः । विज्ञानोत्तरं जीवत एव मुक्तावनन्तरं तस्य कथं व्यवहार इति प्रश्नान्तरम् ॥ ९ ॥ ज्ञानिनां नास्ति व्यवहार इति चेन्नेत्याह—ज्ञानिन इति । ननु ज्ञानिनो व्यवहारे कोऽयं विरोध इति चेदाह—कथमिति । व्यवहारस्य [2]सविकल्पज्ञानत्वेन तत्काले संवेद्यमुक्तं

---

१. भावयेत्—क० । २. कल्पकज्ञान—क० ।

स्थितायां शुद्धसंवित्तौ व्यवहारः कथं भवेत् ।
विज्ञानमेकरूपं वै मोक्षोऽप्येकः फलं भवेत् ॥११॥
तत्कथं ज्ञानिनां भेदः स्थितौ लोके हि दृश्यते ।
केचित् कर्म प्रकुर्वन्ति काले सच्छास्त्रचोदितम् ॥१२॥
केचित् समाराधयन्ति देवतां भिन्नवर्त्मभिः ।
केचित् समाधिपरमाः संहृतेन्द्रियमण्डलाः ॥१३॥
केचित्तपः प्रकुर्वन्ति देहेन्द्रियविशोषणम् ।
केचिच्छिष्यान् बोधयन्ति पृथक्प्रवचनैः स्फुटम् ॥१४॥
केचिद्राज्यं प्रशासन्ति दण्डनीत्युक्तवर्त्मना ।
केचित् प्रवादं कुर्वन्ति सदस्सु प्रतिवादिभिः ॥१५॥
केचिच्छास्त्राणि विविधान्यजस्रं रचयन्ति वै ।
अन्ये केवलमुग्धत्वमावहन्ति सदैव हि ॥१६॥
केऽपि लोकविगर्ह्यां तु वृत्तिं नित्यमिहास्थिताः ।
त इमे ज्ञानिन इति प्रथिता भूरिशोचनैः ॥१७॥
तत्कथं साधनफलाभेदेऽपि स्थितिभिन्नता ।

**निर्विकल्पसंवेदनं कथं स्थितं भवेत्** ॥ १० ॥ स्थितायामिति । **निर्विकल्पसंवित्तौ स्थितायां वा कथं व्यवहारः, परस्परं विरोधादिति भावः । मोक्षसाधनविज्ञानस्य विज्ञानफलमोक्षस्य च नानात्वाभावे कथं ज्ञानिनां भिन्ना स्थितिर्लोके दृश्यत इति प्रश्नान्तरम्**—विज्ञानमिति । ॥ ११ ॥ **भिन्नां स्थितिमेवाह**—केचिदित्यादि । **काले तत्तत्काले** ॥ १२ ॥ **भिन्नवर्त्मभिः वैदिकादिमार्गैः** ॥ १३ ॥ **प्रवचनैरुपदेशवाक्यैः** ॥ १४-१५॥ **मुग्धत्वं मूढत्वम्** ॥ १६ ॥ **विगर्ह्यां निन्द्याम् । प्रथिताः विख्याताः** ॥ १७ ॥ तत्कथमिति । **एतेषां ज्ञानित्वं कथम् ? किमेकरूपमुत विविधमित्यर्थः । एकविधत्वे कथं भिन्ना स्थितिरित्याह**—साधनेति । **साधनफले विज्ञानमोक्षे । तत्कथमित्यस्य विवरणम्**—किमेत इति ।

किमेते समविज्ञानास्तारतम्यमुताश्रिताः ॥१८॥
एतत्सर्वमशेषेण प्रवक्तुं मे समर्हसि ।
शिष्येऽनन्यशरण्ये ते निसर्गसदयं मनः ॥१९॥
इत्यत्रिसूनुरापृष्टो भार्गवेण प्रसन्नधीः ।
मत्वा योग्यं प्रश्नजातं प्रवक्तुमुपचक्रमे ॥२०॥
राम बुद्धिमतां श्रेष्ठ नूनं स्पृशसि तत्पदम् ।
सद्विमर्शपरो यस्त्वमतो ज्ञातुं प्रभावितः ॥२१॥
एतदेव हि तच्छक्तिपातो यत्सद्विमर्शनम् ।
भगवच्छक्तिपातेन विना कः श्रेय आप्नुयात् ॥२२॥
कृत्यमात्मदेवताया जानीह्येतावदेव हि ।
यत् सद्विमर्शनं नित्यं वर्धयेत् सुप्रसादिता ॥२३॥
यत् त्वया विदितं तत्तु तादृक् सत्यं नहीतरत् ।
किन्तु तत् तादृशमपि त्वयोक्तं परचिद्वपुः ॥२४॥
न ते सुविदितं राम यत एवं वदस्यतः ।

ज्ञानतारतम्यम् ॥ १८ ॥ सर्वं प्रश्नजातम् । यतो निसर्गसदयं मनः, अतोऽर्हसीति सम्बन्धः ॥ १९–२० ॥ तत्पदं स्पृशसि । परसंविदात्मरूपं ज्ञातुं समर्थोऽसीत्यर्थः । कुत एतदिति चेदाह—सद्विमर्शेति । यद्यस्मात्त्वं सद्विमर्शपरः सत्तर्कपरः[1] । प्रभावितः समर्थः ॥ २१ ॥ तस्येश्वरस्य शक्तिपातोऽनुग्रहशक्तिः[2] । शक्तिपातकार्यत्वाच्छक्तिपातत्वम् । श्रेयः श्रेयोमुख्यसाधनं सत्तर्कम् ॥ २२ ॥ प्रसन्नेश्वरस्य सुतर्कोत्पादनमेव कृत्यमित्याह—कृत्यमिति ॥ २३ ॥ यदिति । "तत्र सारमियज्ज्ञातम्" [ १५।३ ] इत्यादिना यत्त्वया विदितमुक्तं तत्तादृगेव, इतरद् अन्यथा न भवतीति सत्यम्, किन्तु त्वयोक्तं तादृशं परचिद्वपुर्न सुविदितमिति सम्बन्धः ॥ २४ ॥ न ते त्वया । सुविदित-

१. 'सत्तर्कपरः' नास्ति–क० ख० । २. प्राप्तिः–ग० ।

ताटस्थ्येन तु यो यावद्वेद तावन्न वेद वै ॥२५॥
यतः सा विदिता सम्यक् ताटस्थ्यमुपशामयेत् ।
तटस्थसंवेदनं तु स्वप्नसंवेदनोपमम् ॥२६॥
यथा स्वप्ननिधिप्राप्तिः पुरुषाणां निरर्थिका ।
तथा तटस्थविज्ञानममुख्यफलदं भवेत् ॥२७॥
अत्र ते कथयिष्यामि प्राग्वृत्तमतिशोभनम् ।
पुरा विदेहेषु कश्चिदासीद् राजा सुधार्मिकः ॥२८॥
वृद्धप्रज्ञो हि जनकः प्रविज्ञातपरावरः ।
स कदाचित् स्वात्मदेवीमीजे क्रतुभिरुत्तमैः ॥२९॥
तत्राजग्मुर्ब्राह्मणाद्या विद्यावन्तस्तपस्विनः ।
कलाभिज्ञा वैदिकाश्च यज्वानश्चापि सत्रिणः ॥३०॥
तत्काल एव वरुणो यष्टुं समुपचक्रमे ।

मपरोक्षीकृतम्, यतः सा परा चितिरात्मभित्तावादर्शनगरवद् [1]जगदवभासयेदिति ताटस्थ्येनानुवदसि । अस्तु यथाकथञ्चिद्विदितमेवेति चेदाह—ताटस्थ्येनेति । न वेदेति । वेदनमुख्यफलाभावान्न वेदेत्यर्थः ॥ २५ ॥ सम्यग् मया विदित्वापि ताटस्थ्येन निरूपितमिति चेदाह—यत इति। सा परसंवित् । परसंविदः प्रत्यगात्मनः सम्यग्वेदनमहमस्मीति । एवं विदितेऽनन्तरं ताटस्थ्यनिमित्तकं सा जगदवभासयेदिति कथं निरूपणं स्यादिति तात्पर्यम्। तटस्थसंवेदनं परोक्षज्ञानम् । अपरोक्षवस्तुनः परोक्षं[2] ज्ञानं भ्रमरूपमेवेत्याह—स्वप्नेति ॥ २६ ॥ परोक्षज्ञानं व्यर्थमित्याह—यथेति। अमुख्यफलदम्। शुक्तौ रजतदर्शनेन रजतप्राप्तिनिमित्तहर्षादिसम्भवेऽपि यथा हर्षो मुख्यं फलं न भवत्येवमत्रापीत्यर्थः ॥ २७ ॥ अत्र तटस्थविज्ञानस्यामुख्यफलत्वे ॥ २८–३० ॥

---

१. 'जगद्' नास्ति—क० । २. परोक्षज्ञानं—ग० ।

तेनोपहूता विप्राद्या न ययुस्तत्र भूरिशः ॥३१॥
जनके ह्यभिसंप्रीताः पूजितास्तेन तर्पिताः ।
अथाजगाम वरुणदायादो बौद्धसम्पदा ॥३२॥
विप्रवेषधरो नेतुं ब्राह्मणान् कूटवर्त्मना ।
आसाद्य यज्ञसदनं नृपं संयोज्य चाशिषा ॥३३॥
[1]आक्षिपत्तत्र सभ्यांस्तु शृण्वतां च सभासदाम् ।
राजंस्ते यज्ञसदनमत्यन्तं नैव शोभते ॥३४॥
कमलाकरवत् काककङ्कवृन्दस्य सञ्चयात् ।
सभा विद्वत्समुदयैः शोभिनी शोभतेतराम् ॥३५॥
शारदं हंससङ्घातैः सपद्मं तु सरो यथा ।
तदत्र विद्याविशदं न पश्याम्येकमप्यलम् ॥३६॥
स्वस्ति तेऽस्तु गमिष्यामि नात्र मे संस्थितिर्भवेत् ।
कथं सभामिमां मूर्खप्रचुरां संविशाम्यहम् ॥३७॥
एवं वारुणिना प्रोक्ताः सभ्याश्चुक्रुधुरञ्जसा ।
किमरे द्विजबन्धो त्वमधिक्षिपसि सर्वतः ॥३८॥

तत्र वरुणयागे । भूरिशः बहवः ॥३१॥ अगमने हेतुभूतं विशेषणम्—जनक इति । तत्रापि हेतुः—पूजिता इत्यादि । अथ ब्राह्मणाद्यनागमननिश्चयानन्तरम्, वरुणस्य दायादः पुत्रः, बौद्धसम्पदा बौद्धा बुद्धिसम्बन्धिनी सम्पत्, तया सहित इत्यर्थः । तर्ककुशल इति तात्पर्यम् ॥ ३२ ॥ नेतुमाजगाम । कूटवर्त्मना कपटमार्गेण ॥३३॥ आक्षेपस्तिरस्कारः । आक्षेपं शृण्वतां सभासदां मध्ये स्थित इति शेषः ॥ ३४ ॥ न शोभत इत्यत्र दृष्टान्तः—कमलेति । कुत इति चेदाह—सभेति । शोभिनीति । स्वतः शोभमाना नितरां शोभते ॥ ३५ ॥ दृष्टान्तः—शारदमिति । यस्मान्न पश्यामि तत् तस्मान्न शोभत इति सम्बन्धः ॥ ३६–३७ ॥ क्रुद्धानां

१. अक्षि–क० ।

केयं तवेदृशी विद्या यया सर्वे वयं जिताः ।
वृथा कत्थसि दुर्बुद्धे जित्वाऽस्मांस्त्वं गमिष्यसि ॥३९॥
प्रायो भूलोकसंस्थाना विद्वांसः सङ्गताः खलु ।
किं त्वं भूलोकमेवाद्य जेतुमिच्छसि दुर्मते ॥४०॥
ब्रूहि का ते भवेद्विद्या ययाऽस्मान् जेतुमिच्छसि ।
इत्युक्तवत्सु सभ्येषु वारुणिः पुनराह तान् ॥४१॥
समयेन विजेष्यामि सर्वान् वः क्षणमात्रतः ।
अहं जितो भवद्भिस्तु समुद्रे स्यां निमज्जितः ॥४२॥
युष्मास्वहं मज्जयामि जितं जितमथापि वा ।
उपेत्यैवं तु समयं विवदन्तु मया सह ॥४३॥
इत्युक्ताः सम्मतिं चक्रुः सभ्या वादाय तेन तु ।
विवादं चक्रुरत्यन्तं तेन वारुणिना द्विजाः ॥४४॥
जिजे[गा]य वारुणिर्विप्रान् वितण्डाजल्पवर्त्मना ।
सिन्धौ निमज्जिता विप्राः शतशोऽथ सहस्रशः ॥४५॥
निमज्जितास्तु ये विप्रा दूतैस्तैर्वारुणैर्हृताः ।
वारुणं यज्ञमासाद्य मुमुदुः पूजिता भृशम् ॥४६॥

वचनम्—किमरे इति । सर्वतः सर्वान् ॥ ३८ ॥ जिता भवाम इति शेषः ॥ ३९ ॥ भूलोकसंस्थानाः भूलोकस्थाः । अत्र सङ्गताः मिलिता वर्तन्त इति शेषः ॥ ४०–४१ ॥ समयेन प्रतिज्ञया । समयमेवाह—अहमिति । ॥ ४२ ॥ उपेत्य अङ्गीकृत्य ॥ ४३ ॥ सम्मतिं प्रतिज्ञाङ्गीकारम् ॥ ४४ ॥ वितण्डाजल्पवर्त्मनेति । कथा त्रिधा, वादजल्पवितण्डाभेदात् । वादः स्वसिद्धान्तसंस्थापनमात्रोपयुक्ता कथा । जल्पः स्वसिद्धान्तस्थापन-परसिद्धान्तदूषणयोरुपयुक्ता । परसिद्धान्तदूषणमात्रोपयुक्ता वितण्डा । कांश्चिद्वितण्डामार्गेण कांश्चिज्जल्पमार्गेण जिजे[गा]य । तदनन्तरं जिता विप्राः सिन्धौ निमज्जिताः ॥ ४५ ॥ वरुणेन पूजिताः ॥ ४६ ॥ स्वपितरं

मज्जितं पितरं श्रुत्वा कहोलं तत्सुतस्ततः ।
अष्टावक्रः समागत्य ज्ञानवैतण्डयजल्पकः ॥४७॥
विजित्य वारुणिं सिन्धावादिदेश निमज्जने ।
अथ प्रकाशमापन्नो वारुणिर्द्विजमुख्यकान् ॥४८॥
समानयत् स्वलोकस्थानष्टावक्रेण निर्जितः ।
अथागतेषु विप्रेषु कहोलतनयो भृशम् ॥४९॥
विप्रान् विमोचितान् सर्वानत्यवर्तत दर्पतः ।
अष्टावक्रेण विमता विप्राः खेदमुपागताः ॥५०॥
तत्काल आगतां काञ्चित् तापसीं शरणं ययुः ।
तान् समाश्वास्य विप्रान् सा काषायाम्बरवासिनी ॥५१॥
जटिला नित्यतरुणी मनोहरवपुर्धरा ।
सभामुपेत्य प्रोवाच नृपेणाभिसुपूजिता ॥५२॥
कहोलसुत वत्स त्वमत्यन्तं बुद्धिमानसि ।
त्वया विमोचिता विप्रा वादे निर्जित्य वारुणिम् ॥५३॥
अहं पृच्छामि किञ्चित्त्वां वद हित्वा सुकैतवम् ।
यत्पदं विदितं सर्वामृतत्वप्रतिपादकम् ॥५४॥
यत्पदे विदिते सर्वसन्देहः प्रलयं व्रजेत् ।

मज्जितमष्टावक्रः श्रुत्वा । वैतण्ड्यं वितण्डा ॥ ४७ ॥ आदिदेश आज्ञापयामास । अथ आदेशानन्तरम् । प्रकाशं प्रकटताम् । विप्रवेषं परित्यक्तवानिति यावत् ॥ ४८-४९ ॥ अत्यवर्तत अतिक्रान्तवान् । [1]अवम-[मा]नेन इति यावत् । विमताः [2]अवमानिताः ॥ ५० ॥ अष्टावक्रदर्पभञ्जनाय शरणं ययुः ॥ ५१ ॥ नित्यतरुणी योगेन जरावर्जिता ॥५२-५३ ॥ कैतवं वितण्डाजल्पवर्त्म । विजिगीषां परित्यज्येति यावत् ।

---

१. अवमेनं-ग० । २. अप-क० ।

अविज्ञातं न किञ्चित् स्यादाशास्यं वा न किञ्चन ।।५५।।
अवेद्यं विदितं तच्चेद् वद मामुप सत्वरम् ।
तापस्यैवं समापृष्टः कहोलतनयोऽब्रवीत् ।।५६।।
विदितं तत्पदं भूयो वच्मि तापसि संश्रृणु ।
न मे ह्यविदितं लोके ह्यस्ति किञ्चित् कियत्त्विदम् ।।५७।।
मया शास्त्राणि सर्वाणि भूयः संलुठितानि वै ।
यत् त्वं पृच्छसि तद्वक्ष्ये श्रृणु तापसि तत्त्वतः ।।५८।।
तद्धि सर्वजगद्धेतुरादिमध्यान्तवर्जितम् ।
देशकालानवच्छिन्नं शुद्धाखण्डचिदात्मकम् ।।५९।।
यदुपाश्रित्य वै सर्वं जगदेतद् विराजते ।
आदर्शनगरप्रख्यं तदेतत्परमं पदम् ।।६०।।
प्राप्नोति तद्विदित्वैव निश्चलामृतसंस्थितिम् ।
आदर्शे विदिते यद्वन्न सन्देहः क्वचिद्भवेत् ।।६१।।

सर्वामृतत्वमपरिच्छिन्नामृतत्वम् ॥ ५४ ॥ आशास्यं वाञ्छितम् ॥ ५५ ॥ एवंविधम् अवेद्यं तत्पदं विदितं चेद्वद । मामुप मत्समीपे ॥ ५६ ॥ तत्पदं त्वया पृष्टं पदम् । भूयः असकृत् । इदं त्वत्पृष्टम् । कियत् अत्यल्पमिति यावत् ॥ ५७ ॥ संलुठितानि संलोडितानि, सम्यग् विमृष्टानीति यावत् ॥ ५८ ॥ तत् [1]त्वत्पृष्टं पदम् । आदिमध्यान्तरहितत्वादेवाह—देशेत्यादि । शुद्धमखण्डमिति विजातीयसजातीयवस्त्वन्तरासम्भेद उक्तः ॥ ५९ ॥ यत् प्रोक्तचित्तत्त्वमुपाश्रित्य । उपाश्रयणं च[2] न घटे नीलरूपादेरिवेत्याह—आदर्शेति ॥ ६० ॥ तत् [3]परमं पदं विदित्वा । तद्वेदनेन सर्वं सन्देहनिवृत्त्यादिकं सदृष्टान्तमाह—आदर्शेति । यथादर्शे विदिते तद्गतप्रतिबिम्बेषु

१. त्वत्पृष्टपदम्—क० । २. 'च' नास्ति—क० ।
३. परमपदम्—क० ।

प्रतिबिम्बेष्वनन्तेषु न स्यादविदितं तथा ।
नाशास्यं वा भवेत् किञ्चिदेवं प्रविदिते परे ॥६२॥
तच्चाप्यवेद्यमन्यस्य वेदकादेरभावतः ।
एवं तापसि तत् तत्त्वं शास्त्रदृष्टचा विभावितम् ॥६३॥
इत्यष्टावक्रवचनं श्रुत्वा सा पुनरब्रवीत् ।
मुनिदारक सूक्तं ते यथावत् सर्वसम्मतम् ॥६४॥
यदुक्तं वेदकाभावादवेद्यं तदिति त्वया ।
प्राप्नोति तद्विदित्वैव चामृतं पदमव्ययम् ॥६५॥
इति पूर्वोत्तरवचो मन्यसे सङ्गतं कथम् ।
अवेद्यं चेन्न जानामि नास्तीति च निरूपय ॥६६॥

क्वचिदपि न सन्देहो भवेत्, प्रतिबिम्बानामादर्शमात्रात्मत्वात् ॥ ६१ ॥ एवमविदितमपि न किञ्चिद् भवेत्। एवमाशास्यं वा न किञ्चिद् भवेत्, प्रतिबिम्बत्वेन ज्ञाते आशानुदयात्। एवं परे शुद्धे स्वात्मनि विदिते तदितरस्याखिलस्य प्रतिबिम्बत्वेन तदनन्यत्वात्तत्र सन्देहो वा किञ्चिदविदितं वा आशास्यं वा न भवेदिति भावः ॥ ६२ ॥ एवंविधमात्मतत्त्वमेवावेद्यम्, अन्यस्य वेदकस्याभावात्। अन्यवेदकस्य जडत्वे वेदकत्वहानिरजडत्वे तत्रापि वेदकान्तरापेक्षायामनवस्थेति भावः। आदिना करणमप्येवं ज्ञेयम्। शास्त्रदृष्टया न तु प्रत्यक्षेण विभावितं ज्ञातम् ॥ ६३ ॥ ते त्वया यथावदुक्तं तत्सूक्तं सर्वसम्मतं च ॥ ६४ ॥ तत्रैतावानंशो विरुद्ध इत्याह—यदुक्तमिति ॥ ६५ ॥ अवेद्यं तत्पदं विदित्वैवामृतं पदं प्राप्नोतीति पूर्वोत्तरवचः सङ्गतं कथं मन्यसे। कुत इति चेदाह—अवेद्यं चेदिति। अवेद्यं चेत्तज्ज्ञानमसम्भावितमेव। अविदितस्याप्रकाशितत्वेन[1] तत्सत्त्व-

---

१. तत्वेतरंतत्सत्त्व—क० ख०।

अस्ति जानासि यदि तदवेद्यमिति मा वद ।
अथैतत्तु त्वया विप्र शास्त्रदृष्टया विभावितम् ॥६७॥
न तत् स्वयं विजानासि तस्मात्तन्नापरोक्षकम् ।
दृष्ट्वा प्रत्यक्षतः सर्वं प्रतिबिम्बं यथास्थितम् ॥६८॥
आदर्शं न विजानासि प्रत्यक्षेणेति तत्कथम् ।
एवं वदन् सभामध्ये जनकस्यास्य वै पुरः ॥६९॥
परिभूतं स्वमात्मानं मन्यसे नो कथं वद ।
एवमुक्तस्तया तत्र नैव प्रोवाच किञ्चन ॥७०॥
विमना इव सञ्जातो लज्जितोऽभवदञ्जसा ।
अवाङ्मुखः क्षणं स्थित्वा विचार्यान्तस्तयेरितम् ॥७१॥
तत्प्रश्नोत्तरमप्राप्य तां प्राह द्विजसत्तमः ।
तापस्यहं न जानामि त्वत्प्रश्नस्योत्तरं वचः ॥७२॥
शिष्योऽहं ते वदैतन्मे कथमेतन्निरूपितम् ।

मध्यसम्भवीति भावः ॥६६॥ दूषणान्तरमाह—अथेति । एतत् परमात्मतत्त्वं शास्त्रदृष्ट्या वाक्यज्ञानेन विभावितं विनिश्चितम् ॥ ६७ ॥ स्वयं साक्षात् । तत् परात्मतत्त्वम् । न विजानासि । नापरोक्षकं न प्रत्यक्षविषयम् । तथा च सर्वं जगत्तत्रादर्शं प्रतिबिम्बं यथा प्रतिबिम्बकल्पं स्थितं प्रत्यक्षतो दृष्ट्वा [1]आदर्शं प्रत्यक्षेण न विजानासीत्येतत् कथं वचः सङ्गतं भवेदिति भावः ॥ ६८ ॥ एवं पूर्वोत्तरासङ्गतं[2] वचः । विद्वत्सभामध्ये तत्रापि जनकस्य विद्वच्छिरोमणेः पुरोऽग्रतः ॥६९॥ आत्मानं परिभूतं तिरस्कृतं न कथं मन्यसे । सभास्वसन्दर्भवाक्यनिरूपणमेव मौर्ख्यद्योतकम् । भूयस्तत्रैव वाक्ये सुसन्दर्भिताभिमानस्तु सुतरां मौढ्यप्रद्योतक इति भावः ॥ ७० ॥ विमना इव व्यग्रचित्त इव । अन्तः मनसि ॥७१॥ तस्यास्तापस्याः प्रश्नोत्तरम् । तां तापसीम् ॥७२॥ एतत्

१. आदर्श–क० ख० । २. तरसङ्गत–क० ख० ।

नाहं वदाम्यनृतकं तपोहरमनर्थकम् ॥७३॥
इत्यापृष्टा तापसी सा प्रसन्ना तस्य सत्यतः ।
अष्टावक्रं प्रत्युवाच शृण्वतां च सभासदाम् ॥७४॥
वत्सैतदविदित्वैव बहवो मोहमागताः ।
शुष्कतर्कैरविज्ञेयं सर्वत्रैव सुगोपितम् ॥७५॥
एतावत्सु सभासत्सु न विजानाति कश्चन ।
राजाऽयं वेत्यहं वापि वेद्मि नान्यस्तु कश्चन ॥७६॥
सर्वत्र हि विवादेषु नैतत्प्रश्नोत्तरं क्वचित् ।
प्रायो विदुर्हि विद्वांसस्तर्कमात्रसमाश्रयाः ॥७७॥
नैतत्तर्केण सुज्ञेयमपि सूक्ष्मधिया क्वचित् ।
विना सद्‌गुरुसेवाया देवतानुग्रहाद्विना ॥७८॥
मुनिपुत्राभिधास्यामि शृण्वेतत्सूक्ष्मया धिया ।
नेदं श्रुत्वापि विज्ञेयं ताटस्थ्यप्राणया धिया ॥७९॥
यावदेतद्धि विज्ञानमनुदाहृतमात्मनि ।
तावत् सहस्रशः प्रोक्तं श्रुतं चापि निरर्थकम् ॥८०॥

त्वया पृष्टम् । अवेद्यं विदित्वाऽमृतत्वप्राप्तिरिति शास्त्रे निरूपितं कथं सङ्गतमेतद्वद । अविदितमपि जानामीत्यनृतकम् ॥७३॥ तस्य अष्टावक्रस्य ॥ ७४ ॥ एतत् प्रोक्तविरोधसमाधानम् । एतदविज्ञेयम् । सर्वत्र शास्त्रेषु ॥ ७५ ॥ न विजानाति कश्चनेत्येतदेव भूयः स्पष्टार्थमाह—नान्यस्त्विति ॥ ७६–७७ ॥ सूक्ष्मधियापि । देवतानुग्रहपूर्वकसद्‌गुरुसेवनं विना शुद्धाऽद्वितीयात्मतत्त्वसाक्षात्कारं विनैतदर्थस्य दुर्विज्ञेयत्वादिति तात्पर्यम् ॥ ७८ ॥ सूक्ष्मया एकाग्रया धिया । कुत इति चेदसमाहितबुद्धेरेतद् दुर्विज्ञेयमित्याह—नेदमिति । ताटस्थ्यप्राण इव मुख्यधर्मो यस्याः । आत्मन्यसमाहितया बहिर्मुख्येति तात्पर्यम् ॥ ७९ ॥ विज्ञानं विज्ञानसाधनोपपत्तिजालम् । अनुदाहृतमात्मनीति । आत्मा सूर्यवत्

यथा कश्चित् स्वकण्ठस्थं मुक्ताहारं प्रमादतः ।
अविज्ञाय हृतं चौरैर्मन्यते मूढभावतः ॥८१॥
प्रबोधितोऽपि स पुनः कण्ठेऽस्तीति हि केनचित् ।
स्वात्मानमनुदाहृत्य यावत् कण्ठं न पश्यति ॥८२॥
तावन्नाप्नोति कण्ठस्थं हारं सूक्ष्मविमर्श्यपि ।
एवं मुनिसुतात्मानं स्वस्वभावं निशम्य च ॥८३॥
भूयोऽतिनिपुणोऽप्यन्तरात्मानमनुदाहरेत् ।
यावत् तावद् बहिः कुत्र कथं तद्विदितं भवेत् ॥८४॥
यथा हि दीपो विषयान् प्रकाशयति सर्वतः ।
स्वयं प्रकाश्यतां नैति क्वचिद्दीपस्य कस्यचित् ॥८५॥
प्रकाशते स्वयं चैवानपेक्ष्यान्यं प्रकाशकम् ।
एवं सूर्यादयः[1] सर्वे प्रकाशकतया स्थिताः ॥८६॥

स्वप्रकाश इति गुरुवाक्यं श्रुत्वाऽहमेवंविधो भवामि न भवामि वेति विनिश्चयाय समाहितान्तःकरणः स्वरूपाभिमुखो यावन्न भवेदिति तात्पर्यम् । गुरुणा प्रोक्तं स्वेन श्रुतं च ॥८०॥ अत्र दृष्टान्तः—यथेति । प्रमादतः विस्मरणात् । अविज्ञाय अदृष्ट्वा ॥ ८१ ॥ तव कण्ठेऽस्तीति । स्वस्यात्मानं शरीरम् । अनुदाहृत्यासम्मुखीकृत्य । [2]तत्रेन्द्रियव्यापारमकृत्वेत्येतत् ॥ ८२ ॥ स्वस्वभावं स्वस्वरूपं निशम्य श्रुत्वा ॥ ८३ ॥ भूयो निशम्येति सम्बन्धः । अन्तरात्मानमनुदाहरेत् समाहितचित्तः स्वरूपान्तः स्वात्मैवंविधो न वेत्यात्मरूपं निश्चेतुमभिमुखो न भवेत् । तत् आत्मरूपम् ॥ ८४ ॥ एवं समाहितस्यान्तर्मुखस्यैव फलप्राप्तिरित्युक्त्वा प्रकृतमात्मतत्त्वस्यावेद्यस्य वेदनप्रकारं सदृष्टान्तं वक्तुमुपक्रमते—यथेति। सर्वतः सर्वत्र । कस्यचिदन्यस्य दीपस्य स्वयं प्रकाश्यतां नैति ॥ ८५ ॥ [1]सूर्यादयोऽप्येवमन्यप्रकाशकाः स्वप्रकाशेऽन्यानपेक्षाः स्वतः प्रकाशन्ते

१. सूर्योदये–क० ख० । २. अत्रे–क० ।

एवं च किं दीपमुखा अप्रकाश्यत्वहेतुतः ।
न सन्ति न प्रकाशन्त इति वक्तुं हि युज्यते ॥८७॥
एवं प्रकाश्यभूतेषु सत्सु दीपमुखेषु वै ।
अत्यन्तमप्रकाश्यं यच्चित्तत्त्वं तत्कुतो वद ॥८८॥
असंवेद्यं प्रकाशेत चेत्यत्र विचिकित्सितम् ।
तस्मात् त्वमन्तर्मुखया दृष्टया सम्यग् विचारय ॥८९॥
चिच्छक्तिरेषा परमा त्रिपुरा सर्वसंश्रया ।
सर्वावभासिनी कुत्र कदा वा न प्रकाशते ॥९०॥
यदा सा न प्रकाशेत प्रकाशेत तदा नु किम् ।

॥८६॥ एवं चेति । दीपादयोऽप्रकाश्यत्वहेतोः न सन्ति न प्रकाशन्त इति वक्तुं युज्यते किम् । न युज्यत इत्यर्थः ॥ ८७ ॥ एवमिति । एवं चित्प्रकाश्येषु दीपादिषु सत्स्वत्यन्तमप्रकाश्यं यच्चित्तत्त्वमसंवेद्यं प्रकाशते चेत्यत्र कुतो विचिकित्सितं तव तद्वदेति सम्बन्धः ॥ ८८ ॥ विचिकित्सितं संशयः । दीपादेर्जडस्याप्यप्रकाश्यस्य प्रकाशोऽस्तिता च दृष्टा, चिदात्मन एवंविधत्वे कः संशय इति भावः । तस्माद्-प्रकाश्यस्य प्रकाशादिसम्भवाद् अप्रकाश्यचिदात्मनः प्रकाशनं स्वतोऽस्ति वा न वेति सम्यग्विचारय ॥ ८९ ॥ प्रकाशात्मनो दीपादेः परिच्छिन्नस्य कदाचित् क्वचिदप्रकाशोऽपि स्यात्, चितेस्त्वपरिच्छिन्नाया न कदाचिदप्रकाशनमित्याह—चिच्छक्तिरिति । परमा सर्वकारणत्वेन सर्वोत्कृष्टा । त्रिपुरा तुर्या । सर्वेषां संश्रया । प्रतिबिम्बानां दर्पण इव जगदाश्रयभूता । अत एव सर्वमात्मन्यवभासयतीति सर्वावभासिनी । कुत्र देशे कदा काले केन रूपेण न प्रकाशते ? सर्वत्र सर्वदा सर्वरूपेण च प्रकाशत एवेत्यर्थः ॥९०॥ सा चितिशक्तिः[1] । तदा किं प्रकाशेत ? न किञ्चित् प्रकाशेतेत्यर्थः । ननु सुषुप्तिप्रलयादौ न

१. 'शक्ति' नास्ति–क० ख० ।

अप्रकाशेनापि सैव चितिशक्तिः प्रकाशते ॥९१॥
अप्रकाशो यथा भाति सा न भायात् कथं वद ।
भाति चेत् सा कथं भाति विमृशैतत् सुसूक्ष्मतः ॥९२॥
अत्र सर्वे न पश्यन्ति कुशला अपि पण्डिताः ।
अनन्तर्दृष्टयस्तेन मोहिताः संसरन्ति च ॥९३॥
यावद् दृष्टिः प्रवृत्तिं तु न परित्यज्य तिष्ठति ।
तावदन्तर्दृष्टितापि न स्यादेव कथञ्चन ॥९४॥

किञ्चित् प्रकाशते, अतश्चित्प्रकाशः कालपरिच्छिन्न इति चेन्नेत्याह—अप्रकाशेनेति । न प्रकाशत इति रूपेणापि चितिरेव प्रकाशत इत्यर्थः । अन्यथा न प्रकाशत इति वा कथं सिद्ध्येदिति भावः ॥ ९१ ॥ ननु सुषुप्तौ प्रकाशाभाव एव केवलं भासते, न तु चितिरिति चेदाह—अप्रकाश इति । अप्रकाशो हि न स्वप्रकाशः, विरोधात् । तस्माच्चितिरेव तत्प्रकाशिकेति सिद्धम् । तथा चाप्रकाशप्रकाशिका चितिः कथं न भायादित्यर्थः । एवं च चितेरभानेऽप्रकाशोऽपि न भायादिति चितिः सदा प्रकाशत इत्येव वक्तव्यम् । तथा च चितिः सर्वदा भाति चेत् ? सा चितिः स्वतो भाति वा परतो भाति वेत्येतत् सूक्ष्मदृशा त्वमेव विमृशेत्याह—भासत इति ॥ ९२ ॥ ननु कथमेतद्विमृशामि, यतो दृष्टो घटो हि विमृश्यते । शुद्धा चितिरदृष्टेति कथं सा विमृश्या भवेदित्याशङ्कायामाह—अत्रेति । स्वरूपे शुद्धचिद्विषय इत्यर्थः । कुशलास्तर्कनिपुणाः । कुत इति चेदाह—अनन्तर्दृष्टय इति । यतोऽनन्तर्दृष्टयस्ततो न पश्यन्तीत्यर्थः । तेन अनन्तर्दृष्टित्वेन हेतुना ॥ ९३ ॥ अन्तर्दृष्टिता कथं स्यादिति चेदाह—यावदिति । दृष्टिः मनः, तस्याः प्रवृत्तिः सङ्कल्पः । तिष्ठतीति । न स्वप्नादिकं व्रजतीत्यर्थः । सङ्कल्पं परित्यज्य जाग्रद्दशायामेव तिष्ठति, स्वप्नाद्यवस्थान्तरं न प्राप्नोतीति भावः

यावन्नान्तर्दृष्टिमेति तावत्तां न प्रपश्यति ।
अन्तर्दृष्टिर्निरीहा स्यात् सेहायाः सा कथं भवेत् ॥९५॥
परिहृत्य तु तां सम्यक् स्वभावमुपसंश्रय ।
क्षणं [1]स्वं भावमाश्रित्य निर्विमर्शस्ततः परम् ॥९६॥
विमृश्य स्मरणद्वारा ततो वेत्सि समस्तकम् ।
असंवेद्यं सुवेद्यं च तदेवं तत्त्वमुच्यते ॥९७॥
विदित्वैवमवेद्यं च प्राप्नुयादमृतां स्थितिम् ।
एतत्तेऽभिहितं सर्वं मुनिपुत्र नमोऽस्तु ते ॥९८॥
व्रजाम्यहं त्वया चैतन्न विज्ञातं सकृच्छ्रुतेः ।
बोधयिष्यति त्वामेष राजा बुद्धिमतां वरः ॥९९॥

॥ ९४ ॥ एवमन्तर्दृष्टिं विना स्वरूपं न पश्यतीत्याह—यावदिति । तां शुद्धचितिम् । अन्तर्दृष्टिपदार्थं निष्कृष्याह—अन्तर्दृष्टिरिति । निरीहा निर्गता ईहा सङ्कल्पो यस्या दृष्टेर्मनसः सा अन्तर्दृष्टिः ॥ ९५ ॥ ताम् ईहाम् । सम्यक् निःशेषेण परिहृत्य । स्वभावं स्वरूपम् । उपसंश्रयेति । मनो हि प्रत्यगात्मना शुद्धचिद्रूपेणाकाशेन पूर्णो घट इव स्वभावादेव पूर्णम् । व्रीहिपूरितघटवद् भूयः सङ्कल्पैरपि पूर्णम् । तथा च व्रीहिमात्रनिरसन आकाशपूर्णघटवत् सङ्कल्पमात्रनिरसन आत्मना पूर्णमेव मन इति सङ्कल्पपरिहारानन्तरं स्वभावोपसंश्रये न व्यापारान्तरापेक्षेति ज्ञेयम् । एवं क्षणं किञ्चित्कालं स्वभावमाश्रित्य निर्विमर्शः स्थितः । ततः परम् ॥ ९६ ॥ स्मरणद्वारा स्वभावसंश्रयदशां स्मृत्वा तच्छुद्धचिद्रूपं सङ्कल्पाभावदशायां स्वतो भातं वा परतो भातं वेत्येतद्विमृश । ततः एवं विमर्शनात् । तच्छुद्धचित्तत्त्वम् । असंवेद्यं सुवेद्यं चैवमुच्यत इति समस्तं त्वं स्वत एव वेत्सि ज्ञास्यसीत्यर्थः ॥ ९७ ॥ जन एवमुक्तप्रकारेण इतरावेद्यं स्वतो विदित्वा प्रकाशमानमुपलभ्य । अमृतां स्थितिं मोक्ष-

१. स्वभाव—क० ग० ।

पृच्छ भूयः संशयं ते सर्वं छेत्स्यति वै नृपः ।
इत्युक्त्वा पूजिता राज्ञा प्रणता च सभासदैः ।।१००।।
वातनुन्नाभ्रलेखेव क्षणादन्तर्द्धिमाययौ ।
एतत् तेऽभिहितं राम वेदनप्रक्रियात्मनः ।।१०१।।

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे अष्टावक्रीये
पञ्चदशोऽध्यायः ।।



दशाम्। उपसंहरति—एतदिति ॥ ९८ ॥ सकृच्छ्रुतेः संक्षेपेणैकवारं श्रवणात् ॥ ९९ ॥ अत्र यः संशयस्ते स्यात् तं पृच्छ। सभासदैः सभासद्भिः ॥ १०० ॥ वातेन नुन्ना प्रेरिताऽभ्रलेखेव। अन्तर्धिमन्तर्धानम्। आत्मनो वेदनप्रक्रिया शुद्धचिदात्मोपलब्धुमशक्य इति यदध्यायादौ पृष्टं तदेवं वेदनप्रकार उक्त इत्युपसंहृतं गुरुणेति ज्ञेयम् ॥१०१॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
पञ्चदशोऽध्यायः ॥



# अथ षोडशोऽध्यायः

श्रुत्वैतद् भार्गवो रामः प्राप्य विस्मयमान्तरे ।
भूयः पप्रच्छात्रिसूनुमवितृप्तः कथाश्रुतेः ॥ १ ॥
भगवन्नद्भुतं ह्येतच्छ्रुतं वृत्तं पुरातनम् ।
भूयः पप्रच्छ राजानमष्टावक्रो महामुनिः ॥ २ ॥
यद्राजा प्रत्युवाचैनं तच्च मे वद सर्वशः ।
अहोऽद्भुतं समाख्यानं न क्वचिच्च मया श्रुतम् ॥ ३ ॥
विज्ञानवृत्तसर्वस्वं दयया वद मे गुरो ।
इत्येवमनुयुक्तोऽथ दत्तात्रेयो महामुनिः ॥ ४ ॥
भार्गवाय समाचख्यौ कथां परमपावनीम् ।
शृणु भार्गव यत् प्रोक्तं जनकेन महात्मना ॥ ५ ॥
निर्गतायां तु तापस्यामष्टावक्रो मुनेः सुतः ।
संवृतो बहुभिर्विप्रैः समेत्य नृपपुङ्गवम् ॥ ६ ॥
पप्रच्छ यत्तु तापस्या [1]संक्षिप्योक्तं महार्थकम् ।
तदुच्यमानं तु मया सम्यक् शृणु समाहितः ॥७॥

अत्राध्याये वेद्यपद्यैर्वेद्याऽवेद्या च सा चितिः ।
निरोधसुप्तिभेदश्च युक्त्या सम्यग् निरूप्यते ॥

कथाश्रुतेः कथाश्रवणात् ॥१॥ यत् पप्रच्छेत्यन्वयः ॥२-३॥ विज्ञानवृत्तं विज्ञानप्रक्रिया, तदेव सर्वस्वं मुख्यार्थो यत्र । जनकाष्टावक्रसंवादरूपमाख्यानम् । अनुयुक्तः पृष्टः ॥ ४-५ ॥ नृपपुङ्गवं जनकम् ॥ ६ ॥ महानर्थः मोक्षाख्यो यस्मात् । एवंविधं तापस्योक्तम् ॥ ७ ॥

---

१. संक्षेपो-ख० ।

राजन् विदेहाधिपते तापस्योक्तं तु यत्तया ।
तदहं नाविदं सम्यक् संक्षेपोक्तत्वहेतुतः ॥ ८ ॥
कथं विद्यामवेद्यं तत् समाचक्ष्व दयानिधे ।
एवं जनक आपृष्टः प्राह तं विस्मयन्निव ॥ ९ ॥
मुनिपुत्र शृणु वचो मया यत् प्रोच्यतेऽधुना ।
नावेद्यं सर्वथा तद्धि वेद्यं चापि न सर्वथा ॥१०॥
अवेद्यं चेत् सर्वथैव तद् गुरुः किं वदेद्वद ।
गुरुरावेदयेत् तत्त्वमत आदौ गुरुं श्रयेत् ॥११॥
एतद्वेदनमत्यन्तं सुलभं दुःशकं च हि ।
यः परावृत्तदृष्टिः स्यात्तस्य तत् सुलभं भवेत् ॥१२॥
यः पराग्दृष्टिरेवास्ते तस्य तच्चातिदुर्लभम् ।
अनिरूप्यं केवलं तदवेद्यमपि सर्वथा ॥१३॥
कथञ्चिदन्यरूपेण निरूप्यं वेद्यमप्युत ।
यद्यद् दृश्यं पश्यसीह तेन तद्वेद्यमुच्यते ॥१४॥

अष्टावक्रः पृच्छति—राजन्नित्यादिना । संक्षेपेणोक्तत्वाद्धेतोर्नाविदम् ॥ ८ ॥ अवेद्यं तच्छुद्धचित्तत्त्वं कथं विद्याम् । अवेद्यं तन्मम वेद्यं कथं भवेदिति भावः । विस्मयन्निव आश्चर्यं प्राप्त इव । तत्त्वप्रष्टुर्दुर्लभत्वात् ॥ ९ ॥ तत् शुद्धचिदात्मतत्त्वम् ॥ १० ॥ अवेद्यमिति । सर्वथाऽवेद्यत्वे गुरूपदेशस्तत्फलं वा न भवेदिति भावः । यतो गुरुरावेदयेदतो गुरुं श्रयेच्च । अतो नात्यन्तमवेद्यम् ॥ ११ ॥ एतद्वेदनं शुद्धचिदात्मज्ञानम् । कुत एवमिति चेदाह—एतदिति[1] । परावृत्ता अन्तर्मुखी दृष्टिरन्तःकरणस्य [ णं यस्य ] ॥ १२ ॥ परागदृष्टिर्बहिर्दृष्टिः । इदमिति सर्वथाऽनिरूप्यमवेद्यं च ॥ १३ ॥ एवमप्यन्यरूपेण 'इदं न इदं न' इत्यतद्व्यावृत्तिरूपेण निरूप्यं वेद्यञ्च । ननु परैर्हि ज्ञानं ज्ञानान्तरवेद्य-

१. य इति—ग० ।

यत्तेऽवभासते किञ्चित् तद्विभावय सद्धिया ।
भानशक्तिर्भास्यहीना सर्वभानसमाश्रया ॥१५॥
सैव तत्तत्त्वमित्येव विजानीहि मुनेः सुत ।

मित्युच्यते, तत् कथमिति चेदाह—यद्यदिति। यद्यद् घटादिदृश्यं पश्यसि तेन रूपेणैव परैरपि ज्ञानं वेद्यमित्युच्यते। तथा च घटज्ञानवानह-मित्यादौ ज्ञानस्य घटाद्यन्यरूपेणैव वेद्यत्वं न स्वत इति भावः। [1]ज्ञानस्य हि तत्तदुपाधिपरिच्छिन्नानन्तज्ञानानुस्यूतं ज्ञानसामान्य-मात्रं नैजं रूपम्। अत एव देशकालाकारैरपरिच्छिन्नम्। [2]तच्चावेद्यमेव, तस्य तदतिरिक्तेन वेदनाप्रसिद्धेरिति ध्येयम् ॥ १४ ॥ ननु तर्ह्येवं-विधमपरिच्छिन्नज्ञानात्मकमात्मतत्त्वं कथमहं विजानामीति चेदाह—यत्त इति। यत्तव किञ्चिज्ज्ञानं घटाद्याकारमवभासते, तत् सद्धिया कुतर्करहितया सच्छ्रद्धाविशदया धिया विभावय। कथं विभावनीय-मिति चेदाह—भानेति। यद्धि घटज्ञानं तत्रांशद्वयमस्ति—घटः, ज्ञानं चेति। तत्र घटः प्रकाश्यः, ज्ञानं प्रकाशः। तदेव प्रकाशमात्रात्मकं ज्ञानं भानशक्तिरित्युच्यते। सा च भास्यहीना। तस्या भानशक्ते-र्भास्यं हि घटस्य मृदिव वा नीलरूपमिव वा न[3] स्वरूपान्त-र्गतमतो भास्यहीनेत्यर्थः। सर्वभानेति। विषयभेदेन पुरुषभेदेन वा यानि भानानि विभिन्नमिवावभासमानानि तेषां सर्वेषां समाश्रया। भानानां वेद्यांशं विहायान्यथा[4] स्वरूपे भेदस्य दुर्वचत्वेना-[5]भेदात् सर्वभानात्मत्वेन सर्वभानसमाश्रयेति भावः ॥ १५ ॥ सैव प्रोक्तभानशक्तिरेव। तत्तत्त्वं शुद्धचिदात्मतत्त्वम्। एवमुपाधि-परिच्छिन्नाखिलज्ञानानुगतं भानशक्तिरूपमेवात्मतत्त्वमित्युक्तम्।

---

१. 'ज्ञानस्य हि' इत्यस्य स्थाने 'तान् पश्यसीह' इति पाठः–ख० ।
२. तच्च–क० ख० । ३. 'न' नास्ति–क० ख० ।
४. य तथा–क० ख० । ५. त्वेन–ग० ।

वेद्यमेव न वित्तिः स्यात् स्वतो यन्न प्रकाशते ॥१६॥
वित्तिरन्या यया वेद्यं वेद्यते न स्वतः क्वचित् ।
वेद्यं विभिन्नरूपं वै वित्त्यैव वेद्यते खलु ॥१७॥
तत्तद्रूपविभेदेन वित्तिर्नो भिद्यते क्वचित् ।
भेदो हि वेद्यधर्मः स्यान्न वित्ति संस्पृशेत् क्वचित् ॥१८॥
यत आकारभेदो हि वेद्यपक्षे विभासते ।
पश्य वेद्यं पृथक्कृत्य बुद्ध्याऽऽकारविवर्जिताम् ॥१९॥
बिम्बानुकृतिरादर्शो यद्वत् तद्वदियं चितिः ।

सम्प्रति ज्ञाने भासमानभेदो हि न स्वाभाविकः, किन्त्वौपाधिक इति साधयितुमारभते—वेद्यमेवेति । घटादिज्ञाने भासमानो यो घटादिरूपो वेद्यांशः स एव न वित्तिः, न ज्ञानम् । ज्ञानांशस्य वेद्यभूतो घटादिर्न स्वरूपमिति भावः । यत् यस्माद्वेद्यं स्वतो न प्रकाशते । वेद्यं न वित्तिरूपम् । अस्वप्रकाशत्वादिति भावः ॥ १६ ॥ अतो वित्तिर्वेद्यादन्या । यया वित्त्या वेद्यं वेद्यते प्रकाश्यते । नहि वित्तिवद्वेद्यं स्वतः क्वचित् प्रकाशते । यत एवं वेद्यं वित्त्यैव वेद्यते, अतो वेद्यं वित्तेर्विभिन्नरूपम् ॥ १७ ॥ अतस्तत्तद्वेद्यरूपविभेदेन वित्तिर्न क्वचिद्भिद्यते । ननु ( यथा ) अयं घटो न पट इतिवद् इदं घटज्ञानं न पटज्ञानमिति प्रत्ययाद् ज्ञानेऽप्यस्ति भेद इति चेन्नेत्याह—भेद इति । यथाऽयं घटाकाशोऽयं मठाकाश इति, एवं स भेदो घटादिवेद्यधर्म एव, वित्तेर्न भेदस्पर्शोऽपि ॥ १८ ॥ प्रतीयमानो भेदो ज्ञानगत एव कुतो नेति चेदाह—यत इति । यतो भेदस्तु परस्परमाकारभेदाद्वक्तव्यः । तथा चाकारभेदस्य शुक्लनीलवर्तुलादिरूपस्य वेद्यपक्ष एव भासमानत्वान्न वित्तेर्निराकाराया भेदः । नायं परोक्षवादः, किन्तु प्रत्यक्षत उपलभ्य इत्याह—पश्येति । सूक्ष्मया बुद्ध्या असङ्कल्पयुक्त्या वित्तेर्वेद्यं पृथक्कृत्य आकारविवर्जितां वित्तिं पश्य ॥ १९ ॥ अत्र दृष्टान्तमाह—

दृश्याकारधृतेर्नानारूपतां प्रतिपद्यते ॥२०॥
एवं वित्तिरियं वेद्या वेद्यव्यावृत्तरूपतः ।
न तु स्वभावतो वेद्या सा वित्तिर्विश्वसंश्रया ॥२१॥
यत एतद्वेदितुः स्याद् रूपं तस्मान्न वेद्यते ।
विमृशाष्टावक्र रूपं निजमेवंविधं स्फुटम् ॥२२॥
न त्वं शरीरं प्राणो वा मनो वाप्यस्थिरत्वतः ।
शरीरं धातुनिकरं तत्ते रूपं कथं भवेत् ॥२३॥

बिम्बेति । यथा ह्यादर्शं एकरूपोऽपि विभिन्नबिम्बानुकृतिर्भवति, तद्वदियं चितिरपि दृश्यानां घटादीनां य आकारो नीलवर्तुलादिरूपः, तस्य धृतेर्धारणान्नानारूपतां प्रतिपद्यते, न स्वत इति भावः ॥२०॥ एवमिति । उक्तप्रकारेण वेद्यव्यावृत्ता । [1]इयं प्रक्रान्ता । [2]सेयं वित्तिः, वेद्यव्यावृत्तरूपतः वेद्यानाम् इदं न इदं नेति व्यावर्तने निषेध[ धे ] कृते सति, [3]परिशेषरूपतो वेद्या भवेत्, न तु स्वभावतो वित्तिरियमीदृशीति वेद्या । विश्वसंश्रयेति । घटादिपरिच्छिन्ना वित्तिः कथञ्चिदियमिति वेद्या स्यात् । विश्वसंश्रयाऽपरिच्छिन्ना शुद्धवित्तिस्तु नेयमिति वेद्येति भावः ॥ २१ ॥ अत्र हेतुमाह—यत इति । शुद्धा वित्तिर्यस्माद्वेदितुः स्वरूपं तस्मान्न वेद्यते । अयमत्राशयः—शुद्धवित्तेर्वेदितृरूपत्वेन कर्तरि करणव्यापाराप्रवृत्तेर्नैयमिति वेद्यता, अपि त्वात्मत्वेन भासमानवेद्यदेहादेः सर्वस्य नायमात्मेति प्रतिषेधे कृते स्वात्मरूपस्य प्रतिषेद्धुमशक्यत्वेन तस्य प्रतिषेधावधिभूतस्य सर्वप्रतिषेधानन्तरमितरानुल्लेखे स्वतः प्रकाशमानत्वात्ततो व्युत्थितस्य तद्दशाविमर्शनेन वेद्यमिव भवेदिति । एवंविधं वेदित्रात्मकम् ॥ २२ ॥ विमर्शनप्रकारमेवाह— न त्वमिति । अस्थिरत्वतः शरीरप्राणमनसां स्थिरैकरूपत्वाभावात् । अनुसन्धानेनात्मनः स्थिरैकरूपत्वे सिद्धे धातुनिकराद्य-

१. 'इयम्' नास्ति–ग० । २. सा–ख० । ३. अपरि–क० ख० ।

तच्चान्यविषयाभासे त्वहंधियमतिव्रजेत् ।

स्थिरात्मकशरीरादि ते रूपं कथं भवेत् ॥ २३ ॥ हेत्वन्तरमप्याह— तच्चेति । शरीरादिकमित्यर्थः । आत्मनः स्वप्रकाशत्वेन सर्वदाऽहमिति स्फुरद्रूपत्वम् । शरीरादिकं तु न तथा । घटाद्यन्यविषयभानकाले[1] हि शरीरादिकम् अहंधियम् अहमिति स्फूर्तिम्, अतिव्रजेत् अतिक्रम्य व्रजेत् । अहमिति न स्फुरेदिति तात्पर्यम् । न च घटादिज्ञानकालेऽपि देहादिकमहन्त्वेन स्फुरत्येवेति वाच्यम्, घटादिज्ञानकाले गौरप्रांशुत्वादिगुणवतो देहादेः स्फुरणस्यानुभवासिद्धत्वात्, घटादिज्ञानेषु देहः प्रांशुर्गौर इत्याद्युल्लेखप्रसक्तेश्च । यद्वाऽन्यविषयाभास [2]इत्यस्यान्यविषयत्वेनायं देहो ममेत्यनात्मत्वेनावभासे इत्यर्थः । न चैवं घटाद्यवभासकाले शुद्धात्मनोऽप्यहमिति स्फुरणं नास्तीति वाच्यम्, तथा सति घटादेरप्रकाशप्रसङ्गात् । यतः प्रकाशकाभिमतो दीपादिरप्रकाशमानो न घटादिकं प्रकाशयन् दृष्टः । न च तदा प्रकाशमानोऽपि नाहमिति स्फुरतीति वाच्यम्, यतः प्रकाशनं हि केनचिद्वपुषैव युज्यते, न केवलम्, जाड्यापत्तेः । तथा च योग्यत्वादहमित्येव प्रकाशते । अत एव ज्ञानानां स्वतःप्रामाण्यवादिभिरहं घटं जानामीत्येवाकारोऽभ्युपगतः । अथ च घटादिज्ञानेष्वहमिति स्वरूपस्फुरणानभ्युपगमेऽहमस्मि वा न वेति संशयविपर्यययोरभावनियमानुपपत्तिः । न च घटादिज्ञानकालेऽहमिति स्फुरणं देहादिविषयकमेवेति वाच्यम्, घटादिज्ञानकाले तथात्वसम्भवेऽप्ययं मे देह इत्यादिदेहादिज्ञानकाले तदसम्भवात् । न च चैत्रोऽयमिति ज्ञानकाले चैत्रीयचिदात्मनोऽपीदंप्रत्ययविषयत्वेनाऽहंबुद्ध्यतिक्रमणमस्तीति वाच्यम्, चैत्रस्य तत्कालेऽहंप्रत्ययस्याक्षतत्वात् । न च सुषुप्तौ समाधौ वाऽहंप्रत्ययो नास्तीति वाच्यम्, स्मृत्यनुसन्धानानुरोधेन तत्कालेऽपि स्वरूपस्फूर्तेरभ्युपेयत्वेन

---

१. भासनकाले—क० ग० । २. सेऽन्यस्यान्य—क० ख० ।

एवं प्राणो मनोऽपि स्यादहंबुद्धिव्यतिक्रमात् ॥२४॥
अहंबुद्धिं न व्यतीत्य तिष्ठत्येषा परा चितिः ।

सर्वैरिष्टत्वात् । ननु सुषुप्तिसमाध्योरात्मनो निर्विकल्पत्वेन तदाऽहमिति सविकल्पप्रत्ययो न सम्भवतीति चेत् ? अत्राहुरागमतत्त्वविदः—अहं प्रत्ययो हि द्विविधः—निर्विकल्पः, सविकल्पश्चेति । विकल्पो नाम भेदः, तेन सहितः सविकल्पः । तदन्यो निर्विकल्पः । तथा च देहादि-परिच्छिन्नविषयकोऽहंप्रत्ययो भेदविषयकत्वेन सविकल्पः । समाधि-सुषुप्त्योः स्वरूपमात्रविषयकत्वेन भेदास्पर्शादहंप्रत्ययो निर्विकल्प इति । न च समाध्यादवाहंप्रत्ययाभ्युपगमे त्रिपुटीप्रसक्तिरिति शङ्कनीयम्, तदानीमहंप्रत्ययमात्रपरिशेषेण प्रत्ययप्रत्ययिप्रत्येय-भेदास्फूर्तेः । एतच्चोक्तं प्रत्यभिज्ञायाम्—"अहंप्रत्यवमर्शो यः प्रकाशात्मापि वाग्वपुः । नासौ विकल्पः स ह्युक्तो द्वयापेक्षी विनिश्चयः ॥" [ १।५३ ] इति । एष एवाहंप्रत्ययः पूर्णाहन्तापूर्णख्याति-रित्यादिपदैरागमेषु व्यवह्रियते । अस्याः पूर्णाहन्ताया भाविवाङ्-निमित्तत्वदृष्ट्या वाग्वपुरित्यादिव्यवहारः । वस्तुतस्तदानीं न स्थूल-शब्दमयत्वमिति ज्ञेयम् । न चैवंविधपूर्णाहंरूपता निर्विकल्पचित्स्वभा-वस्य प्रत्याख्यातुं शक्या, जडत्वापत्तेः । यदुक्तं भगवता हरिणा—"वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी ॥" [वा० प० १।१२४] इति । श्रीप्रत्यभिज्ञायामपि—"स्वभावमवभासस्य विमर्शं विदुरन्यथा । [1]प्रकाशोऽर्थोपरक्तोऽपि स्फटिकादिजडोपमः ॥" [ १।४२ ] इति । एवं निर्विकल्पचिदात्मनो-ऽहंरूपता श्रीभगवत्पादैरप्युक्ता—"बाल्यादिष्वपि जाग्रदादिषु तथा सर्वास्ववस्थास्वपि व्यावृत्तास्वनुवर्तमानमहमित्यन्तः स्फुरन्तं सदा" [ द० स्तो० ७ ] इति । एवमिति । त्वद्रूपाद्भिन्नमित्यर्थः । तमेव हेतुमाह—अहंबुद्धीति ॥ २४ ॥ यस्मादहंबुद्धिं चितिर्न व्यतीत्य तिष्ठति,

१ प्रकाशार्थो""स्फटिको हि जडोपमः—क० ख० ।

तस्माच्चितिः सर्ववेत्त्री त्वमष्टावक्र तत्त्वतः ॥२५॥
पश्य प्रत्यावृत्तचक्षुः स्वात्मानं केवलां चितिम् ।
आदेशकाल एव स्वं पश्यन्त्युत्तमबुद्धयः ॥२६॥
चक्षुर्नैतद् गोलकं ते मनश्चक्षुरुदाहृतम् ।
येन पश्यसि स्वप्नेषु तच्चक्षुर्मुख्यमुच्यते ॥२७॥
तस्य प्रत्यावृत्तिरपि प्रोच्यते शृणु भूसुर ।
अप्रत्यावृत्तचक्षुर्वै नैव पश्यति किञ्चन ॥२८॥
दिदृक्षुश्चक्षुषा किञ्चित्तदन्येभ्यो ह्यशेषतः ।
प्रत्यावृत्त्य दृढं तस्मिन्नेव संयोजयेद्यदि ॥२९॥
तदा तद्भासते स्पष्टं नान्यदा तु कदाचन ।

तस्मात् सर्ववेत्त्री चितिरेव त्वम् ॥ २५ ॥ नैवंविधमात्मतत्त्वं परोक्षमित्याह—पश्येति । ननु श्रवणानन्तरं मननादिक्रमेण कालान्तरे पश्यामीति चेदाह—आदेश इति । उपदेशकाले श्रवणकाले एवेत्यर्थः । स्वम् आत्मानम् ॥ २६ ॥ ननु चक्षुषो बहिःप्रसरस्वभावस्य कथं प्रत्यावृत्तिः स्यादिति चेदाह—चक्षुरिति । प्रत्यावृत्तचक्षुरित्यत्र विवक्षितं चक्षुर्नैतद् गोलकं बहिः सर्वैर्दृश्यमानम्, किन्तु मन एव चक्षुःशब्देनोच्यते । ननु मनसः कथं [1]चक्षुष्ट्वत्वमिति चेत्तदेव मुख्यं चक्षुरित्याह—येनेति । जाग्रति नेत्रव्यापारस्य मनोऽधीनत्वेन, स्वप्नेषु मनस एव चक्षूरूपत्वेन च मन एव मुख्यं चक्षुरिति भावः ॥ २७ ॥ तस्य मनोरूपमुख्यचक्षुषः । मनसः प्रत्यावृत्तिं विना न किञ्चिदपि पश्यतीत्यर्थः ॥ २८ ॥ एतदेव निरूपयति—दिदृक्षुरिति । किञ्चिद्दिदृक्षुः पुरुषो दिदृक्षितादन्येभ्योऽशेषेभ्यो मनः प्रत्यावृत्त्य तस्मिन् दिदृक्षित एव यदि निश्चलत्वेन दृढतया मनः संयोजयेत्तदा तद्भासत इत्यन्वयः ॥ २९ ॥ तद् दिदृक्षितम् । अन्यदा मनसोऽप्रत्यावृत्तिकाले । भासमानमपि

१. चक्षुःशब्दत्व-क० ।

अन्यदा तु पुरोवृत्ति न स्पष्टं भासते क्वचित् ॥३०॥
अभातकल्पमेव स्यादप्रत्यावृत्तचक्षुषा ।
एवं श्रोत्रत्वगादीनां भूदेवावेहि संस्थितिम् ॥३१॥
मनसाऽप्येवमेव स्यात् सुखदुःखावभासनम् ।
नाप्रत्यावृत्तमनसा किञ्चिद् वेदितुमर्हति ॥३२॥
तस्मात्तदेकपरता परावृत्तिश्च चक्षुषः ।
प्रत्यावृत्तं मनः शुद्धं निजरूपावभासकम् ॥३३॥
अत्र ते सम्प्रवक्ष्यामि शृणु तन्नियतान्तरः ।
अगोचरश्चेदात्मासौ मनसा गोचरोऽपि च ॥३४॥
अत्र मुह्यन्ति बहवः श्रुत्यागमविवेचकाः ।
मनोगोचरता बाह्ये द्विप्रकारेण संस्थिता ॥३५॥
आद्यान्येभ्यः परावृत्तिः परा तत्परता भवेत् ।

न विशेषरूपेण स्पष्टं भासत इत्याह—अन्यदेति ॥ ३० ॥ एवमस्पष्टं भातमभाततुल्यमित्याह—अभातेति । एवं नेत्रवत् । प्रत्यावृत्तमनस एव श्रोत्राद्यैः शब्दादिग्रहणमिति भावः ॥३१॥ मानससुखाद्यवभासनमप्येवमेवेत्याह—मनसेति । पुरुषो वेदितुमर्हति ॥ ३२ ॥ तस्मादुक्तप्रकारेणान्वयव्यतिरेकदर्शनात् । दिदृक्षितैकपरता तदन्येभ्यः परावृत्तिश्च मनसो दिदृक्षितावभासनेऽपेक्षितेति शेषः । आत्मनो निजरूपावभासकं प्रत्यावृत्तं मन एव । [1]न तस्य तदेकपरताऽपेक्षितेति भावः ॥ ३३ ॥ अत्र आत्मावभासने । यद्विशेषं प्रवक्ष्यामि तच्छृणु । मनसः अगोचरो गोचरश्च ॥ ३४ ॥ अत्र आत्मनो मनोगोचरत्वं तदभावश्चेत्यत्र । एतदेव निरूपयितुमुपक्रमते—मन इति । बाह्ये अनात्मनि ॥ ३५ ॥ द्विप्रकारतामेवाह—आद्येति । दिदृक्षितादन्येभ्यः परावृत्तिः । परा द्वितीया । तत्परता तदेकनिष्ठितिः । एवं द्विविधा मनोगोचरता

1. एतच्चात्रैवाग्रेऽनुपदमेव स्पष्टीभविष्यति ।

अन्येभ्यस्तु परावृत्तिमात्रेऽपि मनसः सति ॥३६॥
न किञ्चिद्भासयेद्वस्तु तटस्थावसरेषु यत्[1] ।
तस्मात्तत्परताप्यत्र व्यापारो मानसः परः ॥३७॥
एवं व्यावृत्तभावानां व्यापारद्वयभासनम् ।
अव्यावृत्ता चितिर्यस्मात्तस्मान्नात्र तथा भवेत् ॥३८॥
अन्येभ्यस्तु परावृत्तिमात्रेणैवावभासयेत् ।
यथा पुरःस्थितादर्शे किञ्चिद्दर्शनहेतवे ॥३९॥
अन्येभ्यस्तु परावृत्तिराभिमुख्यं च तस्य वै ।
अपेक्ष्यते दर्पणस्य प्रतिबिम्बदिदृक्षुणा ॥४०॥
गगनं दर्पणे द्रष्टुं यदा समभिवाञ्छति ।
तदाऽन्येभ्यः परावृत्तिमात्रेण हि कृतार्थता ॥४१॥

मनोव्यापारः । अन्यपरावृत्तिमात्रमेवास्तु, तत्परता मास्त्विति चेदाह—अन्येभ्य इति ॥ ३६ ॥ तटस्थावसरेषु उदासीनदशासु । यद्यस्माद् न[2] किञ्चिद्वस्तु भासयेत्, तस्मात्तत्परताऽप्यत्र वस्तुभासने मानसः परो द्वितीयो व्यापार एष्टव्य इति शेषः । यद्यपि तत्परत्वमात्रस्य मनोव्यापारत्वे न कश्चिद्दोषः, तथापि तत्परत्वमात्रमित्यत्र मात्रपदार्थ एवान्यपरावृत्तिरिति ज्ञेया ॥ ३७ ॥ एवमुक्तरीत्या व्यावृत्तभावानां परिच्छिन्नानात्मवस्तूनां मानसव्यापारद्वयेन भासनम् । अत्र चिदात्मविषये । न तथा न व्यापारद्वयापेक्षं भासनं भवेत् ॥ ३८ ॥ तर्हि कथं तदवभासनमिति चेदाह—अन्येभ्य इति । मनश्चिदात्मानमवभासयेत् । अत्र दृष्टान्तः—यथेति । किञ्चित् प्रतिबिम्बदर्शनहेतवे ॥३९॥ तत्प्रतिबिम्बादन्यप्रतिबिम्बेभ्यः परावृत्तिस्तत्प्रतिबिम्बाभिमुख्यं च बिम्बदिदृक्षुणाऽपेक्ष्यते ॥ ४० ॥ दर्पणान्तर्गतयत्किञ्चित्प्रतिबिम्बावभासने व्यापारद्वयापेक्षामुक्त्वा तदन्तर्गतप्रतिबिम्बगगनदर्शने न व्यापारद्वयापेक्षेत्याह—

१. तत्—क० । २. 'न' नास्ति—क० ।

गगनं सर्वतो व्याप्तं दर्पणे सर्वदा स्थितम् ।
अव्यावृत्तं किन्तु चान्यैरभिच्छन्नं न भासते ॥४२॥
सर्वाश्रयं सर्वगतमपि तैश्छादितं यतः ।
अतस्तेभ्यः परावृत्तिमात्रेणैव विभासते ॥४३॥
एवं चितिः सर्वगता सर्वाश्रयतया स्थिता ।
सर्वकाले समापूर्णा मनसि व्योमवद् द्विज ॥४४॥
तस्मादन्यपरावृत्तिमात्रं मनस इष्यते ।
पश्य विप्र चितिः कुत्र कदा नास्त्यवभासिनी ॥४५॥

गगनमिति । अन्येभ्यः प्रतिबिम्बेभ्यः । कृतार्थता प्रतिबिम्बगगनावभासनसिद्धिः ॥४१॥ एतदेवोपपादयति—गगनमिति । दर्पणे प्रतिबिम्बगगनं सर्वतो व्याप्तं सदा स्थितं च, तद्गतनिखिलप्रतिबिम्बेभ्योऽव्यावृत्तं च[1] । एवं स्थिते प्रतिबिम्बभासनकाले कुतो न भासत इति चेदाह—किन्तु चान्यैरिति । अन्यैः प्रतिबिम्बैरित्यर्थः ॥ ४२ ॥ सर्वप्रतिबिम्बानामाश्रयमपि । दर्पणे सर्वत्र गतं स्थितमपि । तैः प्रतिबिम्बैः । यतः छादितम्, अतः प्रतिबिम्बेभ्यः परावृत्तिमात्रेण गगनं विभासते । यद्यप्यत्र तटस्थस्य तद्गगनावभासात्तत्परत्वमप्यपेक्षितमेव, तथापि प्रतिबिम्बदिदृक्षोर्दर्पणतत्परस्य अन्यप्रतिबिम्बपरावृत्तिमात्रेण दर्पणतत्परत्वेनैव गगनावभासनम्, न तत्परतान्तरमपेक्षितमिति [2]बोध्यम् ॥ ४३ ॥ दार्ष्टान्तिके योजयति—एवमिति । सर्वकाले समेति । दर्पणगगनवद् घटादिभासनकालेऽपि सर्वगतत्वादिकं न त्यजतीत्यर्थः । दर्पणे गगनवन्मनसि पूर्णा ॥ ४४ ॥ यस्मान्मनसि सर्वदा पूर्णा तस्मात् । संविदात्मस्वभावभासनेऽनात्मवस्तुभ्यः परावृत्तिमात्रं मनसः प्रत्यावृत्तत्वमितीष्यते । अत्रेदं तात्पर्यम्—शुद्धचिदात्मनः सर्वगतत्वेन मनोगतत्वे सिद्धे चिदात्मनोऽन्येभ्यः परावृत्तस्य मनसः स्वप्रकाशस्य

---

१. तेभ्य—क० । २. ध्येयम्—ख० ग० ।

यदा यत्र च सा नास्ति न यदा नापि यत्र च ।
तस्माच्चिदात्मावभासे मनसोऽन्यपरावृतिः ॥४६॥
केवलापेक्षिता नैवाभिमुख्यं नूतनं क्वचित् ।
आभिमुख्याभावहेतोरेवाऽवेद्यत्वमिष्यते ॥४७॥
अत एव शुद्धमनोवेद्यं तत्तत्त्वमुच्यते ।
अन्येभ्यस्तु परावृत्तिरेव शुद्धिर्हि मानसी ॥४८॥
एतदेव परं तत्त्वज्ञाने साधनमुच्यते ।
यावन्नहि मनः शुद्धं तावज्ज्ञानं कथं भवेत् ॥४९॥
शुद्धे मनसि वै ज्ञानं कथं वा न भवेद् ध्रुवम् ।
उपक्षीणं सर्वमत्र साधनं तस्य शोधने ॥५०॥
कर्म वोपासनं वापि वैराग्यादिकमेव वा ।

स्वानभिमुख्या घटना निसर्गसिद्धं स्वाभिमुख्यमिति नापूर्वस्य तत्परत्वस्यापेक्षेति । चितिः सर्वगतेत्येतत् साधयति—पश्येति ॥ ४५ ॥ सा चितिः । न यदेति । यदेत्युक्तः कालो यत्रेत्युक्तो देशश्च तदा न सिद्ध्येदिति भावः । तस्मात् सर्वगतत्वादन्यपरावृत्तिः केवलाऽपेक्षितेति सम्बन्धः ॥ ४६ ॥ आभिमुख्यस्य निसर्गसिद्धत्वान्नूतनं तन्नापेक्षितमित्याह—नैवेति । चिदात्मनोऽवेद्यत्वमाभिमुख्यानपेक्षणादेवोच्यत इत्याह—आभिमुख्येति ॥ ४७ ॥ अत एवेति । अवेद्यत्वस्याभिमुख्यानपेक्षणहेतुकत्वादेव । केयं शुद्धिरिति चेदाह—अन्येभ्य इति ॥ ४८ ॥ एतदेव अन्यपरावृत्तिरेव । परं मुख्यं साधनम् । व्यतिरेकतोऽस्य मुख्यसाधनत्वमाह—यावदिति ॥ ४९ ॥ अन्वयतोऽपि तस्य मुख्यतामाह—शुद्ध इति । कर्मोपासनादि [1]सर्वं शास्त्रोक्तसाधनं मनःशोधन एव विनियुक्तमित्याह—उपक्षीणमिति । अत्र अस्मिन् । तस्य मनसः शोधने ॥ ५० ॥ एतदेव स्पष्टमाह—कर्म वेति । आदिना भक्तिश्रद्धादि । न

१. सर्व—क० ।

मनसः शोधने एव विनियुक्तं न चान्यथा ॥५१॥
तस्माच्छुद्धेन मनसा भासते तत् परं वपुः ।
इति राज्ञेरितं श्रुत्वा त्वष्टावक्रः पुनर्जगौ ॥५२॥
राजंस्त्वयोक्तमन्येभ्यः परावृत्तिर्हि मानसी ।
केवला चेत् सा परा चिद् मनसा प्रविभासते ॥५३॥
तत् सुषुप्तौ विभासेत परावृत्तं मनस्तदा ।
[1]ततः किं साधनैरन्यैः सुप्तिमात्रात् कृतार्थता ॥५४॥
इति पर्यनुयुक्तोऽथ विप्रेणोवाच भूपतिः ।
समाहितः शृणु ब्रह्मन् समाधानं वदामि ते ॥५५॥
सत्यं सुषुप्तौ मनसः परावृत्तिस्तु सर्वथा ।
लीनं मनस्त्वं चाप्यस्य कथं तामवभासयेत् ॥५६॥
कज्जलेन समालिप्ते दर्पणे गगनं नहि ।
अन्येभ्यस्तु परावृत्तिमात्रेण भासते क्वचित् ॥५७॥

चान्यथा न साक्षाज्ज्ञाने विनियोगः ॥ ५१ ॥ तस्मात् सर्वसाधनानां मनःशोधने उपक्षीणत्वात् । परं वपुः शुद्धचिद्वपुरात्मा । राज्ञा जनकेन ॥५२॥ अन्येभ्यः अनात्मवस्तुभ्यः । तत्परत्वमनपेक्ष्य मनसोऽन्यपरा-[2] वृत्तिः केवला सम्पन्ना चेच्छुद्धात्मस्वरूपं भासत इति त्वयोक्तम् ॥ ५३ ॥ एवं चेत् सुषुप्तौ मनसोऽन्यपरावृत्तत्वात् तद् आत्मस्वरूपं विभासेत । ततः साधनानां वैयर्थ्यमित्याह—किं साधनैरिति ॥ ५४ ॥ पर्यनुयुक्तः आक्षिप्तः ॥ ५५ ॥ समाधानमाह—सत्यमित्यादि । सर्वथा परावृत्तिरस्तीति सत्यम् । अस्य मनसो मनस्त्वं वस्त्ववभासनसामर्थ्यं निर्मलतात्मकसात्त्विकत्वमिति यावत् । लीनं तमसाच्छन्नम् । तस्मात् तां शुद्धचितिं [3]कथमवभासयेत् ॥५६॥ अत्र दृष्टान्तः—

१. तत्र—क० । २. न्या परा—ग० । ३. कथमनव—क० ।

एवं विलिप्ते मनसि निद्रयाऽन्यपरावृतेः ।
अयोग्यत्वादेव मनो भासयेन्न चितिं क्वचित् ॥५८॥
अन्यथा लोष्टकुडयादेरपि भायात् कुतो न सा ।
तस्माद्योग्येन मनसा शुद्धेन भासते हि सा ॥५९॥
अतः सद्योजातशिशोर्भासते नहि किञ्चन ।
अथापि शृणु वक्ष्यामि मषीलिप्ते हि दर्पणे ॥६०॥
अलक्षितं चापि मषीप्रतिबिम्बनमस्ति वै ।
संश्लेषान्न विलक्ष्येत स्वभावस्यानपोहनात् ॥६१॥
तथा मनः सुषुप्तिस्थं संश्लिष्टं निद्रयैव हि ।
अतोऽन्येभ्यः परावृत्तेरभावाद् भासयेन्न ताम् ॥६२॥

कज्जलेनेति ॥ ५७ ॥ दार्ष्टान्तिके योजयति—एवमिति । निद्रया तमोरूपया जडशक्त्या । अन्यपरावृत्तेरेव हेतोर्मनो न क्वचित् चितिं भासयेत् । कुत इति चेदाह—अयोग्यत्वादिति ॥ ५८ ॥ योग्येन मनसाऽवभासेत । अयोग्येनापि यदि वस्तु भासेत तर्हि लोष्टादिभिर्हस्तगृहीतैरन्येभ्यो दूरमपसरणेन परावृत्तैर्घटाद्याभिमुख्येन स्थापितैरपि घटादिकं केवलपरावृत्तैर्वा सा चितिः कुतो न भायादित्याह—अन्यथेति । कुडयादेः कुडयादिभिः । ततो योग्यशुद्धमनसा शुद्धा चितिर्भासत इत्याह—तस्मादिति ॥ ५९ ॥ अतः सद्योजातशिशोर्मनसोऽयोग्यत्वात् । समाधानान्तरं सदृष्टान्तमाह—अथापीति ॥ ६० ॥ मषीलिप्ते दर्पणे मषीप्रतिबिम्बनं केनाप्यलक्षितमस्ति । अस्ति चेत् कुतो न लक्ष्यत इति चेदाह—संश्लेषादिति । कुत एवं कल्प्यत इति चेदाह—स्वभावस्येति । सम्मुखस्थप्रतिबिम्बग्रहणस्वभावस्य । अनपोहनात् अनपायात् । सम्मुखस्थप्रतिबिम्बग्रहणस्वभावे हि दर्पणे मषीप्रतिबिम्बनमावश्यकमिति भावः ॥ ६१ ॥ दार्ष्टान्तिके योजयति—तथेति । मषीसंश्लिष्टदर्पणवन्मनो निद्रया संश्लिष्टम् । अतो निद्रासंश्लेषाद्धेतोः ।

अतो निद्रास्मृतिरपि व्युत्थितस्य हि सम्भवेत् ।
मूढतापि च या तस्यां दशायामनुभूयते ॥६३॥
तत्ते सम्यक् प्रवक्ष्यामि शृणु सम्यक् समाहितः ।
मनसस्तु द्विधाऽवस्था प्रकाशामर्शभेदतः ॥६४॥
बहिरर्थेषु विश्रान्तिर्या प्रकाशः स उच्यते ।

निद्राकारग्रहणात् सुषुप्तावन्यपरावृत्तेरभावान्मनो न तां शुद्धां चितिं भासयेत् ॥ ६२ ॥ अतः सुषुप्तौ निद्राकारग्रहणात् । सुषुप्तेर्व्युत्थितस्य न किञ्चिदवेदिषमिति निद्रास्मृतिः संभवेत्, स्मृतेर्ग्रहणपूर्वकत्वनियमादिति भावः । सुषुप्तौ निद्रासंश्लेषाभ्युपगमादेव तस्यां सुषुप्तिदशायां निद्रात्मकमूढताऽनुभूयत इति स्मृत्यनुरोधेन यत् कल्पितं तदपि सम्भवेदिति ज्ञेयम् ॥ ६३ ॥ एवं सुषुप्तावात्मावभासप्रसक्तिं सुषुप्तौ मनसो मनस्त्वस्य लीनत्वान्निद्रातत्परत्वेनान्यपरावृत्त्यभावाच्चेति हेतुना निराकृत्य भूयः सुषुप्त्यादिस्वरूपभेदविवेचनेनापि दोषनिराकरणायारभते—तत इति । तत् सुषुप्तिसमाध्योर्भेदम् । प्रकाशावस्था, आमर्शो विमर्शावस्था चेति ॥ ६४ ॥ एतयोरेव स्वरूपं विशदयति—बहिरिति । बहिर्मनसो याऽर्थेषु विश्रान्तिः सम्बन्धः स प्रकाशः प्रकाशावस्थोच्यते । स्वस्मिन् मनसोऽन्तः प्रतिबिम्बत्वेन गृहीतस्य तस्यैवार्थस्यायमीदृश इति शब्दसम्भेदात्मा विचारः स विमर्शः विमर्शदशा । इदमत्र तात्पर्यम्—मनो हीन्द्रियादिद्वारा घटादिविषयसम्बद्धमादौ भवति । तत्काले हि घटादिवस्तु केवलमयं घट इति शब्दोल्लेखवर्ज्जनेनाव्यावृत्तरूपेण प्रकाशते । एतदेव सविकल्पज्ञानहेतु[1] निर्विकल्पकं नित्यानुमेयमिति ज्ञानानां परतःप्रामाण्यवादिन आहुः । एतदेव वस्तुप्रकाशो वस्तुदर्शनमित्यागमेषूच्यते । एवं वस्तुप्रकाशोत्तरक्षणे बाह्यघटादेर्यः प्रतिबिम्बात्मको

१. ज्ञाने हेतु–क० ।

यस्तद्विचारः स्वस्मिन् वै स विमर्श उदाहृतः ॥६५॥
प्रकाशो निर्विकल्पः स्याद् वस्तूनामविभेदतः ।
विमर्शः शब्दसम्भेदाद् विभेदात् सविकल्पकः ॥६६॥
अयमेवंविध इति शब्दसम्भेदवर्जितः ।
वस्तुदर्शनरूपोऽसौ प्रकाशो निर्विकल्पकः ॥६७॥
अयमेवंविध इति वस्तुदर्शनमूलकः ।
शब्दसम्भिन्नरूपोऽसौ विचारात्मावभासनः ॥६८॥
आन्तरोऽभिनवोऽन्यो वा विमर्श इति कीर्तितः ।
तत्र योऽभिनवाभासः स प्रोक्तोऽनुभवात्मकः ॥६९॥
अन्यः स्मृत्यनुसन्धानात्मकः संस्कारसम्भवः ।

मनस्याकारः, तस्यायमीदृश इति शब्दसम्भेदेनेतरव्यावृत्तस्वरूपविचारात्मावभासो यः, स विमर्शः सविकल्पकमिति चोच्यत इति । एतदुक्तं प्रत्यभिज्ञायाम्—"इदमेतादृगित्येवं यद्वशाद्व्यवतिष्ठते । वस्तु प्रमाणं तत् सोऽपि स्वाभासोऽभिनवोदयः ॥ सोऽन्तस्तथा विमर्शात्मा देशकालाद्यभेदिनि । एकाभिधानविषये [1]मितिर्वस्तुन्यबाधिता ॥" [२।१६-१७] इति ॥ ६५ ॥ एतदेव स्पष्टमाह—प्रकाश इति । अविभेदतः अव्यावृत्तरूपेण वस्तूनां प्रकाशो निर्विकल्पको भवेदिति शेषः । विभेदाद् व्यावृत्तरूपेण शब्दसम्भेदाद् वस्तूनां विमर्शः सविकल्पको भवेत् ॥६६॥ पुनरेतस्यैव विवरणं श्लोकद्वयेन क्रियते—अयमिति ॥ ६७ ॥ वस्तुदर्शनं निर्विकल्पकं मूलं कारणं यस्य । अयमेवंविध इति । विचारात्मा अवभासनं यस्य सः, सविकल्पक इति शेषः ॥ ६८ ॥ एवंविधो विमर्श आन्तरो मानसप्रतिबिम्बालम्बनः । सोऽपि—अभिनवः, अन्यश्चेति द्विविधः कीर्तितः । तत्र तयोर्मध्ये योऽभिनवाभासः सोऽनुभवात्मकः ॥ ६९ ॥ तदन्यो यः सविकल्पः स्मृतिरूपोऽनुसन्धानरूपश्च विकल्पः

१. प्रतिवस्तुन्यबाधिता—क० ख० ।

एवं मनो द्विप्रकारशक्तियुक्तं सदा स्थितम् ॥७०॥
निद्राप्रकाशरूपाऽसौ सुषुप्तिश्चिरसंस्थिता ।
जागरामर्शबहुला [1]चेत्यमूढदशोच्यते ॥७१॥
प्रकाशनिबिडा यस्मात् सुषुप्तिर्मूढतात्मिका ।

संस्कारसम्भवः प्रागनुभवोत्थसंस्कारजन्यः । एवमुक्तरीत्या मनः प्रकाशामर्शात्मकनिर्विकल्पकसविकल्पकाभासशक्तिद्वययुक्तं भवति ॥ ७० ॥ एवं मनसो द्वैविध्यं प्रतिपाद्य सुषुप्तेर्मूढदशात्वमुपपादयितुमुपक्रमते—निद्रेति । निद्राविषयको यः प्रकाशो निर्विकल्पं ज्ञानम्, तद्रूपा सुषुप्तिः । चिरसंस्थिता घटादिनिर्विकल्पवन्न क्षणिकेत्यर्थः । चस्त्वर्थे । जागरदशा तु आमर्शबहुला, आमर्शाः सविकल्पकज्ञानानि बहुलानि यस्यां सा, एकैकनिर्विकल्पोत्तरमनेकसविकल्पोदयादामर्शबहुला जाग्रत्, इत्यतो हेतोः सा अमूढदशोच्यते । सुषुप्तावामर्शाभावान्मूढतेति तात्पर्यम् ॥ ७१ ॥ सुषुप्तिर्यस्माद्धेतोः प्रकाशनिबिडा केवलप्रकाशात्मिका, विमर्शहीनेति तात्पर्यम् । तस्मात् सुषुप्तिर्मूढतारूपा । मूढदशेति यावत् । अत्रायं भावः—चिदात्मा हि प्रकाशैकवपुरपि नहि शान्तात्मवादिनामिवाश्मशकलकल्पः, जडत्वप्रसक्तेः । अपि तु स्फुरत्प्रकाशरूपः । स्फुरत्प्रकाशरूपत्वं हि न दीपादिष्विति जडतो व्यावृत्तिः । एषैव स्फुरद्रूपता चैतन्यं विमर्शश्चितिशक्तिः क्रिया स्पन्दः पराहन्तेत्यादिपदैरागमेषूच्यते । एवंरूपत्वादेव परात्मनो जगत्क्रियाप्रभविष्णुत्वम् । यदाहुराचार्याः—"शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि" [सौ० ल० १।१] इति । नह्यत्र शिवोऽनिर्वचनीयमृषात्मकमायाशक्त्या युक्त इत्यर्थोऽभिप्रेतः, "तदैव त्वं तस्मै दिशसि निजसायुज्यपदवीम्" [सौ० ल०१।२२] इति, "भजन्ति त्वां धन्याः कतिचन चिदा-

1. 'च इति अमूढ' इति च्छेदः ।

अत एव हि दीपादेः प्रकाशनिबिडत्वतः ॥७२॥

नन्दलहरीम्" [सौ० ल० १।८] इति, "तुरीया कापि त्वं दुरधिगमनिःसीममहिमा [1]महामाये विश्वं भ्रमयसि परब्रह्ममहिषी"[सौ० ल० २।५८] इति च प्रस्तुतशक्तिस्वरूपनिरूपणासामञ्जस्यप्रसक्तेः। न च जगतः शशविषाणकल्पत्वेन तत्क्रियायाश्च तत्समशीलत्वान्न परात्मनो निरुक्तरूपताभ्युपगमः सप्रयोजन इति वाच्यम्, शून्यवादप्रसक्तेः। जगतः शशविषाणकल्पत्वाभ्युपगमे हि—"यतो वा इमानि भूतानि जायन्ते", [तैत्ति० ३।१], "जन्माद्यस्य यतः" [ब्र० सू० १।१।२], "एतद् यस्मात समुत्पन्नम्" इत्यादिश्रुतिस्मृत्यागमानामुन्मत्तप्रलपितत्वप्रसक्तेश्च। न च नास्ति शून्यवादप्रसक्तिः, परचिदात्मनोऽभ्युपगमादिति वाच्यम्, अभ्युपगमपदार्थस्य जगदन्तःपातित्वेन शशविषाणकल्पत्वेनासिद्धेः। ननु जगत्स्वरूपाभ्युपगमे द्वैतप्रसक्तिः, "नेह नानास्ति किञ्चन" [बृ० उ० ४।४।१९] इत्यादिश्रुत्यादिव्याकोपश्चेति चेत्, अतत्त्वज्ञोऽस्यद्वैतशास्त्रस्य। नहि जगतः शून्यतामाह क्वचिदद्वैतशास्त्रम्, "सदेव सौम्येदमग्र आसीत्" [छा० उ० ६।२।१]; "आत्मा वा इदमेक एवाग्र आसीत्" [ऐत० उ० १।१], "ऐतदात्म्यमिदं सर्वम्" [छा० उ० ६।८।७], "तदनन्यत्वमारम्भणशब्दादिभ्यः" [ब्र० सू० २।१।१४] "एक एव परात्माऽसौ भासते जगदात्मना" इत्यादिश्रुत्यादिभिर्जगतः सत्यतानिरूपणात्। नास्त्यद्वैतहानिरपि। यतो दर्पणान्तर्भासमानप्रतिबिम्बनगरस्य विभिन्नत्वेन भासमानस्यापि दर्पणमात्रात्मता, न ततो दर्पणस्याद्वितीयरूपताहानिरेवं परचिदात्मनि भासमानजगतः परचिदात्ममात्रता, ततो नाद्वैतस्वरूपहानिश्च। "नेह नानास्ति" [बृ० उ० ४।४।१९] इत्यादिनिषेधस्तु द्वैतमात्रपर्यवसितोऽभिप्रेतः। अत एव—"सर्वं मायेति यज्ज्ञानमज्ञानं परिकीर्तितम्। सर्वं शिव इति

1. 'महामाया' इति मुद्रितग्रन्थपाठः।

निश्चिता मूढता सर्वैर्विद्वद्भिरपि सर्वथा ।
निद्रा प्रथमजाऽव्यक्तं महाशून्यमिहोच्यते ॥७३॥
नास्ति सामान्यपदवी सुषुप्तिस्तत्प्रकाशनम् ।

ज्ञानं ज्ञानं ज्ञानविदो विदुः ॥", [1]"घटपटशकटावभासजालमसदिति विदितं भवेदविद्या । घटपटशकटावभासजालं सदिति सुविदितं भवेद्धि विद्या ॥" [यो० वा० ६ पू० ।१०।४५] इत्यादिसूतसंहितावासिष्ठाद्युक्तिसङ्गतिः । तथा च परचिदात्मा मायाऽपराभिधानस्वस्वातन्त्र्यमात्रात् स्वात्मानमेव विचित्रवैश्वरूप्येणावभासयति स्वावभासितपरिच्छिन्नचिदात्मकजीवदृष्ट्या । एवमवभासिते विश्वरूपे द्वैतदृष्टिर्जीवानां बन्धः, अद्वैतदृष्टिर्मोक्षः । स्वातन्त्र्यं वैश्वरूप्यावभासनं जीवावभासनं तद्बन्धावभासो मोक्षावभासश्चेत्येतत्सर्वं दर्पणप्रतिबिम्बवद् भगवता स्वातन्त्र्येणावभासितं [2]स्वप्नसङ्कल्पनगरवदवभासनमात्रसारम्, अवभासनं तु परचिदेकरूपमिति सर्वमनवद्यम् । तथा च परचिदात्मनि जीवितभूतो विमर्शः । सुषुप्तौ निद्रारूपजडशक्तिप्रतिबिम्बेन[3] विमर्शांशाच्छादनान्मूढतेति । अत एव विमर्शांशानुन्मेषात् प्रकाशनिबिडत्वेऽपि सर्वथा मूढतेति सर्वैर्विद्वद्भिर्निश्चितेति सम्बन्धः । घटादिदृश्यानां चिदेकरसत्वेऽपि तत्र विमर्शांशानुन्मेषादेव जडत्वम् । एवं दीपस्य प्रकाशनिबिडस्यापीति । तस्माद्विमर्शानुन्मेष एव जाड्यनिमित्तमिति तात्पर्यम् ॥ ७२ ॥ सुषुप्तौ निद्रयाच्छादनाद् विमर्शानुन्मेष इत्युक्तम् । केयं सा निद्रेति चेदाह—निद्रेति । प्रथमजाऽव्यक्तम् । सृष्टौ प्रथमतो यः स्वरूपसङ्कोचोऽवभासितस्तन्नान्तरीयको यो बाह्यावभासो जगच्चित्र[4]भित्तिरूपत्वेन प्रागुदाहृतस्तदेव प्रथमं जातत्वात् प्रथमजम् । न केनचिदाकारेण क्वचिद् व्यज्यत इत्यव्यक्तम् । अत एवाकाराद्यभावाद्

---

१. श्लोकस्य पूर्वार्धो नास्ति—क० । २. स्वसं—क० ख० ।
३. बिम्बेनं—क० ख० । ४. मिति—क० ।

वस्तुदर्शनकालेऽपि जाग्रत्येवंविधं मनः ॥७४॥
किन्तूत्तरक्षणोद्भूतविकल्पौघैस्तिरोहितम् ।
सुषुप्तावव्यक्तशक्तिप्रकाशनिबिडत्वतः ॥७५॥
मनो विलीनमित्येवं विविञ्चन्ति विवेचकाः ।
वस्तुदर्शनकालेऽपि चैवं लीनं मनो भवेत् ॥७६॥

महाशून्यम् । इह सुषुप्तौ निद्रेत्युच्यते ॥ ७३ ॥ नास्ति सामान्यपदवीति । नास्तीति यः प्रत्ययः, तत्सामान्यस्य पदवी विषयः, दृश्यसामान्याभाव इति यावत् । प्रोक्ताव्यक्तमेवात्यन्ताभावः । सुषुप्तौ न किञ्चिदवेदिषमिति स्मृत्यनुरोधेन न किञ्चिदिति दृश्यसामान्याभावः प्रकाशत इति भावः । सुषुप्तिर्हि एवंविधनिद्राप्रकाशनं निद्राप्रकाशावस्था । वस्तुदर्शनं घटादिनिर्विकल्पः । तत्कालेऽपि जाग्रद्दशायाम् । एवंविधं सुषुप्तिदशायामिव मूढमेव मनो भवति ॥ ७४ ॥ ननु सुप्ताविव जाग्रति न कदाचिदपि मूढताऽनुभूयत इति चेदाह—किन्त्विति । जाग्रति निर्विकल्पस्य क्षणिकत्वेन तदुत्तरोद्भूतविकल्पज्ञानसमुदायेन मूढत्वं तिरोहितम् । ननु सुषुप्तौ मनो विलीयत इति प्रसिद्धमन्यत्र[1], तत् कथं निद्राप्रकाशकं मन इत्युक्तमिति चेदाह—सुषुप्ताविति । अव्यक्तशक्तिप्रकाशैकरूपत्वान्मनसो विमर्शांशानुन्मेषादिति तात्पर्यम् । विविञ्चन्तीति सम्बन्धः ॥ ७५ ॥ मन इति । तदानीं निर्विकल्पैकरूपत्वेन स्थिरत्वान्मनसः प्रतिक्षणभिन्नपरिणामाभावमात्रेण मनो विलीनमित्येवं[१] विवेकनिपुणा विविञ्चन्ति निश्चिन्वन्ति । "चेत्याभिमुखतां प्राप्तं चित्तत्त्वं चित्तमुच्यते" इत्याद्युक्त्या चिदात्मतत्त्वमेव विषयेषु प्रसरदिव स्थितं मन इत्युच्यते । सुषुप्तौ स्थिरत्वेन प्रसरद्रूपताभावान्मनो लीनमिति विवेचकानामभिप्रायः । एवंविधमनोलयो जाग्रति वस्तुदर्शनात्मकघटादिनिर्विकल्पकाले तुल्य इत्याह—वस्त्विति

1. "सुषुप्तिकाले सकले विलीने" [ १।१३ ] इति कैवल्योपनिषदादौ ।
१. मित्येव—क० ।

शृणु ब्रह्मन् रहस्यं ते वक्ष्यामि स्वानुभूतितः ।
यत्र मुह्यन्ति विद्वांसोऽप्यतिसूक्ष्मविवेचकाः ॥७७॥
निर्विकल्पसमाधिश्च सुषुप्तिर्वस्तुदर्शनम् ।
त्रयमेतच्चैकविधं प्रकाशनिबिडत्वतः ॥७८॥
विमर्शभेदाद् भेदो हि लक्ष्यते व्यावहारिकैः ।
तत्र हेतुर्भास्यभेदादित्येव प्रविनिश्चयः ॥७९॥
समाधौ केवलचितिः सुप्तावव्यक्तमेव च ।

॥७६॥ एवं सुषुप्तेर्जाड्यतामुपपाद्य समाधिसुषुप्त्योर्भेदमुपपादयितुमुपक्रमते—शृण्विति । स्वानुभूतितः स्वानुभवानुसारेण । रहस्यत्वे हेतुमाह—यत्रेति । सूक्ष्मवस्तूनां स्वरूपस्य विवेचनकुशला अपि यत्र वक्ष्यमाणार्थे मुह्यन्ति ॥ ७७ ॥ तदेवाह—निर्विकल्पेति । निर्विकल्पसमाधिः चिदात्मनः स्वप्रकाशमात्रात्मनाऽवस्थितिः । सुषुप्तिर्वस्तुदर्शनं चाव्यक्तघटादिभावयोः प्रकाशौ । एतत्त्रयमप्येकविधं समानम् । तत्र हेतुः—प्रकाशनिबिडत्वत इति । अनुद्भूतविमर्शात्मत्वादित्यर्थः । प्रोक्तासु तिसृष्वपि दशासु विमर्शात्मकविकल्पशक्तेः स्थूलाया अयमीदृश इत्यादिशब्दमय्या[1] अभावात् प्रकाशमात्रात्मत्वात् प्रकाशनिबिडत्वमिति भावः ॥ ७८ ॥ तर्हि कथमियं सुषुप्तिरयं समाधिरित्यादिव्यवहारभेद इति चेदाह—विमर्शभेदादिति । तत्स्वरूपसाम्येऽपि तत्तदुत्तरोद्भूतानुसन्धानादिरूपविमर्शभेदादित्यर्थः । समाधेरुत्तरमेतावत्कालमहं तूष्णीमासमिति, सुषुप्तेरुत्तरं न किञ्चिदवेदिषमिति, वस्तुदर्शनोत्तरम् अयं घट इति च विमर्शभेदो ज्ञेयः । ननु कारणसाम्ये कार्यसाम्यनैयत्यात् कथं विमर्शस्यापि भेद इति चेदाह—तत्रेति । विमर्शभेदे इत्यर्थः । भास्यभेदात् विषयभेदात् । न च विषयभेदे समाध्यादीनामपि स्वरूपभेदः स्यादिति वाच्यम्, शब्दसम्भेदात्मकविकल्पत्वा-

---

१. प्राप्त्या—क० ख० ।

दर्शने भिन्नभासो हि भास्यमेवं त्रिधा स्थितम् ॥८०॥
भास्यभेदेऽपि भासस्तु केवलं निर्विकल्पकः ।
अतः प्रकाशनिबिड इत्येव संप्रचक्षते ॥८१॥
समाधिश्च सुषुप्तिश्च चिरकालभवत्वतः ।
अनन्तरं स्पष्टतया सर्वैरपि विमृश्यते ॥८२॥
क्षणिकत्वाद् दर्शनं तु स्पष्टं नहि विमृश्यते ।
एवं समाधिः सुप्तिश्च क्षणिका न विमृश्यते ॥८३॥
सुषुप्तिः क्षणिका तद्वत् समाधिरपि विद्यते ।
सुषुप्तिर्लक्ष्यते सूक्ष्मदृग्भिः परिचयात् खलु ॥८४॥

भावेन तेषां स्वरूपभेदाभावात् ॥ ७९ ॥ भिन्नान् विषयानेवाह—समाधाविति । केवलचितिः दृश्यदेहाद्याकारासंवलितमात्मतत्त्वम् । अव्यक्तं प्रोक्तं बहिःपदस्यार्थभूतम् । भिन्नभासो व्यावृत्तत्वेन भासमानो घटादिः । यद्यपि चितेः परप्रकाश्यत्वरूपवेद्यत्वं नास्त्येव, तथापि शुद्धमनोव्यापारापेक्षाया निरूपितत्वात् कथञ्चिद्वेद्यत्वमस्तीत्यवसेयम् ॥ ८० ॥ ननु भास्यभेदे समाध्यादेः स्वरूपभेद आवश्यक इति चेदाह—भास्येति । समाध्यादिभासस्तु न भिन्नः, निर्विकल्पत्वात् । शब्दानुसम्भेदो हि विकल्पस्वरूपभेदकः । स प्रकृते नास्तीति न स्वरूपभेद इति तात्पर्यम् । यस्माच्छब्दासम्भेदेन विमर्शरहितः, अतः समाध्यादिदशाभेदः प्रकाशनिबिड इति प्रचक्षते ॥ ८१ ॥ ननु समाध्यादित्रयं तुल्यं चेत् समाधिसुषुप्ती इव वस्तुदर्शनमपि स्वोत्तरकाले सर्वैः स्पष्टं कुतो न विमृश्यत इति चेदाह—समाधिश्चेति । चिरकालभवत्वत इति । अक्षणिकत्वादित्यर्थः ॥ ८२ ॥ यथा वस्तुदर्शनं क्षणिकत्वादुत्तरकाले स्पष्टं न विमृश्यते, एवं क्षणिकसमाधिसुषुप्ती न विमृश्येते इत्याह—एवमिति ॥ ८३ ॥ सुषुप्तिः समाधिश्च जाग्रदादौ विद्येते । तत्र क्षणिका सुषुप्तिस्तु दीर्घसुषुप्तेरनु-

समाधिस्त्वपरिचयात् सूक्ष्मो नहि विमृश्यते ।
सर्वेषां प्राणिनां ब्रह्मन् व्यवहारदशास्वपि ॥८५॥
सूक्ष्माः समाधयः सन्ति चाव्युत्पत्त्या विभान्ति नो ।
जाग्रत्यविमृशिर्या स्यात् स समाधिरुदीरितः ॥८६॥
विमर्शाभावमात्रं तु समाधिरभिधीयते ।
सुषुप्तौ दर्शने चापि समाधित्वमतः स्थितम् ॥८७॥
किन्तु मुख्यसमाधित्वमनयोर्नहि विद्यते ।
भेदामर्शनसंस्कारगर्भितत्वान्न मुख्यता ॥८८॥

भवेन परिचयात् सूक्ष्मदृग्भिर्लक्ष्यत इत्याह—सेति [सुषुप्तिरिति]। क्षणिकेत्यर्थः ॥ ८४ ॥ समाधिरननुभूतत्वेनापरिचयान्न विमृश्यत इत्याह—[1]समाधिरिति। सूक्ष्मः क्षणिकः। ननु क्षणिकः समाधिः कस्यास्तीति चेत् आह—सर्वेषामिति । दशास्वपीति । जाग्रदादिष्वपीत्यर्थः । समाधयः सन्तीत्यन्वयः ॥ ८५ ॥ तर्हि ते समाधयः कुतो न भान्तीति चेदाह—अव्युत्पत्त्येति । स्वरूपापरिचयादित्यर्थः । जाग्रति समाधिः किंविध इति चेदाह—जाग्रतीति । या अविमृशिः या विमर्शाभावदशा, स समाधिः ॥ ८६ ॥ समाधिलक्षणमाह—विमर्शेति । अत एव सुषुप्तिवस्तुदर्शनयोः समाधित्वं स्थितम् ॥ ८७ ॥ ननु तर्हि सुषुप्त्यादिनैव समाधिफलं भवेदिति चेन्नेत्याह—किन्त्विति। अनयोः सुषुप्तिवस्तुदर्शनयोः। भेदामर्शनेति। भेदोऽनात्मभूतं दृश्यवस्तु, तद्विषयकं यदामर्शनं विकल्पज्ञानम्, तस्य संस्कारः सूक्ष्मं शक्तिमयं रूपम्, तेन गर्भितत्वाद् युक्तत्वात्। सुषुप्त्युत्तरं न किञ्चिदवेदिषमिति, वस्तुदर्शनोत्तरमयं घट इति च निद्राघटरूपभेदविषयकमामर्शनं विकल्पज्ञानं भवति। एतयोः संस्कारात्मकं सूक्ष्मं यच्छक्तिमयं रूपं तत् स्वकारणे सुषुप्तौ वस्तुदर्शने चास्ति। कारणे

१. 'समाधिरिति''''सर्वेषामिति' नास्ति—क० ख० ।

दर्शनं जाग्रति भवेदविमर्शनरूपकम् ।
तथापि ते प्रवक्ष्यामि मुनिपुत्रादराच्छृणु ॥८९॥
अव्यक्तं यत्प्रथमजं नास्ति सामान्यकं हि तत् ।
नास्तीत्येव हि तद्भानमत्यन्ताभावरूपकम् ॥९०॥
एषा सुषुप्तिरित्युक्ता जडशक्तिर्भवेच्चितः ।

कार्यस्य संस्कारात्मनाऽवस्थानस्य सत्कार्यवादिभिरङ्गीकृतत्वादिति भावः। समाध्युत्तरविमर्शनस्य चिदात्ममात्रविषयत्वेन भेदो ज्ञेयः ॥ ८८ ॥ यथा सुषुप्तिसमाध्योरक्षणिकयोरविमर्शनरूपता, तथा जाग्रति क्षणिकसुषुप्तिसमाध्योरपीत्याह--दर्शनमिति। जाग्रति निद्राचिदात्मनोर्यत् क्षणिकसुषुप्तिसमाधिरूपं दर्शनम्, तदपि घटादिदर्शनवदविमर्शनरूपमेवेत्यर्थः। ननु तर्हि समाधेरपि सुषुप्तिवज्जडावस्थात्वप्रसक्तिरिति चेदाह--तथापीति। यद्यपि साम्यमेव प्राप्तम्, तथापि सूक्ष्मं विशेषं प्रवक्ष्यामीत्यर्थः ॥ ८९ ॥ एवं समाधेर्जडत्वव्यावृत्तये विशेषनिरूपणं प्रतिज्ञाय तदर्थमेव सुषुप्तिसमाध्योर्विषयं परीक्षितुमुपक्रमते--अव्यक्तमिति। सृष्टेरादौ प्रथमजातं बहिःपदस्यार्थभूतम् अव्यक्तं यत् तदेव नास्ति सामान्यं नास्ति सामान्यप्रत्ययविषयम्। दृश्यसामान्याभाव[1] इति यावत्। सुषुप्तौ दृश्यसामान्याभावो भासत इत्यत्रानुभवं निदर्शयति--नास्तीति। हि यस्मात्। सुषुप्तौ यद्भासते तत् सामान्यतो नास्तीत्येव भासते। अतस्तत्र दृश्यात्यन्ताभाव एव भासत इत्यर्थः। सुषुप्तेर्व्युत्थितस्य न किञ्चिदवेदिषमिति स्मरणानुरोधेन सुषुप्तौ नास्तीत्येवानुभवो वक्तव्यः। तथा च दृश्यसामान्याभाव एव तदा भासमानः सिद्ध्यतीति तात्पर्यम् ॥ ९० ॥ एवञ्च सुषुप्तेर्जडदशात्वं सिद्ध्यतीत्याह—एषेति। या चितः परचिदात्मनः, दृश्यसामान्यात्यन्ताभावरूपाऽव्यक्तात्मकजडशक्तिः,

१. सामान्यभाव–क० ।

दर्शने भासमानं च नास्त्याभासपदं यतः ॥९१॥
अतः सुषुप्तिरेव स्याज्जडदर्शनसङ्गता ।
समाधौ भासमाना या चितिः सा ब्रह्मरूपिणी ॥९२॥
भक्षिणी कालदेशानां नास्त्याभासविनाशिनी ।

सैव[1] सुषुप्तिरित्युक्ता भवेत् । यतः कारणात् सुषुप्तौ दर्शने ज्ञाने[2] भासमानं नास्त्याभासपदं नास्त्याभासो दृश्यात्यन्ताभावो जडशक्तिः पदं विषयो यस्य । न किञ्चिदवेदिषमिति स्मृत्याभासविषयस्यैव सुषुप्तिकालिकदर्शने भासमानत्वाद् ज्ञानस्य स्मृतिसमानाकारता-नियमेन सौषुप्तज्ञानस्य जडशक्त्याकारतासिद्धौ सुषुप्तेर्जडरूपतेति भावः ॥ ९१ ॥ अत इति । सुषुप्तेर्व्युत्थितस्मृत्यनुरोधात् । सुषुप्तिरेव जडदर्शनेन जडशक्त्यात्मकात्यन्ताभावज्ञानेन सङ्गता युक्ता न समाधि-रित्यर्थः । ननु सुषुप्ताविव समाधौ भासमानस्यापि जडशक्तित्वं कुतो न भवेदिति चेदाह—समाधाविति । समाधिर्नाम मनसोऽनात्मविषयेभ्यः परावृत्तस्य प्रत्यक्चिदात्माकारतयाऽवस्थितिः । तथा च जडशक्त्यव-भासाभावः । ननु प्रत्यक्चितेर्जीवस्य परिच्छिन्नरूपत्वेन परिच्छेदको-पाधेरपि जडशक्तिरूपस्य समाधौ भासनमस्तीति चेदाह—सा ब्रह्म-रूपिणीति । समाधौ भासमाना चितिरनवच्छिन्नत्वेन बृहत्वाद् ब्रह्म-रूपिणीत्यर्थः ॥ ९२ ॥ कुतः समाधौ भासमानचितेरपरिच्छिन्नतेति चेदाह—भक्षिणीति । कालदेशानां भक्षिणी ग्रसनशीलेत्यर्थः । आकाश-परिच्छेदकोपाधेर्घटादेर्भासनकाल एव परिच्छिन्नघटाकाशाद्यव-भासनम्, न त्वन्यदा; एवं प्रकृतेऽपि चितेः परिच्छेदकदेशकाला-काराणां जडशक्तिपल्लवभूतानां दृश्येभ्यो[3] मनसः परावृत्तत्वेनाव-भासनाभावादपरिच्छिन्नत्वेन सामान्यचितिरूपत्वात् . सर्वविषया-वभासकतत्तत्परिच्छिन्नाखिलचित्यनुस्यूतरूपत्वेन कालदेशादिभक्षिणो

१. सैषा—ग० । २. ज्ञानं—क० । ३. देशेभ्यो—क० ।

सर्वथाऽस्तिमयी देवी सुषुप्तिः सा कथं भवेत् ।।९३।।
तस्मात् सुषुप्तिमात्रेण न भवेद्धि कृतार्थता ।
बोधयामास जनक इत्यष्टावक्रमुक्तिभिः ।।९४।।

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे अष्टावक्रीये
षोडशोऽध्यायः ।।



ब्रह्मरूपिणी[1] सा चितिरिति भावः । परिच्छिन्नचितेर्हि अत्राधुनैवमाकाराऽस्ति, अत्राधुनैवमाकारा [2]नास्तीति ह्यभावरूपता सम्पद्यते, अपरिच्छिन्नत्वेनैषा तु नास्तीत्याभासस्यात्यन्ताभावस्य विनाशिनी । नास्तीत्यत्र नेत्यंशस्यार्थभूतोऽत्यन्ताभावोऽनुपलब्ध्यात्मकप्रकाशजीवितभूतोऽपि चित्प्रकाशसम्बन्धादस्तित्वाभिनिषिक्तः शून्यतां परित्यजति । नञर्थस्यापि शून्यस्य चित्सम्बन्धादस्तित्वप्राप्तेर्नास्त्याभासविनाशिनीति तात्पर्यम् । तस्मान्नञर्थसम्बन्धासम्भवात् सर्वथा भावरूपेणाभावरूपेण वा देवी प्रकाशैकरूपा सा परचितिरस्तिमयी सत्त्वैकघना सुषुप्तिवज्जडात्मिका कथं भवेदित्यर्थः ।। ९३ ।। तस्माद् जडमयत्वेन समाधिविलक्षणत्वात् । उपसंहरति—बोधयामासेति । इति बोधयामासेत्यन्वयः ।। ९४ ।।

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
षोडशोऽध्यायः ।।



१. 'ब्रह्मरूपिणी' नास्ति—क० । २. नास्ति—क० ख० ।

# अथ सप्तदशोऽध्यायः

श्रुत्वैवं जनकेनोक्तमष्टावक्रः पुनर्नृपम् ।
पप्रच्छ यत्तद्वदामि शृणु भार्गव [1]यत्नतः ॥ १ ॥
राजन् यदुक्तं भवता व्यवहारदशास्वपि ।
सूक्ष्माः समाधयः सन्तीत्येवं [2]तन्मे वद स्फुटम् ॥ २ ॥
दशासु कासु ते सन्ति निर्विकल्पचिदात्मकाः ।
एवं तेनानुयुक्तोऽथ प्राह राजा महाशयः ॥ ३ ॥
शृणु ब्रह्मन् प्रवक्ष्यामि व्यवहारे समाधयः ।
प्रियया सम्परिष्वक्तो नव्यया प्रथमं यदा ॥ ४ ॥
तदा न वेद बाह्यं वाऽप्यान्तरं वा क्षणं नरः ।
तिष्ठेन्न निद्रयाक्रान्तः स समाधिरुदीरितः ॥ ५ ॥

अत्र मायिकपद्यैस्तु प्रोक्ताः क्षणसमाधयः ।
पुरुषार्थो न तैश्चेति ज्ञानप्राप्तिक्रमोऽपि च ॥

एवं जाग्रति क्षणिकसमाधयः सन्तीति ॥ १ ॥ तत् क्षणिकसमाधिस्थानम् ॥ २ ॥ एतदेव विशदयति—दशास्विति । व्यवहारदशात्मकजाग्रत्स्वप्नयोः कास्वन्तरालदशासु । ते निर्विकल्पचिदात्मकाः समाधयः । महानपरिच्छिन्न आशयश्चित्तं यस्य । अपरिच्छिन्नचिदाकारमानसः, नित्यसमाहित इति यावत् ॥ ३ ॥ व्यवहारे ये समाधयस्तान् प्रवक्ष्यामि । तदेवाह—प्रिययेति । प्रियया मनःकान्तया । नव्यया अभुक्तपूर्वया । प्रथमं रत्यावेशोपक्रमे । यदा संपरिष्वक्तः सम्यगालिङ्गितः ॥ ४ ॥ तदा आलिङ्गनकाले । आदौ क्षणमात्रं बाह्यं दिग्देशकालाद्यम् । आन्तरं सुखदुःखादिकं वा न वेद । ननु [3]बाह्यान्तरे वेदनाभावे सुषुप्तो

१. संयतः—ग० । २. तन्त्रे—क० ।
३. बाह्यान्तरवेदनाभावः सुषुप्तौ—क० ख० ।

यच्चिराद्वाञ्छितं किञ्चिदलभ्यत्वेन निश्चितम् ।
अकस्मात्तस्य संप्राप्तिर्यदा भवति वै मुने ॥ ६ ॥
तदा न वेद बाह्यं वाऽप्यान्तरं वा क्षणं नरः ।
तिष्ठेन्न निद्रयाक्रान्तः स समाधिरुदीरितः ॥ ७ ॥
अतर्कितं व्रजन् क्वापि निर्भयो हृष्टमानसः ।
अकस्माद्यदि सम्पश्येद् व्याघ्रादि मृत्युसम्मितम् ॥ ८ ॥
तदा न वेद बाह्यं वाऽप्यान्तरं वा क्षणं नरः ।
तिष्ठेन्न निद्रयाक्रान्तः स समाधिरुदीरितः ॥ ९ ॥
अतिप्रियं स्वपुत्रादिं विभुं च गृहकर्मणि ।
अरोगिणं यदाऽकस्मात् संश्रृणोति मृतं किल ॥१०॥
तदा न वेदं बाह्यं वाऽप्यान्तरं वा क्षणं नरः ।
तिष्ठेन्न निद्रयाक्रान्तः स समाधिरुदीरितः ॥११॥
अथान्यथापि वक्ष्यामि समाधेः सम्भवं श्रृणु ।
जाग्रत्स्वप्नसुषुप्तीनां मध्ये सन्ति समाधयः ॥१२॥

भवेदिति चेन्नेत्याह—न निद्रयाक्रान्त इति । निद्राक्रान्त्या मूढतामप्राप्त एव यस्तिष्ठेत् सोऽयं व्यवहारदशायां क्षणसमाधिः ॥ ५ ॥ यत्किञ्चिद् वस्तु चिरकालाद्वाञ्छितम् । अकस्मात् असम्भावितप्राप्तिकाले ॥ ६ ॥ तदा न वेदेत्यादि कृतार्थम् ॥ ७ ॥ अतर्कितम् अत्र व्याघ्रादिकं भवेदिति सम्भावनाऽविषयम् । मृत्युसम्मितं मृत्युतुल्यम् ॥ ८-९ ॥ गृहकर्मणि विभुं समर्थम् ॥ १०-११ ॥ एवं महासुखहर्षभयशोकानामकस्मात् सम्भवे तत्रारम्भक्षणे मनो निर्विमर्शं स्वरूपस्थितं भवति । सेयं क्षणिकसमाधिदशेत्युक्त्वा अन्या अपि वक्तुमुपक्रमते—अथेति । समाधेरन्यथा प्रकारान्तरेण सम्भवं स्थितिम् । तदेवाह—जाग्रदिति । जाग्रद् बाह्येन्द्रियव्यापारदशा । स्वप्नो मनोमात्रस्य स्थूलव्यापारदशा । सुषुप्तिर्मनसो निद्रायां व्यापारदशा । तथा चैतासामन्तराले क्षणं मनो

दूरे किञ्चित् पश्यतस्तु बुद्धया चैकाग्रया मुने ।
मनो दीर्घात्मतां याति जलूकेव तृणालिषु ॥१३॥
देहे देहाभासमयं भावे भावात्मकं तथा ।
मध्ये तन्निर्विकल्पाख्यं मनो लक्षय सर्वदा ॥१४॥

निर्विमर्शं भवति । त इमे समाधयः ॥ १२ ॥ प्रकारान्तरमाह—दूर इति । दूरे नभोमण्डले सूर्यं पश्यतः पुरुषस्य मनो यथा तृणजलूकाऽवष्टब्ध-तृणात् तृणान्तरावष्टम्भाय दीर्घीभवति, तथा देहे स्थितं मनः सूर्य-मण्डलपर्यन्तं दीर्घतां याति । व्यग्रमनस इतस्ततश्चाञ्चल्याद्[1] ऋजु-रूपेण दीर्घता न सम्पद्यत इत्येकाग्रया बुद्धयेत्युक्तम् । सूर्यमण्डलैक-तत्परमनसेत्यर्थः ॥ १३ ॥ एवं मनसि सति । देहे देहाकारं सूर्य-मण्डलरूपभावे भावाकारं च भवति । तत्र देहसूर्यमण्डलयोर्मध्ये मनो निरालम्बनं स्वरूपस्थितं भवति । सोऽयं समाधिः । एवं बाह्यभावदर्शनकाले सर्वदा मनोऽस्ति तल्लक्षय । न च मनो देहसूर्ययो-र्मध्ये गगनाकारमिति वाच्यम्, गगनस्य निराकारत्वेन मनसो गगनाकारत्वासम्भवात् । न च गगनं चक्षुर्द्वारेण मनसा गृह्यत इति वाच्यम्, रूपवत एव चक्षुर्द्वारा ग्रहणसम्भवात्, अन्यथा वायोरपि ग्रहणप्रसङ्गात् । न च मनसस्तत्काले देहाद्याकारस्य कथं स्वरूप-मात्रस्थितिरिति वाच्यम्, देहाद्यवच्छेदेन तत्तदाकारत्वेऽपि मध्ये निराकारत्वेन स्वरूपनिष्ठाया अक्षतत्वात् । एवंविधमनोंऽशस्य समाहितत्वं बहुमानसात्मकोत्तमज्ञानिनिरूपणावसरे वक्ष्यति[1] । जन-कादयो जीवन्मुक्ता अपि राज्यादिव्यापारं कुर्वन्तः स्थिताः, तेषा-मेकांशेन मनो व्यवहारपरमेकांशेन समाहितमिति सदा समाहितास्ते

---

1. १६ अध्याये ८० श्लोकतोऽध्यायसमाप्तिपर्यन्तमेतद् दृश्यते ।

१. गुरु—कं० ।

बहुना किमिहोक्तेन शृणु [1]सूक्ष्मविमर्शन ।
व्यवहारे न कस्यापि ज्ञानमेकं तु भासते ॥१५॥
खण्डज्ञानसमूहात्मा व्यवहारोऽयमाततः ।
अत एव वर्णयन्ति तैर्थिकाः सर्व एव हि ॥१६॥
आत्मानं बुद्धिमपि वा क्षणभेदविभेदितम् ।
तदन्तरक्षणौघेषु निर्विकल्पदशा स्थिता ॥१७॥
कहोलात्मज जानीहि जानतां तु प्रतिक्षणम् ।

इत्युक्तिरत एव सङ्गच्छते ॥ १४ ॥ बहुना प्रकारेण उक्तेन किम् । सर्वदैव सूक्ष्मसमाधयो वर्तन्ते, ते प्रोच्यन्ते शृणु । सूक्ष्मविमर्शनेति सम्बोधनेन वक्ष्यमाणार्थस्य सूक्ष्मता ज्ञेया । व्यवहारे जाग्रत्स्वप्नयोर्घटाद्याकारज्ञानधारा सर्वानुभवसिद्धा । नहि तत् सर्वमेकमेव ज्ञानम्, आकारभेदस्य सर्वानुभवसिद्धत्वात् ॥ १५ ॥ तत्तदाकारपरिच्छिन्नखण्डज्ञानसमुदाय एवायमाततः प्रसृतो व्यवहारः । ज्ञानैकत्वे व्यवहार एव न सम्भवेदिति तात्पर्यम् । ज्ञानस्यानैक्यादेव तैर्थिका मतप्रवर्तका आचार्याः सुगतकणभुक्प्रभृतयः सर्वे वर्णयन्ति ॥ १६ ॥ यद्वर्णयन्ति तदाह—आत्मानमिति । क्षणभेदेन भेदितज्ञानधारैवात्मेति सुगत आह । तादृशज्ञानधारैवात्मनो धर्मो बुद्धिरित्युवाच कणादः । एतेन क्षणिकज्ञानसत्त्वे आचार्यान्तरसम्मतिरुक्ता ज्ञेया । एवं ज्ञानभेदे सिद्धे प्रकृतमाह—तदन्तरेति । क्षणिकज्ञानानामन्तरालेषु निर्विकल्पता स्थिता । घटज्ञानमेव न स्वोत्तरं पटज्ञानम्, एकत्वाप्रतीतेः; समूहालम्बनत्वाद्यापत्तेश्च । एवं च सिद्धे ज्ञानभेदेऽन्तरालदशाऽवर्जनीयैवेति[1] तदा मनसो निर्विकल्पताऽक्षतैव ॥ १७ ॥ शशशृङ्गवदिति जानीहीत्य-

1. 'सूक्ष्मविमर्शनम्' इति सार्वत्रिकः पाठः ।
१. वर्जनैवेति—क० ।

समाधिरस्ति चान्यस्य समाधिः शशशृङ्गवत् ॥१८॥
जनकोक्तमिति श्रुत्वा भूयः पप्रच्छ स द्विजः ।
राजन्नेवं व्यवहृतौ समाधिर्निर्विकल्पकः ॥१९॥
सर्वेषामस्ति यदि चेत्तत् कुतः संसृतिर्भवेत् ।
सुषुप्तौ दर्शने चापि जडाव्यक्तविभासतः ॥२०॥
पुरुषार्थासाधनत्वं समाधिस्त्वविकल्पकः ।
शुद्धसंविद्विभातात्मा तद् भूयः संसृतिः कथम् ॥२१॥
एतदेव हि विज्ञानमज्ञानकुलनाशनम् ।
निर्विकल्पसमाध्याख्यं यन्निःश्रेयसकारणम् ॥२२॥
एतन्मे शंस राजेन्द्र सर्वसंशयनाशनम् ।
इत्यापृष्टो महीपालः प्राह तं मुनिपुङ्गवम् ॥२३॥

न्वयः । जानतां परिचितसमाधिस्वरूपाणाम् । अन्यः अज्ञातसमाधिस्वरूपः ॥ १८ ॥ जनानां प्रतिक्षणं समाधिरिति श्रुत्वा । एवं प्रतिक्षणं समाधिश्चेदिति सम्बन्धः ॥ १९ ॥ समाधेरेव पुरुषार्थसाधकत्वेन कुतः संसृतिर्भवेदित्यर्थः । ननु सुषुप्त्यादेरिव नास्य पुरुषार्थसाधकत्वमिति चेदाह—सुषुप्ताविति । निर्विकल्पके ज्ञानात्मकवस्तुदर्शने सुषुप्तौ च जडात्मकघटादेरव्यक्तस्य च [1]विभासनात् पुरुषार्थासाधनत्वमिति सम्बन्धः ॥ २० ॥ नैवं समाधिरित्याह—समाधिस्त्विति । अविकल्पकः स्वरूपातिरिक्तजडानवभासकः । कुत एवमिति चेदाह— शुद्धेति । यस्मादविकल्पकः[2] पूर्णस्वरूपावभासात्मकः, तस्माद् भूय एवंविधसमाधिप्राप्त्यनन्तरं कथं संसृतिः ॥२१॥ नहीतोऽन्यज्ज्ञानमज्ञानकुलनाशनमित्याह—एतदेवेति । विज्ञानं स्वरूपभूतं समाधौ प्रकाशमानं ज्ञानम् । यन्निःश्रेयसकारणं तदेतदेवेत्यन्वयः ॥ २२ ॥ सर्वसंशयनाशनमेतत् प्रश्नोत्तरम्

---

१. भासनात्—क० । २. दविकल्पः—क० ।

शृणु ब्रह्मन् प्रवक्ष्यामि रहस्यं परमं त्विदम् ।
अज्ञानात् संसृतिरियं प्रवृत्ताऽनादिकालतः ॥२४॥
सुखदुःखावभासानां प्रवाहात्मतया स्थिता ।
स्वप्नवत् सन्तता सर्वैः सर्वदा ह्यनुभूयते ॥२५॥
निवृत्तिस्तस्य तु ज्ञानादेवेति प्रविभावितम् ।

॥ २३ ॥ परममत्यन्तं रहस्यम् । समाधिना संसारकारणाज्ञानानिवृत्तिरिति वक्तुमुपक्रमते—अज्ञानादिति । इयं सर्वानुभवसिद्धा ॥ २४ ॥ कीदृशी संसृतिरित्याह—सुखेति । ननु सर्वानुभवसिद्धत्वात् संसृतेः सत्यत्वेनानिवृत्त्याऽनिर्मोक्षप्रसङ्ग इत्यत आह—स्वप्नवदिति । प्रवाहरूपेण सर्वदाऽनुवर्तमानापि सन्ततापि सर्वैः स्वप्नवदनुभूयमानत्वेन न सत्येति भावः ॥ २५ ॥ स्वप्नवदनुभूयमानत्वादेवाज्ञानमूलकत्वेन तस्याज्ञानस्य [1]सकार्यस्य ज्ञानादेव निवृत्तिरिति विद्वद्भिर्निश्चितमित्याह—निवृत्तिरिति । तच्चाज्ञाननिवर्तकं कीदृशं ज्ञानमिति चेदाह—तज्ज्ञानमिति । अज्ञानस्य प्रबाधनं निःशेषनाशनं[2] यस्मात् तज्ज्ञानं सविकल्पाख्यं सोऽहमिति प्रत्यभिज्ञारूपमित्यर्थः । अत्रेदं तत्त्वम्—वैराग्यादिज्ञानसाधनवतः श्रवणेन परोक्षमात्मतत्त्वज्ञानम् । ततः परोक्षेण ज्ञाते सम्यङ्मननेन संशयनिवृत्तिः । ततो निदिध्यासनेन देहादावहंबुद्ध्यादिरूपदृढवासनायत्त[3]विपरीतभावनावेगनिवृत्तिपूर्वकं शुद्धप्रत्यगात्मापरोक्षज्ञानम् । ततः शास्त्राधिगतपरात्म[4]प्रत्यगात्मनोरखण्डैकत्वावगाहि प्रत्यभिज्ञानं सोऽहमिति । तदेतत् प्रत्यभिज्ञानं संसारमूला-[5]ज्ञाननाशकमिति । नन्वेतद्यदि सविकल्पकं तदा "स ह्युक्तो द्वयापेक्षी विनिश्चयः" [ १।५३ ] इति प्रत्यभिज्ञोक्तरीत्या द्वैतविषयत्वेन[6] भ्रमत्वान्नाज्ञाननिवर्तकं प्रोक्तप्रत्यभिज्ञानमिति चेत्, अत्रोच्यते—

---

१. सर्वकार्यस्य—क० । २. षताज्ञानं—क० । ३. यत्तद्विप—क० ख० ।
४. परमात्म—क० । ५. भूता—क० । ६. यक्त्वेन—क० ।

तज्ज्ञानं संविकल्पं स्यादज्ञानस्य प्रबाधनम् ।।२६।।
निर्विकल्पकविज्ञानादज्ञानं न [1]निवर्तते ।
निर्विकल्पकविज्ञानं केनचिन्न विरुद्धचते ।।२७।।

नहीदं द्वैतविषयकं ज्ञानम् । यथा हि प्राग् दशार्णेषु दृष्टश्चैत्रः क इति पृच्छन्तमाहान्यः सोऽयं चैत्र इति । ततश्च सोऽयं चैत्र इति वाक्येन न द्वैतमवगम्यते । प्रश्नस्य स्वरूपमात्रविषयत्वेनोत्तरस्य तदननुरूपतापत्तेः । न च तदिदंशब्दवाच्ययोर्विरुद्धयोरैक्यं घटते, यतः प्रश्नसमत्वेनैकविषयत्वमुत्तरस्य सम्भवेत् । तस्मात्तदिदमित्यंशद्वयेनापि निष्कृष्टं[2] चैत्रपिण्डमात्रं लक्ष्यते । तथा प्रकृतेऽपि सोऽहमित्यभिलापांशद्वयेनापि प्रत्यभिज्ञातमखण्डंचिन्मात्रमेवेति न दोषः । नन्वस्य तर्हि कथं विकल्पत्वमिति चेच्छृणु, सोऽहमित्यभिलापांशानैक्येन प्रसिद्धविकल्पतुल्यत्वात् । अभिलापांशहीनप्रसिद्धनिर्विकल्पविलक्षणत्वाद्वा सविकल्पत्वमिति । ननु निर्विकल्पसमाध्यात्मकं ज्ञानमपि प्रकृतप्रत्यभिज्ञासमानविषयमेवेति कुतस्तस्याज्ञान[3]निवर्तकत्वमिति चेदुच्यते, समानविषयत्वेऽपि स्वोत्पादकसामग्रीभेदात् फलभेद इति । तथा हि—प्रत्यभिज्ञाने हि तच्छब्दार्थास्मच्छब्दार्थोपस्थितिसहकृतानात्मवस्तुपरावृत्तं मनः कारणम् । समाधौ तु निरुक्तोपस्थित्यनपेक्षं मन एवेति । सोऽयं घट इत्यादिप्रत्यभिज्ञामात्रं हि अखण्डवस्तुविषयमेव । तथा च घटमात्रविषयकविकल्पसमानविषयत्वेऽपि सोऽयं घट इति प्रत्यभिज्ञानस्य फलभेदः सामग्रीभेदकृत एवेति सर्वैरभ्युपेयत्वेन नात्रापूर्वकल्पनं किञ्चिदस्तीत्यवधेयम् ॥ २६ ॥ निर्विकल्पकज्ञानं प्रत्यभिज्ञाभिन्नं समाधिरूपं नाज्ञाननाशकमिति निरूपयितुमुपक्रमते—निर्विकल्पकेति । कुतो न निवर्तत इति चेदविरुद्धत्वादित्याह—

---

१. विव—क० ग० । २. निकृष्टं—क० ख० ।

३. ज्ञाना—ख० ग० ।

निर्विकल्पकविज्ञानं सविकल्पसमाश्रयम् ।
विचित्रचित्राभासानां भित्तिवत् सुव्यवस्थितम् ॥२८॥
निर्विकल्पं ज्ञानमिति केवलं ज्ञानमुच्यते ।
तत्रैव हि विकल्पानामुल्लेखात् सविकल्पकम् ॥२९॥
अज्ञानं सविकल्पाख्यज्ञानमेव न चेतरत् ।
तदनेकविधं कार्यकारणात्मतया स्थितम् ॥३०॥
कारणं स्वात्मपूर्णत्वाख्यातिरूपमुदीरितम् ।
चिदात्मा पूर्ण एव स्यादवच्छेदविवर्जनात् ॥३१॥

निर्विकल्पकेति ॥ २७॥ अत्र दृष्टान्तः—विचित्रेति । चित्राभासानां भित्तिरिव विकल्पानां निर्विकल्पकं ज्ञानमाश्रयमित्यर्थः । २८॥ कथमेतदिति चेदाह—निर्विकल्पमिति । केवलं ज्ञानमिति । ज्ञेयप्रतिबिम्ब-रहितं शुद्धं ज्ञानमित्यर्थः । तत्रैवेति । शुद्धज्ञान एवेत्यर्थः । यथा हि शुद्ध एव दर्पणे बिम्बसांमुख्यदशायां प्रतिबिम्बरूपता, एवं शुद्ध एव ज्ञाने सङ्कल्पदशायां तत्तदाकारोल्लेखात् सविकल्पतेति[1] भावः ॥ २९॥ ननु निर्विकल्पज्ञानस्य सविकल्पाश्रयत्वेऽपि कुतो नाज्ञानविरोधित्व-मिति चेदाह—अज्ञानमिति । न चेतरदिति । न ज्ञानाभावः, नाप्यनिर्व-चनीयमित्यर्थः । अत्रायमागमाभ्युपगमः—भगवतः शुद्धचिद्वपुषो हि परमात्मनो जडव्यावृत्तं यत् स्फुरद्रूपत्वं तदेव स्वातन्त्र्यं माया-शक्त्यभिधम्, तयैवाविद्यावभासनपूर्वकं जगदवभासितमिति । यद्वा न चेतरदिति ज्ञानाभावमात्रप्रतिषेधार्थः । तत् अज्ञानम् । कारणात्मकं कार्यात्मकमित्यनेकविधम् ॥ ३० ॥ द्वैविध्यमेव विवेचयति—कारणमिति । स्वात्मपूर्णत्वाख्यातिरेव कारणरूपमज्ञानमित्यर्थः । ननु पूर्णत्वाख्याति-रिति ख्यात्यभावो हि ज्ञानाभाव एवोक्त इत्याशङ्कायां पूर्णत्वाख्याति-

१. ल्पकेति—क० ।

अवच्छेदनहेतूनां कलादीनां हि साधकः ।
तथाविधात्मनः ख्यातिरपूर्णत्वेन या स्थिता ॥३२॥
अत्राधुनाऽस्मीतिरूपा मूलाज्ञानं हि सा भवेत् ।
तस्यैव पल्लवप्रायं देहात्मत्वादिभासनम् ॥३३॥
अज्ञानस्य निवृत्त्यन्तं संसारो न निवर्तते ।
पूर्णात्मविज्ञानमृते त्वज्ञानं [1]न निवर्तते ॥३४॥
तच्च पूर्णात्मविज्ञानं द्विविधं सुव्यवस्थितम् ।
परोक्षमपरोक्षं च परोक्षं गुरुशास्त्रतः ॥३५॥

पदार्थमेव विवेचयितुमादौ पूर्णतां निरूपयति—चिदात्मेति ॥ ३१ ॥ कुतोऽवच्छेदवर्जनमिति चेदाह—अवच्छेदनेति । अवच्छेदनस्य हेतुर्निमित्तं कालो देश आकारो वा, इदानीमत्रेत्थमिदमस्तीति त्रयमेव प्रसिद्धम् । नहीदं त्रयमपि चिदात्मनः परिच्छेदकं भवितुमर्हति, प्रतिबिम्बानां दर्पण इव चिदात्मनस्तत्स्वरूपसाधकत्वात् । नहि स्वस्वरूपसाधकस्य दर्पणस्य प्रतिबिम्बं परिच्छेदकं भवितुमर्हति । एवं प्रकृतेऽपीति भावः । तथाविधात्मनः कालाद्यपरिच्छिन्नस्य याऽपूर्णत्वेन ख्यातिः स्थिता सा पूर्णत्वाख्यातिरित्युक्ता मूलाज्ञानं भवेदिति सम्बन्धः ॥ ३२ ॥ अपूर्णख्यातेः स्वरूपमुल्लिखति—अत्रेति । तस्यैव मूलाज्ञानस्यैव । पल्लवप्रायं कार्यात्मकं देहात्मत्वादिभासनम्, अहं स्थूलोऽहमन्ध इत्यादिभासनम्, कार्याज्ञानमिति शेषः । अनिर्वच[2]नीयाज्ञानपक्षे तु अत्राधुनास्मीति [3]वृत्तेरज्ञानप्रथमकार्यत्वेन मूलाज्ञानत्वमित्यादि ज्ञेयम् ॥ ३३ ॥ संसारमूलमज्ञानं तन्निवृत्तिश्च ज्ञानादेवेत्याह—अज्ञानस्येति ॥ ३४ ॥ तच्चेति । अज्ञाननिवर्तकं चेत्यर्थः । गुरुशास्त्रत गुरूक्तशास्त्रश्रवणात् । जातमिति शेषः । गुरुशास्त्रत इत्यनाश्रितगुरोर्न ज्ञानमिति सूचनाय ॥ ३५ ॥ तत्

---

१. नाति—क० ख० । २. नीयज्ञान—क० । ३. निवृत्ते—क० ख० ।

तत् साक्षात् पुरुषार्थस्य न कारणमिति स्थितम् ।
यादृशं ते भवेज्ज्ञानं शास्त्रश्रुतिसमुद्भवम् ॥३६॥
श्रद्धामात्राभ्युपगतं फलदं न प्रचक्षते ।
अपरोक्षं हि विज्ञानं समाधिपरिपाकजम् ॥३७॥
सप्रपञ्चाज्ञाननाशक्षमं शुभफलावहम् ।
समाधिर्ज्ञानपूर्वस्तु विज्ञानं जनयेत् खलु ॥३८॥

परोक्षज्ञानम् । न साक्षात् पुरुषार्थस्य संसारदुःखनिवृत्तेः कारणम्[1] । अष्टावक्रं प्रति जनक आह—यादृशं त इति । शास्त्रश्रुत्या शास्त्रश्रवणेन समुद्भवो यस्य । परोक्षमिति यावत् ॥ ३६ ॥ श्रद्धामात्रेणाभ्युपगतं निश्चितं फलदं न, परोक्षज्ञानस्य साक्षादपरोक्षसंसारभ्रमनिवर्तकत्वाभावादिति भावः । परोक्षज्ञानस्य साक्षात् पुरुषार्थासाधकत्वे केन द्वारेण तत्साधकत्वमिति चेदपरोक्षज्ञानद्वारेणेत्याह—अपरोक्षमिति । न तदव्यापातरूपं देहादिवासनाप्रतिबद्धं पुमर्थसाधकमित्याह—समाधीति । समाधेः परिपाकः प्रकर्षः, तेन जातं निष्प्रकम्पमिति यावत् । अयं भावः—देहाद्यहम्भावादिरूपवासनायाश्चिरसङ्गतत्वेन मलिनधियां सकृदपरोक्षे जातेऽपि तस्यापातज्ञानस्य दृढसंस्कारानाधायकत्वेनाप्रयोजकत्वात्, समाधिप्रकर्षसिद्धतज्ज्ञानेन दृढसंस्काराधानाद् दृढदेहाद्यहंभावादिवासनाविगलनान्न भूयोऽनर्थसङ्गतिरिति ॥ ३७ ॥ सप्रपञ्चेति । देहात्मज्ञानवद् दृढं संशयविपर्ययापराहतं शुद्धसंविदात्मविषयकमपरोक्षज्ञानमेव सप्रपञ्चाज्ञाननाशनसमर्थं मोक्षफलावहं चेत्यर्थः । ननु समाधिप्रकर्ष एवैवंविधमपरोक्षं ज्ञानं जनयति, तथा च सर्वेषां जाग्रदादिषु प्रोक्तसमाधिपरम्परायाः सत्त्वाज्ज्ञानं कुतो नेति चेदाह—समाधिरिति । ज्ञानपूर्व इति । परोक्षज्ञानपूर्वक इत्यर्थः । विज्ञानम् अपरोक्षज्ञानम् ॥ ३८ ॥ तस्मात् परोक्ष-

1. कारणत्वम्—क० ।

तस्मादज्ञानिनां नार्थः समाधौ सम्भवत्यपि ।
यथाऽविदितमाणिक्यः पश्यन् कोशगृहे मणिम् ॥३९॥
न जानाति यथाऽन्यस्तु श्रुतज्ञातमणिः क्वचित् ।
दृष्ट्वा प्रत्यभिजानाति तत्परो मणिमञ्जसा ॥४०॥
अतत्परः श्रुतमपि भूयः पश्यन् मणिं क्वचित् ।
न विजानाति तदिह ब्रह्मन् सुनिपुणोऽपि सन् ॥४१॥
तथा मूढा न विन्दन्ति फलं विज्ञानसंश्रयम् ।
अज्ञातत्वात् पण्डितास्तु श्रुतज्ञानयुता अपि ॥४२॥

ज्ञानाभावात् । समाधौ सत्यप्यज्ञानिनां न पुरुषार्थः सम्भवतीति सम्बन्धः । नन्वेवमपि शास्त्रार्थज्ञानां परोक्षज्ञानसत्त्वेन तेषां निरुक्त-स्वाभाविकसमाधिभिः कुतो न पुरुषार्थ इत्याशङ्क्य सदृष्टान्तं समाधातु-मुपक्रमते—यथेति । परोक्षतोऽविदितं माणिक्यं येन स पुरुषः । अर्थात् कोशगृहमुपगतो माणिक्यं पश्यन्नपीदं तन्माणिक्यमिति न जानाती-त्यन्वयः ॥ ३९ ॥ यथा च श्रुतो लक्षणश्रवणेन ज्ञातः[1] परोक्षतो ज्ञातो मणिर्येन स पूर्वस्मादन्यः पुरुषः क्वचित् कोशगृहादौ मणिं दृष्ट्वा तत्परः सन्[2] मणिं सोऽयं मणिरिति प्रत्यभिजानाति ॥ ४० ॥ श्रुत-मणिरप्यन्यो यदाऽतत्परो मणिं दृष्ट्वा किमिदमिति [3]विचारपरस्तदा श्रुतमपि मणिं भूयः पश्यन्नपि सुनिपुणोऽपि सन् इह लोके तत् तस्माद् अतत्परत्वाद्धेतोः सोऽयं मणिरिति न विजानाति ॥ ४१ ॥ एवं दृष्टान्तमुपपाद्य दार्ष्टान्तिके सङ्गमयति—तथेति । मूढाः परो-क्षेणाज्ञातत्वात् स्वाभाविकसमाधिभिर्विज्ञानसंश्रयं फलमज्ञान-नाशनं न विन्दन्ति । पण्डिताः शास्त्रज्ञास्तु श्रुतजनितपरोक्षज्ञान-युता अपि न विजानन्तीत्यन्वयः ॥ ४२ ॥

---

१. श्रुतेन लक्षणश्रवणे ज्ञातः—क० । 'श्रुतः' इत्येव—ख० ।
२. स—क० ख० । ३. विचारा—ख० ग० ।

अतत्परत्वहेतोस्तु न विजानन्ति सर्वथा ।
यथा हि तारकां पश्यन्नपि जानाति न क्वचित् ॥४३॥
मूढः श्रुतज्ञानहीनः श्रुतज्ञानयुतोऽपि वै ।
पश्यन्नपि च नो वेत्ति तत्परत्वविवर्जनात् ॥४४॥
यस्तु श्रुत्वा शुक्रतारां दिगाकारादिलक्षणैः ।
मया ज्ञेयं सर्वथेति तत्परो बुद्धिमान् नरः ॥४५॥
एकाग्रमानसः पश्यन् प्रत्यभिज्ञास्यति स्फुटम् ।
एवमज्ञानतो मूढाश्चान्ये तात्पर्यवर्जनात् ॥४६॥
न विजानन्ति स्वात्मानं ब्रह्मन् सत्सु समाधिषु ।

अतत्परत्वहेतोरिति । देहादिविलक्षणं परचिन्मयं मद्वपुः शास्त्रोदितं सर्वथा तत् साधनसम्पादनेनापरोक्षीकर्तव्यमित्यभिनिवेशानासादनाद्धेतोरित्यर्थः । पुनरस्यार्थस्यातिसूक्ष्मत्वाद् दृष्टान्तान्तरेण निरूपणमारभते—यथेति । मूढो न जानातीत्यन्वयः ॥४३॥ श्रुतज्ञानहीन इति । शुक्रतारालक्षणश्रवणजन्यज्ञानहीन इत्यर्थः । एवंविधो मूढ आकाशे क्वचित्काले शुक्रतारकां पश्यन्नपि सेयं शुक्रतारकेति न जानाति । अन्यः श्रुतज्ञानयुतोऽपि तत्परत्वविवर्जनाद् मया शुक्रतारका सर्वथा ज्ञातव्येत्यभिनिवेशवर्जनात् तत्तारकां पश्यन्नपि नो वेत्ति ॥४४॥ यस्तु दिगाकारादिलक्षणैः पश्चिमदिग्गता सूर्यास्तानन्तरं दृश्या भास्वराकारा शुभ्रवर्णा शुक्रतारेति लक्षणवाक्यैः श्रुत्वा मया शुक्रतारास्वरूपं सर्वथा ज्ञेयमिति तत्परो बुद्धिमानूहापोहकुशलो नरः, प्रत्यभिज्ञास्यतीत्यन्वयः ॥ ४५ ॥ एकाग्रमानसः तदितरपरावृत्तमनस्कः । दृष्टान्तसिद्धार्थं दार्ष्टान्तिके योजयति—एवमिति । मूढाः [१]परोक्षज्ञानाभावात् । अन्ये शास्त्रजनितपरोक्षज्ञानवन्तस्तात्पर्यस्य मयैतदात्मतत्त्वं सर्वथा ज्ञेयमिति तत्परत्व[ त्वस्य ] वर्जनान्न विजानन्तीति योजना ॥ ४६ ॥ क्षणिकसमाधिषु

---

१. परोक्षा-ख० ।

भिक्षामटति दुर्दैवाद् यथा वै विस्मृताकरः ॥४७॥
तस्मादेता दशाः सर्वाः समाधीनां निरर्थ[र्थि]काः।
अत एव शिशूनां हि सर्वदा निर्विकल्पकम् ॥४८॥
न फलं साधयेद् ब्रह्मन् [1]अज्ञानस्यानिवृत्तितः।

सत्स्वपि तात्पर्याभावाच्छास्त्रज्ञाः स्वात्मानं न विजानन्ति। अत्रेदं तत्त्वम्—आदौ शास्त्रादिना देहादिव्यावृत्तं प्रत्यगात्मतत्त्वं जगद्व्यावृत्तं परात्मतत्त्वं च चिदेकरसमपरिच्छिन्नमिति परोक्षतो जानाति। ततः परोक्षतो ज्ञाते युक्त्यनुचिन्तनात्मकमननाभिधश्रुत्यनुगतसत्तर्केणाशेष-संशयमपोहति। ततो देहादिदृश्यव्यावृत्तापरिच्छिन्नचिद्रूपोऽहमित्याकारकचित्तवृत्तिप्रवाहीकरणात्मकध्यानाभिधनिदिध्यासनं करोति। तेन देहाद्यहंप्रत्ययरूपविपरीतभावना शिथिलीभवति। ततः प्रोक्तनिदिध्यासनपरिपाकात् प्रोक्ताकारवृत्तेरयत्नेनानुवृत्तिरूपसविकल्पसमाधिर्भवति। अत्र सविकल्पसमाधौ ध्येयध्यात्रादि[2]भेदपरिस्फूर्तिरस्ति। एतस्यैवाभ्यासप्रकर्षेण परिपाके एवमहं ध्यायामीत्यन्तः सूक्ष्माभिमानांशविगलने ध्येयशुद्धचिन्मात्रात्मकस्थितिपरिशेषो निर्विकल्पसमाधिः। एतद्धि शुद्धात्मतत्त्वस्यापरोक्ष[क्ष्य]म्। ततो व्युत्थाय समाधौ स्फुरितं शुद्धस्वात्मरूपं शास्त्रतो विदितं परात्मरूपञ्च प्रत्यवमृश्य स एवाहमिति प्रत्यभिजानाति। तथा च मूढशास्त्रज्ञयोः परोक्षज्ञानतत्परत्वयोरभावात् प्रत्यवमर्शानुदयेन प्रत्यभिज्ञानानुदयान्न पुरुषार्थसिद्धिरिति। (दुर्दैवादिति।) एतदेव दृष्टान्तद्वारेणाह—भिक्षामिति। तथैते इति शेषः ॥ ४७ ॥ तस्मादिति। प्रत्यभिज्ञायामनुपयुक्तत्वादित्यर्थः। समाधीनामेताः प्रोक्तजाग्रत्स्वप्नाद्यन्तरालरूपा दशाः। अत एव निरर्थकत्वादेव। सद्योजनितशिशूनां सर्वदा अविच्छिन्नमक्षणिकमपि यच्छुद्धचिद्विषयकं निर्विकल्पकमस्तीति शेषः ॥ ४८ ॥ तन्नाज्ञाननिवृत्तिरूपं फलं स्वकार्यं साधयेत्। कुत एतज्ज्ञात-

१. अज्ञावस्था—क०। २. ध्यानादि—क०।

प्रत्यभिज्ञात्मकं यत्तु ज्ञानं स्यात् सविकल्पकम् ॥४९॥
तदेव संसारमूलमज्ञानं विनिवर्तयेत् ।
अनेकजन्मसु कृतैः सन्तुष्टा स्वात्मदेवता ॥५०॥
यदा तदा मुमुक्षुत्वं नान्यदा कल्पकोटिभिः ।
चेतनत्वं जन्मवत्सु परमं दुर्लभं भवेत् ॥५१॥
सुदुर्लभं तेष्वपि च मानुषं जन्म सर्वथा ।
तत्रापि सूक्ष्मबुद्धित्वमत्यन्तं हि सुदुर्लभम् ॥५२॥
पश्य ब्रह्मन् स्थावराणां शतांशेनापि सम्मितम् ।
न दृश्यते जङ्गमं वै तेषामपि शतांशतः ॥५३॥
समं नास्ति मनुष्यत्वं तत्रापि परिभावय ।
पशुतुल्याः प्रदृश्यन्ते मनुष्याणां हि कोटयः ॥५४॥
ये न जानन्ति सदसत् पुण्यं वा पापमेव वा ।
अन्येऽपि कोटिशो मर्त्याः प्रवृत्ताः कामनापराः ॥५५॥

मिति चेदज्ञानानुवृत्तेरित्याह—अज्ञानस्यानिवृत्तित इति । तस्मात् प्रत्यभिज्ञात्मकं प्रोक्तयुक्त्या सविकल्पकरूपं ज्ञानमेवाज्ञाननाशकमित्याह—प्रत्यभिज्ञात्मकमिति ॥ ४९ ॥ एवंविधप्रत्यभिज्ञानस्य साधनदौर्लभ्यादतिदौर्लभ्यमाह—अनेकेति । कृतैः सुकृतैरिति शेषः ॥ ५० ॥ यदा भवतीति शेषः । अन्यदा सुकृताभावे काम्यनिषिद्धकर्मभिर्नीतैः कल्पकोटिभिरपि कालैर्न मुमुक्षुत्वं प्राप्यत इत्यर्थः । मुमुक्षुत्वसाधनमप्यतिदुर्लभमित्याह—चेतनत्वमिति ॥ ५१ ॥ तेष्वपि चेतनेष्वपि । तत्रापि मानुषत्वे प्राप्तेऽपि ॥ ५२ ॥ एतदेवोदाहरणेन विशदयति—पश्येति । तेषामपि जङ्गमानामपि ॥ ५३ ॥ मनुष्यत्वं मनुष्यजातिः । तत्रापि मनुष्येष्वपि [1]जन्मना मनुष्या अपि व्यवहारे पशुतुल्याः ॥ ५४ ॥ एतदेव स्पष्टमाह—य इति । सत् सुवृत्तम् । असद् दुर्वृत्तम् ।

१. जन्मतो—ख०, जन्मनो—ग० ।

गतागतं रोचयन्ते पाण्डित्याभासगर्विताः ।
एवंविधजनानां तु केऽप्यन्ये बुद्धिमद्धिधाः ॥५६॥
मालिन्यशेषचित्तास्तेऽप्यद्वैतपदनास्तिकाः ।
भगवन्माययाच्छन्नमद्वैतं परमं पदम् ॥५७॥
कथं सर्वैः समासाद्यं मायान्धैर्मन्दभाग्यकैः ।
मायान्धानां तत्पदं तु न बुद्धि[1]मुपरोहति ॥५८॥
अन्ये दुर्भागधेयास्ते बुद्ध्यारूढमपीह ये ।
वृथाभिनिविशा[2] भूयोऽपह्नुवन्ति कुकल्पनैः ॥५९॥

अन्येऽपि ऊहापोहकुशला बुद्धिमन्तोऽपि । कामनापराः सन्तः प्रवृत्ताः प्रवृत्तिमार्गाश्रिताः ॥ ५५ ॥ गतागतं स्वर्गाद्यनित्यफलम् । तेऽपि शास्त्रज्ञाः कुतो न परमार्थफलं वाञ्छन्तीति चेदाह—पाण्डित्येति । पाण्डित्याभासेन ज्ञानाभासेन गर्विता अभिमानं प्राप्ताः । अभिमानवतां सदसद्विवेकाभावः स्पष्ट एवेति भावः । एवंविधशास्त्रज्ञजनानां मध्ये केऽपि बुद्धिमद्धिधाः किञ्चिद्विवेकनिपुणाः ॥ ५६ ॥ पापसंस्कारमालिन्यशेषचित्ता द्वैतपरिनिष्ठयाऽद्वैतपदापह्नवपराः । कथमेवमिति चेदद्वैतज्ञानमतिदुर्लभमित्याह—भगवदिति ॥ ५७ ॥ मन्दभाग्यकैरिति[3] । अत्यन्तपुण्यपाकादेवाद्वैतज्ञानमिति भावः ॥ ५८ ॥ एवं मायान्धानां दुर्भाग्यानामद्वैतात्मपदं श्रुतमपि न बुद्ध्यारूढं भवतीत्युक्त्वा इतोऽप्यन्ये बुद्ध्यारूढमपि परित्यजन्तीत्याह—अन्य इति । भूयो बुद्ध्यारूढमप्यद्वैतात्मतत्त्वम् । वृथाभिनिविशन्ति आग्रहं कुर्वन्ति ये तादृशाः कुकल्पनैः कुतर्कैरपह्नुवन्ति । द्वैतमतमस्मदीयं न परित्याज्यमित्याग्रहेण निर्विषयकं ज्ञानं नास्त्येव, अस्ति चेद् घट इवोपलभ्येत इत्यादि-

---

१. मव–ख० । २. निविशन्ति–क० ख० ।
३. रित्यर्थः–क० ख० ।

अहो भगवती माया पश्यन्तोऽपि महत्पदम् ।
चिन्तामणिं हस्तगतं त्यजन्ति हि कुकल्पनैः ॥६०॥
येषां समाराधनेन [1]तुष्टा सा स्वात्मदेवता ।
ते मायया विनिर्मुक्ताः सुतर्काः श्रद्धया युताः ॥६१॥
पराद्वये समाश्वस्ताः प्राप्नुवन्ति परं पदम् ।
तत्क्रमं तेऽभिधास्यामि ब्रह्मन् संशृणु संयतः ॥६२॥
अनन्तजन्मसुकृतैर्देवताभक्तिराप्यते ।
तया संराध्य सुचिरं तत्प्रसादात्ततः परम् ॥६३॥
वैरस्यं भोगवृन्देषु तत्परत्वं च प्राप्नुयात् ।
वैराग्यतत्परत्वाभ्यां श्रद्धया चापि सङ्गतः ॥६४॥
सद्गुरुं प्राप्य तत्प्रोक्त्या वेत्त्यद्वैतं परं पदम् ।
एतज्ज्ञानं परोक्षं वै ह्यस्त्यद्वैतमितीह यत् ॥६५॥

कुतर्कैरपलपन्तीति भावः ॥ ५९ ॥ एतदपि मायाविलास एवेत्याह— अहो इति । महत्पदम् अपरिच्छिन्नाद्वैतात्मपदम् । हस्तगतं चिन्तामणिं काचखण्डोऽयमिति कुकल्पनैरेव त्यजन्ति ॥ ६० ॥ कुत एवमिति चेद्देवतानुग्रहाभावादित्याह—येषामिति । देवतानुग्रहेणैव सुतर्कश्रद्धाभ्यां श्रेयःप्राप्तिरिति भावः ॥ ६१ ॥ तत्क्रमं परश्रेयःप्राप्तिक्रमम् ॥ ६२ ॥ अनन्तेति । अनन्तजन्मसुकृतैः सत्सङ्गाद्देवतामाहात्म्यश्रुतेर्भक्तिराप्यते । तया भक्त्या । ततः परं वैरस्यं प्राप्नुयादित्यन्वयः ॥ ६३ ॥ देवताप्रसादाद् विचारोदयस्ततो भोगवृन्देषु विषयेषु दोषदृष्ट्या वैरस्यम्, रसो रागस्तद्विगमो वैरस्यम्, [2] वैराग्यमिति यावत् । ततो विषयवैमुख्येन श्रेयःसाधनानां श्रद्धागुरुसेवादीनां तत्परो भवतीत्याह—वैरस्यमित्यादि ॥ ६४ ॥ तत्प्रोक्त्या तद्वचनेन । एतज्ज्ञानं गुरुवाक्यश्रवणजन्यं ज्ञानम् । कीदृशं तत् परोक्षज्ञानमिति चेदाह—

---

१. संतुष्टा पर—ख० । २. 'वैरस्यम्' नास्ति—क० ख० ।

ततो विचारयेत् सम्यगद्वैतं स्वात्मदैवतम् ।
उपपाद्य सुतर्कैस्तु संशयांस्तेन नाशयेत् ॥६६॥
अथ निश्चितमात्माख्यतत्त्वमद्वयमादरात् ।
अनुध्यायेदाऽपरोक्षं हठवृत्त्यापि यत्नतः ॥६७॥
ततो विकल्पविषयीकृत्य ध्यातं परं पदम् ।
संसारमूलमज्ञानं नाशयेन्नात्र संशयः ॥६८॥

अस्तीति ॥ ६५ ॥ ततः श्रवणजनितपरोक्षज्ञानानन्तरम् । परोक्षज्ञानमद्वैतात्मदैवतमेवमुपपद्यते[1] न वेत्यागमानुगतसुतर्कैरुपपाद्योपपत्तिं प्रापय्य[2] विचारयेत् निश्चयविषयं कुर्यात् । तेन एवंविधविचारेण मननात्मकेन संशयान् नाशयेत् । संशयानिति वचनेन साधनज्ञानाद्वैतमोक्षादिगताखिलसंशयस्य नाशनीयत्वं ज्ञापितम् ॥ ६६ ॥ अथ एवं मननानन्तरम् । मननेन निश्चितमद्वयात्मतत्त्वमनुध्यायेत् तन्मात्राकारं चित्तं धारयेत् । तच्चादरात् । आदरोऽनुपेक्षणम्, अवश्यं मयैतद् ध्यात्वा ज्ञेयमित्यभिमानः । यदि चित्तमतिचञ्चलमिति तन्मात्राकारं धारयितुं न शक्यते, तदापि यत्नतो हठवृत्त्यापि धारयेदेव, न ततो विरमेत् । यत्नस्तु सुतीव्रः, "हस्तं हस्तेन संपेष्य दन्तान् दन्तैर्विचूर्णयन् । अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥" [ यो० वा० सा० ४।१७ ] इति वासिष्ठोक्तः[3] । हठवृत्तिस्तु प्राणसंयमधारणादिरूपा । कियत्कालमेवमनुध्येयमिति चेदाह—आपरोक्षमिति । अपरोक्षानुभवपर्यन्तमित्यर्थः ॥ ६७ ॥ ततः एवं निदिध्यासनेन प्रत्यगात्मतत्त्वापरोक्षानन्तरम् । ध्यातं प्रत्यगात्मतत्त्वम् । परं पदं [4]परात्मतत्त्वं च विकल्पविषयीकृत्य सोऽहमिति प्रत्यभिज्ञायेति यावत् । अस्य प्रत्यभिज्ञानस्याखण्डवस्तुविषयत्वेन निर्विकल्पसमाधि-

१. मेवोपपद्यते—क० । २. प्राप्य—क० ख० ।
३. वासिष्ठोक्तेः—क० ख० । ४. परमात्म—ख० ।

पक्वध्याने निर्विकल्पे समाध्याख्ये परं पदम् ।
आसाद्य पश्चात् संस्मृत्य प्रत्यभिज्ञानवान् भवेत् ॥६९॥

तुल्यत्वेऽपि सामग्रीफलयोर्भेदाद्विकल्पत्वमिति ज्ञेयम्। एवं विकल्पविषयीकृतमद्वैतात्मतत्त्वमज्ञानं नाशयेत् ॥ ६८ ॥ एतदेव पुनर्विशदयति—पक्वेति। श्रवणमननाभ्यां निश्चितस्य प्रत्यगात्मतत्त्वस्यानुध्याने पक्वे सत्येवंविधपक्वध्यानमेव निर्विकल्पसमाधिः। अयमत्र विवेकः—ध्यानमेव परिपाकतारतम्येन सविकल्पसमाधिर्निर्विकल्पसमाधिश्च। तथा हि—शुद्धात्माकारमेव चित्तं चिरं तिष्ठत्विति सङ्कल्प्य तत्सङ्कल्पमविस्मरन् संस्काररूपेणानुवर्तयन् चित्ते ध्येयावष्टम्भानुवर्तनेन यावन्मध्ये मध्ये सङ्कल्पविस्मरणेन ध्येयाकारता चित्ते विच्छिद्यते तावत्तद् ध्यानम्। एवंविधध्यानाभ्यासप्रकर्षेणाभिमतकालपर्यन्तं सङ्कल्पसंस्काराविच्छेदेन चित्ते ध्येयाकारतानुवृत्तौ सविकल्पसमाधिः। एतत्समाध्यभ्यासप्रकर्षेण सङ्कल्पसंस्कारमनपेक्ष्याभिमतकालपर्यन्तं चित्ते ध्येयाकारतानुवृत्तौ निर्विकल्प[1]समाधिरिति। यदुक्तं परमानन्दे—

संस्मृतावपि विच्छेदाद् ध्यानं प्रोक्तं महेश्वरि ॥
अविच्छेदात् संस्मृतौ तु समाधिः स्याद् गुणात्मकः ।
असंस्मृतावविच्छेदात् समाधिः फलमुच्यते ॥ इति ।

एवंविधपक्वध्यानात्मकनिर्विकल्पसमाधौ परं पदं शुद्धं प्रत्यगात्मतत्त्वमासाद्य विषयीकृत्य पश्चाद् व्युत्थानोत्तरक्षणे समाधावनुभूतं प्रत्यगात्मतत्त्वं शास्त्रतो निर्णीतं परात्मतत्त्वं च संस्मृत्य सोऽद्वैतात्माऽहमस्मीति प्रत्यभिज्ञानवान् भवेदित्यन्वयः। ननु समाधेर्निर्विकल्पप्रकाशत्वेन ततो व्युत्थितस्य कथं तत्स्मरणम्, सविकल्पसंस्कारस्यैव स्मृतिजनकत्वात्। तथा हि—निर्विकल्पो हि केवलं घटादिविषयप्रकाश एव, न तत्संस्कारः स्मृतिजनकः। अन्यथा मार्गे गच्छतो

१. कल्पक—ख०।

सोऽद्वैतात्माऽहमस्मीति त्वपरोक्षविकल्पतः ।
संसारमूलमज्ञानं साङ्गं नाशयति द्रुतम् ।।७०।।

निर्विकल्पदृष्टनिखिलवस्तुस्मृतिप्रसङ्गः। नहि मार्गे निर्विकल्पं दृष्टं सर्वं स्मर्यते, घटोऽयं पटोऽयमिति सविकल्पज्ञातस्यैव स्मरणात्। अत एव निर्विकल्पदृष्टे यावदंशे सविकल्पसम्पत्तिस्तावदंशस्यैव किञ्चिदिति, उच्च[1] इति, मनुष्य इति, पुरुष इति, देवदत्त इति स्मृतिभेद उपपद्यत इति चेत्? अत्र केचित्—समाध्युत्तरक्षणे सविकल्पद्वारैव स्मृतिरित्याहुः। परे तु शुद्धस्य प्रत्यगात्मनः सविकल्पविषयत्वायोगात् समाध्यनुभवादेव स्मृतिः। न च सविकल्पसमाधौ शुद्धस्य विषयत्वमस्तीति वाच्यम्, सविकल्पसमाधेः प्रोक्तसङ्कल्पात्मकत्वेन शुद्धस्वरूपाविषयत्वात्। ननु निर्विकल्पसंस्कारस्य कथं स्मृत्याध्यायकत्वमिति चेदुच्यते—नहि सविकल्पादेव स्मृतिरिति नियमः। विकल्पो हि भेदाभासः, मार्गे निर्विकल्पदृष्टानामपि किञ्चिदित्यादिसामान्यरूपेण स्मृतिसम्भवात्। अत एव सुषुप्तौ निर्विकल्पद्रष्टुः प्रोक्ताव्यक्तस्मृति[2]रुपपादितोपपद्यते। निर्विकल्पसमाध्यस्मृतिप्रसङ्गाच्च। तथा च यज्ज्ञाने यस्य यावानंशः सम्यक् स्फुरति तावदंशेन तस्य कालान्तरे स्मृतिः। दृश्यस्य हि न सर्वोऽप्यंशः सर्वज्ञाने स्फुरति, किन्तु "यथारुचि यथार्थित्वम्" [२।१८] इत्यादिप्रत्यभिज्ञोक्तरीत्या कश्चिदेवांशः स्फुरति। अत एव सर्वो विकल्पः स्मृतिरिति शास्त्रज्ञसमयसङ्गतिः। तथा च निर्विकल्पसमाधौ शुद्धस्वरूपस्फूर्त्या शुद्धस्वरूपस्मृतिरुपपद्यत इति प्राहुः। एतद्विस्तरस्तु प्रत्यभिज्ञातात्पर्यविवृतौ द्रष्टव्यः ॥ ६९ ॥ एवंविधप्रत्यभिज्ञारूपाद-

१. उच्चरति–क० ख०।
२. रूपतापा–क० ख७।

ध्यानस्य परिपाको हि विकल्पपरिवर्जनम् ।
विकल्पो विविधख्यातिरेकधा निर्विकल्पकः ॥७१॥
अन्यानुल्लेखमात्रेण विकल्पो वर्जितो भवेत् ।
विकल्पे वर्जिते पश्चान्निर्विकल्पं स्वतः स्थितम् ॥७२॥
चित्रे विमृष्टे यद्वत्तु शुद्धा भित्तिर्हि संस्थिता ।
सम्पादनं शुद्धभित्तेश्चित्रसम्मार्ष्टिरेव हि ॥७३॥
एवं विकल्पस्यापोहे निर्विकल्पं मनः स्वतः ।
निर्विकल्पात्मसम्पत्तिर्विकल्पत्याग एव हि ॥७४॥
[1]नातोऽधिकं किञ्चिदस्ति पदं प्राप्यं हि [2]पावनम् ।
अत्र मुह्यन्ति विबुधा अपि मायामहित्वतः ॥७५॥

परोक्षविकल्पात् । साङ्गं समग्रं सकार्यमिति यावत् । प्रत्यभिज्ञातात्मतत्त्वो नाशयति ॥ ७० ॥ पक्वध्यानमेव निर्विकल्प इति यदुक्तं तद्विवेचयति—ध्यानस्येति । विकल्पपदार्थमेवाह—विकल्प इति । विविधा अनेकविधा ख्यातिर्विकल्पः । एकधा एकविधा ख्यातिर्निर्विकल्पकः । नीलो घट इत्यत्र ज्ञानं घटो नील इत्याकारत्रैविध्याद्[3] विकल्पत्वम् । समाधेर्घटाद्याकारत्वाभावेन ज्ञानैकरूपत्वान्निर्विकल्पत्वम् ॥ ७१ ॥ कथं ज्ञानस्य निर्विकल्पतासम्पत्तिरिति चेदाह—अन्येति । अनात्मोल्लेखरूपमनोव्यापारवर्जनमात्रेण ज्ञाने विविधाकारता निवर्तत इत्यर्थः । मात्रशब्देन साधनाल्पत्वात् सुसाध्यत्वं द्योतितम् । विकल्पवर्जनमात्रेण निर्विकल्पतासम्पत्तिरित्याह—विकल्प इति ॥ ७२ ॥ अत्र दृष्टान्तः—चित्र इति । संमार्ष्टिः संमार्जनम् ॥ ७३ ॥ दार्ष्टान्तिके योजयति—एवमिति । अपोहे अनुल्लेखनेन निरसने ॥ ७४ ॥ यथा हि दर्पणसम्मुखतो बिम्बापसारणमात्रेण शुद्धदर्पणस्वरूपसिद्धिरेवमनुल्लेखमात्रेण निर्विकल्पतासिद्धिरित्युक्त्वा निर्विकल्पस्वरूपमेव परमं फलं

१. ततो—क० । २. पावकम्—क० । ३. त्रैविध्यविंक—क० ।

सुबुद्धानां क्षणेनैव पदमेतद्धि लक्षितम् ।
त्रिधाऽधिकारिणो ब्रह्मन् उत्तमाधममध्यमाः ॥७६॥
उत्तमाः सकृदादेशकाले बुद्धयन्ति तत्पदम् ।
विचारो ध्यानमपि च श्रुतिकालसमं भवेत् ॥७७॥
उत्तमानां नहि क्लेशः प्राप्तौ तस्य पदस्य हि ।
अहं पुरा निदाघस्य रात्रौ ज्योत्स्नासुमण्डिते ॥७८॥
प्रियया सम्परिष्वक्तो विकसद्वाटिकाङ्गणे ।
परार्द्ध्यशयनासीनो मदिरामदघूर्णितः ॥७९॥
अश्रौषं खे सिद्धगणवचनं मधुपेशलम् ।
[1]अद्वैततत्त्वाश्रितं वै तत्काले ह्यविदं पदम् ॥८०॥
विज्ञातं तद्विचारेण ध्यानेनापि तदैव हि ।
एवमर्धमुहूर्तेन ज्ञात्वा तत्पावनं पदम् ॥८१॥

नातोऽधिकं किञ्चिदस्तीत्याह—नात इति। पावनमिति। संसारदुःखदोषवर्जितत्वात् पावनमित्यर्थः। अत्र नित्यप्राप्तैवंविधस्वरूपप्राप्तौ विबुधाः पण्डिता अपि महित्वतः माहात्म्यात् ॥ ७५ ॥ सुबुद्धानाम् उत्तमाधिकारिणाम्। लक्षितं भवेदिति शेषः। एतदेव विशदयति—त्रिधेत्यादि ॥ ७६ ॥ सकृदादेशः प्रथमोपदेशः। विचारध्यानादिकं कथं क्षणेन स्यादिति चेदाह—विचार इति। श्रुतिकाले एव भवेत् ॥ ७७ ॥ अत्र स्वात्मानमेवोदाहरति—अहमिति। निदाघ उष्णकालः। मण्डिते वाटिकाङ्गण इति सम्बन्धः ॥ ७८ ॥ परार्द्ध्यमुत्तमम् ॥ ७९ ॥ मधुवत् पेशलं सुन्दरम्। किंविधं वचनमिति चेदाह—अद्वैतेति। तत्काले श्रवणकाल एवाविदम् ॥ ८० ॥ एवं तदैव श्रवणकाल एव विचारेण मननेन ध्यानेनापि निर्विकल्पसमाध्यन्तनिदिध्यासनेनापि विज्ञातं प्रत्यभिज्ञातम्। एवमुक्तरीत्याऽर्धमुहूर्तेन कालेन

१. अद्वैतत्त्वाश्रितं वैव—क० ख०।

मुहूर्तमभवं भूयस्तत्समाहितमानसः ।
परमानन्दवाराशिपरिमग्नो ह्यशेषतः ॥८२॥
अथ स्मृतिं समासाद्य विचारपरमोऽभवम् ।
अहोऽद्भुतपदं ह्येतदानन्दामृतनिर्भरम् ॥८३॥
अपूर्वमासादितं मे भूयस्तत् संविशाम्यहम् ।
नैतस्य लेशमात्रं स्यादैन्द्रादिसुखमप्यलम् ॥८४॥
आब्रह्म सुखमेतस्य लेशतोऽपि न सम्मितम् ।
अद्यावधि व्यर्थ एष कालो मे ह्यतिवाहितः ॥८५॥
अविदित्वा स्वं निधानं चिन्तामणिगणान्वितम् ।
यथा भिक्षामटति वै मुष्टिपिष्टप्रलिप्सया ॥८६॥
अहो लोकास्तथा स्वात्मानन्दाज्ञानविमोहिताः ।
बाह्यं सुखं लेशमात्रं प्राप्नुवन्ति महाश्रमैः ॥८७॥
तदलं मे वृथा बाह्यसुखलेशपरिश्रमात् ।
अनन्तानन्दसन्दोहतत्परः स्यां हि सर्वदा ॥८८॥

तत् पावनं पदमद्वैतात्मपदं ज्ञात्वा ॥ ८१ ॥ तस्मिन्नेवाद्वैतात्मपदे सम्यगाहितं मानसं यस्य, निर्विकल्पसमाधिमान् मुहूर्तमभवम् । परमानन्देति । निःशेषेण परमानन्दसमुद्रे मग्नो ब्रह्मानन्दैकरूप इति भावः ॥ ८२ ॥ अथ समाध्यनन्तरं विचारपरमः विचारैकपरः ॥ ८३ ॥ तदात्मपदं संविशामि । तत्र समाहितमानसो भवामीत्यर्थः । एतस्य समाधिसुखस्य । अलं पूर्णं सुखमपि ॥ ८४ ॥ आब्रह्म सुखं हैरण्यगर्भानन्दान्तं सर्वं सुखम् । मे मया । अतिवाहितोऽतिक्रामितः कालः [1]प्रकृतानन्दानधिगमाद् व्यर्थः ।।८५।। जनानां स्वात्मानन्दानभिज्ञानेन विषयानन्दाभीप्सां सदृष्टान्तं निरूपयति—अविदित्वेति । स्वं स्वीयम् ॥ ८६ ॥ स्वात्मानन्दाज्ञानेन विमोहिताः ॥ ८७–८८ ॥

---

१. सुकृता–क० ।

अलमेतेन बाह्येन व्यवहारेण मे किमु ।
पिष्टपेषणकल्पेन चोपालम्भपदेन वै ॥८९॥
तानि भोज्यानि तान्येव माल्यानि शयनानि च ।
भूषणानि विचित्राणि योषित्सम्भोगकाश्च ते ॥९०॥
चिरपर्युषितप्रायाण्यपि संसेव्यते पुनः ।
गतानुगतिकत्वान्मे जुगुप्सा नहि जायते ॥९१॥
इति निश्चित्य भूयोऽहं यावदन्तर्मुखोद्यतः ।
तावदन्यो विमर्शो मां सुशुभः प्रत्युपस्थितः ॥९२॥
अहो मे चित्तमोहोऽयं किं मामेवमुपस्थितः ।
आनन्दपरिपूर्णात्मा स एवाहं स्थितोऽपि सन् ॥९३॥
भूयः किं कर्तुमिच्छामि प्राप्तव्यं वाऽपि किं मया ।
किमप्राप्तं मया कुत्र कदा वा प्राप्यते कथम् ॥९४॥
अप्राप्तस्यापि सम्प्राप्तिः कथं सत्या हि सम्भवेत् ।
अहोऽनन्तचिदानन्दरूपे मे स्यात् कथं क्रिया ॥९५॥

एतेन विषयानन्देनालम् । अत एव तत्प्रापकेण बाह्यव्यवहारेण मे किमु, प्रयोजनमिति शेषः । उपालम्भपदेन निन्दास्थानभूतेन ॥ ८९ ॥ पिष्टपेषणतुल्यतामेवाह—तानीति । असकृद् [1]भुक्तानीत्यर्थः ॥ ९० ॥ गतानुगतिकत्वाद् गतानां पितृपितामहादीनामनुगतिः समानाचरणं यस्य, अविचारपरत्वादिति यावत् । पर्युषितप्राय-विषयभोगे जुगुप्सा ॥ ९१ ॥ अन्तर्मुखतायामुद्यतः । विमर्शो विचारः ॥ ९२ ॥ तमेवाह—अहो इति । समाध्यनुभूतसुखस्य स्वरूपत्वेन सर्वदा प्रकाशमानत्वात् पुनः क्वचित् प्रवृत्तिरियं मोहेनेति भावः । स एवानन्दरूप एव ॥ ९३ ॥ कथं केनोपायेन ॥ ९४ ॥ अप्राप्तस्य सुखस्य प्राप्तिश्चेत्—"जातस्य हि ध्रुवो मृत्युः" [ भ० गी०

१. भूता—क० ।

देहेन्द्रियान्तःकरणान्यपि [1]स्वाप्नसमानि वै ।
ममैव तानि सर्वाणि त्वखण्डैकचिदात्मनः ॥९६॥
तत्रैकमन्तःकरणं निरुद्ध्यापि च किं भवेत् ।
अन्यान्यप्यनिरुद्धानि मनांसि च ममैव हि ॥९७॥
तथा चैकस्य मनसो निरोधे मम किं भवेत् ।
निरुद्धान्यनिरुद्धानि मनांसि मयि भान्त्यलम् ॥९८॥

२।२७ ] इति न्यायेन तत्सुखमनित्यमेव स्यादित्याह—अप्राप्तस्येति । मम निष्क्रियस्य न कापि क्रिया सम्भवतीत्याह—अहो इति ॥ ९५ ॥ ननु पूर्णचिदात्मनः साक्षात् क्रियाभावेऽपि देहादिद्वारा स्यादिति चेदाह—देहेति । तेषामसत्यत्वेन तद्द्वारापि न क्रियेति भावः । ननु तथापि—"अर्थे ह्यविद्यमानेऽपि संसृतिर्न निवर्तते । ध्यायतो विषयान् पुंसः[1] स्वप्नेऽनर्थागमो यथा ॥" [ भा० पु० ३।२७।४ ] इत्युक्तरीत्या मनोनिरोधेन फलं भवेदिति चेदाह—ममैवेति । प्रत्येकं जीवानां यानि पृथग् देहाद्यन्तःकरणान्तानि सन्ति तानि सर्वाणि ममैव भवन्ति । कुत इति चेदखण्डैकचिदात्मन इति विशेषणम् ॥ ९६ ॥ तथा च किमिति चेदाह—तत्रेति । तेष्वन्तःकरणेषु मध्ये एतद्देहान्तर्गतैकान्तःकरणनिरोधेन किं फलं भवेत्, न किञ्चिदिति भावः । अन्तःकरणनिरोधे विक्षेपनिवृत्तिः स्यादिति चेदाह—अन्यानीति । एकस्य निरोधेऽप्यन्येषामनिरोधान्न तेन विक्षेपनिवृत्तिरिति भावः ॥ ९७ ॥ एतन्मनोनिरोधे एतद्देहावच्छेदेन विक्षेपनिवृत्तिः स्यादिति चेदाह—तथा चेति । अनेकदेहावच्छेदेन विक्षेपसत्त्वे एकदेहे विक्षेपनिवृत्तिरप्रयोजिकेति भावः । नन्वेकमेव मनस्त्वदीयं नान्यदिति चेदाह—निरुद्धानीति । यथा ह्येकं मनो भाति,

---

1. 'अस्य' इति प्रायिकः पाठः ।
१. स्वप्न–क० ।

निरोधे सर्वमनसामपि मे न निरोधनम् ।
महाकाशात् सुवितते कुतो मयि निरोधनम् ॥९९॥
एवं पूर्णानन्दरूपे समाधिः स्यात् कथं मयि ।
चिदानन्दप्रपूर्णस्य पूर्णस्य गगनादपि ॥१००॥
मम क्रिया कथं का [1]स्याद्वयापि स्तः शुभाशुभे ।
अनन्तेषु शरीरात्माभासेषु मन्महित्वतः ॥१०१॥
क्रियाभासावभासेन तदभावेन वाऽपि किम् ।
कर्तव्यं वाऽप्यकर्तव्यं मम नास्त्यपि लेशतः ॥१०२॥

तथा जगति निरुद्धानि योगिनां मनांसि, अन्येषामनिरुद्धानि च मनांसि मय्येव भान्तीत्यविशेषाद् ममैव तानि सर्वाणीति भावः ॥९८॥ मनसो निरोधेऽपि मम निर्विशेषैकरूपस्य न कश्चन विशेषो भवेदित्याह—निरोध इति । कुत इति चेदसम्भवादित्याह—महाकाशादिति । महाकाशस्यापि चिदात्मप्रकाश्यत्वेन ततो विततत्वं ज्ञेयम् ॥ ९९ ॥ एवं मनोनिरोधेऽपि स्वरूपे विशेषाभावान्न समाधेरपि सम्भव इत्याह—एवमिति । समाधिर्नाम दृश्यानवभासे स्वरूपानन्दाविर्भावः । एतच्च न सम्भवति, अपरिच्छिन्नानन्दरूपे मयि दृश्यावभासेऽप्यानन्दा[2]-निरोधाद् मयि शुभाशुभप्रापकक्रियाऽसम्भव इत्याह—चिदानन्देति । चिदानन्दप्रपूर्णस्येत्यनेन कयाचित्क्रियया स्वरूपप्रकाशो वा आनन्दाविर्भावो वा प्राप्यो नास्तीति सूचितम् ॥ १०० ॥ केति क्रियास्वरूपाक्षेपः[3] । शरीरातिरिक्तस्य मे शरीरेऽप्याभासमानक्रियया न किञ्चिदित्याह—अनन्तेष्विति । मन्माहात्म्यादेव क्रियाद्याभास इत्याह—मन्महित्वत इति ॥ १०१ ॥ अतो मम न कर्तव्याकर्तव्ये इत्याह—कर्तव्यं वेति ॥ १०२ ॥

१. स्यादद्वयाऽपि–क० । २. प्यानन्द–क० ।
३. पेक्षा–क० । पेक्षः–ख० ।

तस्मान्निरोधने किं स्यादहमानन्दनिर्भरः ।
समाधावसमाधौ वा सत्यपूर्णस्वभावकः ॥१०३॥
यस्यां क्रियायां देहोऽयं स्थितस्तत्रैव तिष्ठतु ।
इत्यहं सर्वथा स्वस्थः सुमहानन्दमन्दिरः ॥१०४॥
अनस्तमितभारूपोऽहं सुपूर्णो निरञ्जनः ।
उत्तमाधिकृतस्यैवं स्थितिर्मे सम्प्रकीर्तिता ॥१०५॥
अधमानामनेकैस्तु जन्मभिर्ज्ञानजं फलम् ।
[1]मध्यमानां तु क्रमतः श्रवणं च विचारणम् ॥१०६॥
अनुध्यानं च भवति ततो ज्ञानं प्रजायते ।
विज्ञानफलसंयुक्तः समाधिर्दुर्लभो भवेत् ॥१०७॥
विज्ञानफलहीनेन किं समाधिशतेन वा ।
तस्माद्विज्ञानहीनैस्तैः फलं नास्ति समाधिभिः ॥१०८॥
लोकेऽपि गच्छन् मार्गेषु निर्विकल्पप्रकाशितान् ।
भावानविज्ञाय तेषामज्ञानं न निवर्तते ॥१०९॥

यतोऽहं समाधावसमाधौ वा सत्यपूर्णस्वभाव आनन्दनिर्भरश्च, ततो निरोधेन न किञ्चित् फलमित्याह—तस्मादिति ॥ १०३ ॥ यतो मयि क्रिया न सम्भाव्यते न वा तत्फलमत आह—यस्यामिति । स्वस्थः देहाहम्भाववर्जनात् स्वरूपस्थः ॥ १०४ ॥ अनस्तमितेति । अपरिच्छिन्नचिद्रूप इत्यर्थः । निरञ्जनः क्रियामालिन्यरहितः । एवम् उक्तरीत्या स्थितिर्ज्ञानप्राप्तिप्रकारः ॥ १०५ ॥ अधमानां नैकजन्मना ज्ञानफलम् । मध्यमानां कालक्रमेण ज्ञानम् । न तूत्तमानामिवाक्रमेण तत्काले ॥ १०६ ॥ ततोऽनुध्यानानन्तरं[2] ज्ञानं प्रत्यभिज्ञानम् ॥ १०७ ॥ तस्माद् विज्ञानात्मकफलहीनसमाधेर्व्यर्थत्वात् । तैः जाग्रदादौ स्थितक्षणसमाधिभिः ॥ १०८ ॥ कुत एवमिति चेन्निर्वि-

१. अधमानां–क० । २. नन्तरज्ञानं–क० ख० ।

निर्विकल्पाख्यविज्ञानं ज्ञानमात्रं निजं वपुः ।
तत् सर्वदा भासमानमप्यभातविधं ननु ॥११०॥
विकल्पाच्छादनादेव विकल्पानां व्यपोहने ।
भासमानमेव भूयो भातकल्पमपूर्वतः ॥१११॥
ज्ञानज्ञेयाविभेदेन त्वज्ञातं ज्ञातमुच्यते ।
एवमेष भवेदात्मविज्ञानक्रम उत्तमः ११२॥
ब्रह्मन्नेवं श्रुतं भूयो विचार्य [1]ज्ञातुमर्हसि ।
अथ विज्ञायात्मतत्त्वं कृतार्थस्त्वं भविष्यसि ॥११३॥
जनकेनैवमादिष्टस्त्वष्टावक्रो महामुनिः ।
पूजितस्त्वभ्यनुज्ञातो गत्वा स्वं स्थानमादरात् ॥११४॥

कल्पस्याज्ञानानिवर्तकत्वादिति सदृष्टान्तमाह—लोक इति। अविज्ञाय विषयविकल्पमकृत्वा स्थितस्य तदज्ञानं न निवर्तते ॥ १०९ ॥ कुतो निर्विकल्पादज्ञानानिवृत्तिरिति चेत्, समानविषयकत्वेनैव ज्ञानस्याज्ञाननिवर्तकत्वमित्याह—निर्विकल्पेति। ज्ञानमात्रं निर्विषयकमित्यर्थः। तच्च शुद्धस्वरूपभूतम्। तत् निर्विकल्पम्। सर्वदा सविकल्पकालेऽपि ॥११०॥ कस्मादभातविधमिति चेदाह—विकल्पेति। निर्विकल्पसमाधिरूपं ज्ञानं दर्पणतुल्यं सर्वविकल्पप्रतिबिम्बाश्रयम्। अतो विकल्पैराच्छन्नत्वात् प्रतिबिम्बपूर्णदर्पणवद् भातमप्यभातविधमित्यर्थः। अत एव विकल्पहाने भूयः सर्वदा भासमानमेवापूर्वतो भातकल्पो भवतीत्याह—विकल्पानामिति ॥ १११ ॥ पूर्वं ज्ञेयमिश्रितत्वाद् ज्ञानज्ञेययोरविभेदेन [2]अपृथग्भावहेतुनाऽज्ञातं विकल्पनिरसने तदेव ज्ञातमित्युच्यते। उपसंहरति—एवमिति। उत्तमफलदत्वादुत्तमः ॥ ११२ ॥ भूयः पुनः। अथ विचारध्यानात्मकमनननिदिध्यासानन्तरम्। विज्ञाय सोऽहमिति प्रत्यभिज्ञाय ॥११३॥ आदिष्टः उपदिष्टः, जनकेन पूजितः। आदरात्

---

१. ध्यातु—ग० । २. पृथग्—क० ।

विचारानुध्यानपूर्वं विज्ञाय परमं पदम् ।
विधूय [1]सर्वसन्देहान् जीवन्मुक्तोऽभवद् द्रुतम् ॥११५॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डेऽष्टावक्रीये
सप्तदशोऽध्यायः ॥



विचारानुध्यानपूर्वमिति योजना ॥ ११४ ॥ परमं पदम् अद्वितीयात्मतत्त्वम् । सर्वसन्देहम् अवेद्यं वेद्यं कथं भवेदित्यादि सन्देहम् । द्रुतमित्यष्टावक्रस्योत्तमाधिकारिता द्योतिता ॥ ११५ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
सप्तदशोऽध्यायः ॥



1. सर्वसन्देहमिति टीकानुसारी पाठः ।

# अथ अष्टादशोऽध्यायः

भार्गवैवं हि सा संविद् वेद्यवन्ध्या निरूपिता ।
उपलब्धिदशास्तस्या बहुधा संश्रुता ननु ॥ १ ॥
अव्युत्पत्त्या न जानन्ति जना मायाविमोहिताः ।
सा दशा भाव्यते सूक्ष्मदृशैव नान्यथा क्वचित् ॥ २ ॥
किं बहूक्तेन ते राम शृणु सारं ब्रवीम्यहम् ।
मनसा वेद्यते वेद्यं मनसोऽतो न वेद्यता ॥ ३ ॥
तथा च वेद्यनिर्मुक्तं मनोऽप्यस्तीति सम्भवेत् ।
तन्मनो वेद्यनिर्मुक्ता वित्तिरित्यभिधीयते ॥ ४ ॥

अत्र सेतूपपद्यैस्तु स्वरूपं प्रोच्यते क्रमात् ।
मोक्षस्य मनसो व्योमबन्धयोः सत्यवस्तुनः ॥

एवं जनकोक्तरीत्या । सा आत्मरूपिणी । तस्याः वेद्यरहितसंविदः ॥ १ ॥ अव्युत्पत्त्या स्वरूपापरिचयेन । तां संविदं न जानन्ति । सा दशेति वेद्यरहितसंविद्दशा । सूक्ष्मदशा अबहिर्मुखमनसा ॥२॥ पञ्चदशाध्यायादौ—"किन्त्वेवंविधसंवित्तिर्वेद्यवन्ध्या निरूपिता । उपलब्धुमशक्यैव" [ १५।७ ] इति भार्गवेणोक्तं तदेतज्जनकाष्टावक्रसंवादेन निरूपितमपि चित्तारोहाय भूयो निरूपयति—किं बहूक्तेनेति । मनसेति । सर्वं वेद्यं मनसा वेद्यत इति प्रसिद्धम् । अतो मनःस्वरूपवेदने करणाभावान्न मनसो वेद्यताऽस्ति ॥३॥ तथा चेति । मनसोऽवेद्यत्वसिद्धावित्यर्थः । वेद्यानां [1]वेदनान्तरालादौ वेद्यनिर्मुक्तं मनोऽप्यस्तीति सम्भवेत् । कार्यान्तरालेषु [2]कारणस्य निर्व्यापारस्वभावत्वादिति भावः । एवंविधं मन एव वेद्यनिर्मुक्ता वित्तिरित्युपलब्धुं सुशक्यैवेत्याह—तन्मन इति । वेद्यनिर्मुक्तं मन एव शुद्धमात्म-

१. 'वेदना' नास्ति—ग० । २. करणस्य—ख० ग० ।

उपलब्धिस्वरूपत्वाद्विदितैव हि सा सदा ।
अन्योपलब्ध्यपेक्षायामान्ध्यं स्यादनवस्थितेः ॥ ५ ॥
[1]कञ्चिद्भावं हि संपश्यन्न भासि किमु भार्गव ।
न भासि चेन्न त्वमसि ततः प्रश्नस्तु ते कथम् ॥ ६ ॥
अहो स्वयं खपुष्पात्मा सन् कथं हितमिच्छसि ।
कथं तवात्मानमहं साधयामि विभावय ॥ ७ ॥
सामान्येन विभान्तं मां न जानामि विशेषतः ।
इति चेद् राम सामान्यमेव ते रूपमव्ययम् ॥ ८ ॥

तत्त्वमिति भावः ॥ ४ ॥ नन्वेवंविधात्मतत्त्वस्यावेद्यत्वे पुमर्थसिद्धये तद्वेदनमसम्भाव्यमित्याशङ्क्याह—उपलब्धीति । स्वप्रकाशत्वेन विदितैव प्रकाशमानैव । न तत्प्रकाशे इतरापेक्षेति भावः । तस्याः स्वप्रकाशत्वानङ्गीकारे दोषमाह—अन्येति । अन्या स्वातिरिक्तोपलब्धिरन्योपलब्धिः, तदपेक्षायाम् । वित्तेर्वेदनं वित्त्यन्तरेण तस्य च वित्त्यन्तरेणेत्यनवस्थायां न किञ्चित् प्रकाशेतेति भावः ॥ ५ ॥ चिदात्मनः सदा स्वप्रकाशत्वमनुभावयति—कञ्चिदिति । घटादिदर्शनकाले त्वं न भासि किमित्यर्थः । यदीतरभासनकाले त्वं न भासि तर्हि तदा त्वं नासि, सत्त्वस्य भासनायत्तत्वात् । इष्टापत्तौ प्रश्नानुपपत्तिमाह—तत इति ॥६॥ आत्मा नास्तीति वदन्तमुपहसति—अहो इति । [2]स्वात्मनिषेधकस्य तवात्मानमहं[3] कथं साधयाम्येतद्विभावय । स्वयं मर्तुं प्रवृत्तस्यान्येन रक्षणमशक्यमिव स्वात्मानं निषेद्धुं प्रवृत्तस्य मूढस्यात्मसाधनमन्येन कर्तुमशक्यमिति भावः ॥७॥ नन्वहमात्मानं न निषेधामि, किन्तु सामान्यतो भान्तमात्मानं विशेषरूपेण ज्ञातुमिच्छामीत्याचिपति—सामान्येनेति । लोकेऽपि सामान्यज्ञाने विशेषजिज्ञासयैव प्रश्नः,

१. किञ्चि—क० । २. 'स्वात्मनिषेधकस्य' नास्ति—क० ।
३. स्वात्मानमहं—क० ।

विशेषलेशरहितमेतावद्धयेव ते वपुः ।
अहो जानन्नपि पुनरलं मुह्यसि वै वृथा ॥ ९ ॥
भासकं सर्वमपि च विशेषविषयं भवेत् ।
अतः सामान्यरूपस्त्वं विभासि स्वत एव हि ॥१०॥
शरीराद्यात्मना भासि चेच्छृणु प्रब्रवीमि ते ।
शरीरात्मतया भासि सङ्कल्पेनैव नान्यथा ॥११॥
विभावय सूक्ष्मदृशा सङ्कल्पेऽन्यस्य देहतः ।

अतो नाहं मूढ इति भावः । समाधत्ते—सामान्यमेवेति । लोके सामान्यविशेषात्मकेषु घटादिष्वेवं प्रश्नः सम्भवति, न तु निःसामान्यविशेषात्मकगगनतुल्येऽखण्डैकरूपे । अतो यत्त्वया सामान्यमात्मरूपं ज्ञातं तदेव वस्तुतो निःसामान्यं ते रूपमव्ययं नित्यम् । अन्यद्देहाद्यात्मना भासमानमनित्यं न ते रूपमिति भावः ॥ ८ ॥ दृश्यद्रष्टृभावादिसर्वविशेषरहितं यदेतत् संवित्सामान्यं विभाति, तदेतावदेव ते निजं वपुः । एतज्ज्ञात्वापि वृथाऽत्यन्तं त्वं मुह्यसीत्याह—अहो इति ॥ ९ ॥ ननु तर्हि घटपटादितत्तद्विषयभासकं ज्ञानसामान्यं मद्वपुः स्याच्चेन्नेत्याह—भासकमिति । तत्तद्भासकज्ञानस्य तत्तद्भास्यविशेषाकाररूपितत्वेन न तद्भासकत्वेन त्वद्रूपतेत्यर्थः । अतः केवलज्ञानसामान्यरूपस्त्वमन्यानपेक्षतया स्वत एव विभासि । सामान्यं वा विशेषो वा परस्परानुसंपृक्तमेव भासते, न तु स्वातन्त्र्येण । चिदात्मा तु निःसामान्यविशेषवपुषा भासत इति भावः ॥१०॥ ननु न[1] मे त्वदुक्तचित्सामान्यवपुषा भासनमस्ति, किन्तु देहेन्द्रियादि[2]सङ्घातसामान्यरूपेणैवेत्याशङ्कां परिहर्तुमाह—शरीरेति । शरीरादेरात्मत्वमहंबुद्धिविषयत्वम्, तच्च तत्तद्देहादिसङ्कल्पकाले एवेत्याह—शरीरात्मेति । देहाद्याकारोल्लेखसङ्कल्पेनैव शरीरात्मतया भासि न स्वत इत्यर्थः ॥ ११ ॥ एतदेवानुभावयति—

१. 'न' नास्ति-क० । २. न्द्रियादिसात्मस-क० ।

भाति किं तव देहत्वं देहस्तच्चापि ते भवेत् ॥१२॥
एवं सङ्कल्प्यते यद्यच्छरीरं तत्तदेव हि ।
तेन सर्वमयस्त्वं स्याः कथं देहात्ममात्रकः ॥१३॥
तस्माद् दृश्यं तव वपुर्नहि स्याद्व्यभिचारतः ।
तस्माद् दृङ्मात्ररूपोऽसि न दृग् दृश्या कदाचन ॥१४॥
सा स्वप्रभा दृश्यरूपविशेषलेशवर्जिता ।
देहदेशकालभेदचित्रवैचित्र्यचित्रिता ॥१५॥

विभावयेति । देहादन्यस्य घटादेः सङ्कल्पकाले भासमानस्य तव देहरूपता भाति किम्? न भातीत्यर्थः । ननु देहत्वस्याभासनेऽपि[1] वस्तुतो मम चिदात्मनः सम्बन्धाद्देहादिर्मम वपुरिति चेद् भास्यघटादेरपि सम्बन्धाविशेषात्तच्चापि तव देहो भवेदित्याह—देह इति ॥ १२ ॥ ननु तथाप्यहंप्रत्ययिनश्चिदात्मनः परिच्छेदकोपाधित्वादेव देहोऽपि स्वरूपमिति चेद् घटादिज्ञानकाले घटादिसङ्कल्पात्मकज्ञानस्यैवाहंप्रत्ययित्वेन घटादीनामेव तत्परिच्छेदकोपाधित्वाद् घटाद्यमपि ते रूपं स्यात्, अतो भासमानक्रमिकसर्वभावमयत्वमेव ते भवेन्न तु देहमात्रात्मत्वमित्याह—एवमिति ॥ १३ ॥ तस्मादिति । सर्वमयत्वप्राप्तेरित्यर्थः । इष्टापत्तिरिति चेदाह—व्यभिचारत इति । तत्तद्भासनकाले तदितरेषामहंप्रत्ययिसम्बन्धाद्यभावादित्यर्थः । तस्माद् दृश्यस्य त्वद्रूपतानुपपत्तेः । अत एव तवात्मभूता दृग् दृश्यात्मिका न भवतीत्याह—न दृगिति ॥ १४ ॥ आत्मरूपमेव निष्कृष्याह—सेति । आत्मस्वरूपा दृग् इत्यर्थः । स्वप्रभा स्वप्रकाशरूपा, स्वस्वरूपभासनेऽन्यापेक्षावर्जितेति भावः । दृश्यरूपेति । शुद्धदृङ्मात्ररूपेति भावः । ननु देहदेशादिनिखिलविशेषस्य तदेकनिष्ठत्वात् कथं विशेषलेशवर्जितेति चेदाह—देहेति । भेदात्मकचित्रस्य वैचित्र्येण चित्रिता प्रतिबिम्बचित्रितदर्पणवज्जगच्चित्रवतीति

१. त्वस्य भासनेऽपि—क० ।

तस्मात् सङ्कल्पमात्रस्य वर्जनात् परतः स्थितम् ।
शेषं शुद्धचिते रूपं स्वात्मानमुपलक्षय ॥१६॥
एवं सक्कल्लक्षिते तु यत् स्थितं तदलक्षणात् ।
अज्ञानं सर्वसंसारकारणं तद् विलीयते ॥१७॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सङ्कल्पवर्जनाच्छुद्धस्वरूपस्य प्रथैव सः ॥१८॥
स स्वरूपात्मकत्वात्तु नाप्राप्तः स्यात् कदाचन ।
केवलं मोहमात्रस्य निरासेन कृतार्थता ॥१९॥
अन्यो मोक्षो न सम्भाव्यः कृतकत्वाद्विनाश्यतः[1] ।
स्वरूपादतिरिक्तश्चेच्छशशृङ्गसमो हि सः ॥२०॥

भावः ॥१५॥ तस्मादिति । दर्पणे प्रतिबिम्बवैचित्र्यस्य बिम्बमूलकत्ववच्चिति जगद्वैचित्र्यस्य सङ्कल्पमूलकत्वादित्यर्थः । परतः स्थितं सङ्कल्पवर्जनोत्तरं स्वतोऽभिव्यज्यमानम् । शेषं सङ्कल्पत्यागावधिभूतम् ॥ १६ ॥ एवं सङ्कल्पवर्जनेन स्वात्मनि सक्कल्लक्षिते प्रत्यभिज्ञाते सति तस्मिन् यत् स्थितं देहाद्यं तस्यालक्षणात्तु स्थूलोऽहं ब्राह्मणोऽहमित्यनभिमननादेव तद्देहादावहम्भावकारणभूतमज्ञानं विलीयते । देहात्मभावाद्युन्मूलनक्षमात्मप्रत्यभिज्ञानेनैवाज्ञाननिवृत्तिर्न क्षणिकसमाधिरूपान्निर्विकल्पादापातप्रत्यभिज्ञानाद् वेति भावः ॥ १७ ॥ नन्वेवमज्ञाननिवृत्त्युत्तरं कदा कुत्र किंविधो मोक्षः प्राप्यत इत्याशङ्क्याह—न मोक्ष इति । सङ्कल्पवर्जनकाले एव स्वात्मन्येव स्वरूपप्रथात्मको मोक्षो भवेदिति भावः ॥ १८ ॥ नाप्येवंविधो मोक्षोऽपूर्वः प्राप्यते, तस्य स्वरूपभूतप्रथात्मत्वादित्याह—स इति । ननु तर्ह्येतावान् श्रवणादिप्रयासो व्यर्थ इति चेन्नेत्याह—केवलमिति । मोहोऽज्ञानम् ॥ १९ ॥ ननु निरुक्तज्ञानात् स्वर्गादिवदन्य एव मोक्षः कुतो नेष्यत इति

१. श्यते-क० ।

स्वरूपं सर्वतः पूर्णमन्यो मोक्षः क्व सम्भवेत् ।
स्वरूपे सम्भवन्[वेद्] मोक्षो दर्पणप्रतिबिम्बवत् ॥२१॥
लोकेऽपि बन्धविगमादृते मोक्षो न भावितः ।
विगमोऽभाव एव स्यात् सत्योऽभावात्मकः कथम् ॥२२॥
भावाभावात्मकं वस्तु नहि सम्भवति क्वचित् ।
तथा च स्वाप्नभावाश्च भावाभावोभयात्मकाः ॥२३॥
सत्याः स्युर्बाधहेतोस्ते त्वसत्या इति चेच्छृणु ।

चेत्तस्य कृतकत्वेन विनाश्यत्वप्रसक्तेरित्याह—अन्य इति । अतो नान्यो मोक्ष इति सम्बन्धः ॥ २० ॥ कुतः शशशृङ्गतुल्यत्वमिति चेदाह—स्वरूपमिति । स्वरूपबाह्यस्यासिद्धेः सम्यङ्निरूपितत्वान्न मोक्षः क्वचित् सेत्स्यतीति भावः । ननु जगदिव स्वरूप एव मोक्षोऽस्त्विति चेत्तर्हि प्रतिबिम्बवत् स्वरूपानतिरिक्त एवेत्याह—स्वरूप इति ॥ २१ ॥ लोकेऽपि मोक्ष इति न वस्त्वन्तरमित्याह—लोकेऽपीति । विगमो हि बन्धनाशः । नाशो नाम ध्वंसाभावः । तथा चाभावस्य सत्यत्वेन भावत्वे चैकमेव विरुद्धभावाभावोभयरूपं भवेदिति भावः ॥ २२ ॥ भावाभावात्मकमिति । विरुद्धोभयरूपं क्वचिन्न सम्भवति, सत्यतां न प्राप्नोतीत्यर्थः । अयं भावः—भावत्वं सत्त्वम्, अभावत्वमसत्त्वम्, तदुभयरूपमेकं न सम्भवति, विरोधादिति न बन्धाभावोऽतिरिक्तः, किन्तु तदधिकरणस्वात्मरूप एवेति । ननु बन्धाभावस्यात्मरूपत्वे आत्मन एव भावाभावविरुद्धोभयरूपत्वं स्यादित्याशङ्क्य आत्मातिरिक्तस्य भावत्वाभावत्वादेरखिलस्यासिद्ध्या न विरुद्धरूपतेति वक्तुमेकस्य विरुद्धोभयरूपत्वाङ्गीकारे स्वाप्नभावानां तथाविधानां सत्यत्वप्रसक्तिरित्याह—तथा चेति । अस्ति नास्तीत्युभयप्रत्ययविषयत्वादुभयात्मत्वम् । सत्याः स्युरिति सम्बन्धः ॥ २३ ॥ ननु स्वाप्नानां नोभयरूपेण सत्यता, तद्गतभावरूपताया बाधितत्वादित्याशङ्क्य

बाधोऽभावप्रत्ययः स्यात् प्रत्ययाभावकालिकः ॥२४॥
यस्यैवं बाधयोगः स्यात् सोऽसत्यो नहि चेतरः ।
अस्ति सर्वस्य दृश्यस्य बाधोऽप्रत्ययकालिकः ॥२५॥
तस्मादसत्यमेव स्याद् भावाभावात्मना स्थितम् ।
यस्याभावस्पर्शलेशः कदाचित् कुत्रचिन्नहि ॥२६॥
एवंविधं तु चित्तत्त्वं सत्यं सर्वात्मना स्थितम् ।
तस्माद्विभिन्नमोक्षस्तु न सत्यः स्यात् कथञ्चन ॥२७॥
मोक्षः पूर्णस्वरूपस्य सकृत् प्रथनमुच्यते ।

एवमात्मातिरिक्तस्याखिलस्यापि बाधसम्भवान्न मोक्षोऽप्यतिरिक्तः सेत्स्यतीत्याह—बाधहेतोरित्यादि । बाधितस्यासत्यतां वक्तुं बाधलक्षणमाह—बाध इति । नास्ति घट इत्यभावप्रत्यय एव बाधः । नन्वात्मनोऽपि नास्त्यात्मेति कस्यचित् प्रत्ययसम्भवाद्बाधितत्वेनासत्यताप्रसक्तिरित्यत आह—प्रत्ययाभावकालिक इति । आत्मनो नित्यप्रकाशत्वेन प्रत्ययाभावासम्भवाद् नासत्यतेति तात्पर्यम् ॥ २४ ॥ यस्य घटादेः । एवम् उक्तरीत्या । तत्प्रत्ययाभावकालिकतदभावप्रत्ययरूपबाधयोगः स्यात्, सोऽसत्यः । नहि चेतर इति । एवंबाधयोगरहितो नासत्यः । अप्रत्ययकालिक इति । दृश्यमात्रस्य प्रत्ययाभावकालिकाभावप्रत्ययरूपबाधसत्त्वादसत्य[त्व]मित्यर्थः ॥ २५ ॥ तस्मात् उक्तबाधयोगात् । भावाभावात्मना स्थितमिति । अस्ति नास्तीत्युभयप्रत्ययविषयीभूतं दृश्यमात्रम् । यस्य वस्तुनः । कदाचित् काले कुत्रचिद्देशे वा अभावस्पर्शलेशः प्रत्ययाभावकालिकाभावप्रत्ययसम्बन्धो नहि ॥२६॥ एवंविधं बाधविधुरं चिदात्मतत्त्वमेव सत्यम् । ननु घटादिप्रत्ययकाले नास्ति चिदात्मप्रत्यय इति चेदाह—सर्वात्मनेति । दर्पणप्रतिबिम्बन्यायेन सर्वात्मना तस्यैव भासमानत्वेन स्थितत्वान्न तदप्रत्ययः कदाचनेति भावः । तस्मादिति । आत्मभिन्नदृश्यमात्रस्यासत्त्वादित्यर्थः ॥ २७ ॥ स्वरूपा-

चेत्यवर्जनमात्रेण चितिः पूर्णा प्रकीर्तिता ॥२८॥
चेत्याभासनमेवास्याश्चितेः सङ्कोचनं भवेत् ।
चेत्याभाने चितिः पूर्णा परिच्छेदविवर्जनात् ॥२९॥
कालादिभिः परिच्छेदो यदि तस्या निरूप्यते ।
अचेतितः परिच्छेदश्चेतितो वा भवेद् वद ॥३०॥
अचेतने ह्यसिद्धः स्याच्चेतने सैव व्यापिका ।
लोके कालपरिच्छिन्नो भावो यः कोऽपि भावितः ॥३१॥

तिरिक्तस्य निखिलस्यासत्यत्वात् पूर्णमपरिच्छिन्नं यत् स्वरूपं तस्य यत् सकृत् प्रथनमपरिच्छिन्नं प्रथनम् । अविद्याया नष्टत्वादविद्याऽनावृतमिति यावत् । ननु सदा पूर्णस्वभावायाश्चितेः कथं मोक्षदशायामेव पूर्णत्वमिति चेदाह—चेत्येति । स्वभावतः पूर्णापि चेत्यसम्पर्कादपूर्णेव भवतीति भावः ॥ २८ ॥ एतदेवाह—चेत्येति । अस्याश्चितेः । यथा हि दर्पणस्वरूपं प्रतिबिम्बैः सङ्कुचितमिव भवति, तथेति भावः । यथा हि प्रतिबिम्बाभासने दर्पणस्यापरिच्छिन्नतेव भवति, तथा चेत्येऽभाते चितिः पूर्णेव भवतीत्याह—चेत्येति । ॥ २९ ॥ एवं चितेः स्वान्तर्भातचेत्यैरेव परिच्छेदाभासो न वस्तुतः कालाद्यैः परिच्छेद इति वक्तुमुपक्रमते—कालादिभिरिति । तस्याः चितेः । परिच्छेदः परिच्छेदकः कालादिः । चेतितो वाऽचेतितः चितिप्रकाशितो वा न वेत्यर्थः ॥ ३० ॥ अचेतने अचेतितत्वे चित्याऽप्रकाशितत्व इति यावत् । असिद्धः स्यादिति । चिदविषयस्य शशशृङ्गतुल्यत्वादसिद्धिरिति भावः । चेतन इति । चेतितत्वे इत्यर्थः । सैव चितिरेव । व्यापिकेति । दर्पणव्याप्तैः प्रतिबिम्बैर्दर्पणस्येव[1] चितिव्याप्तैः कालाद्यैश्चितेर्न परिच्छेद इति भावः । एतदेव सोदाहरणमुपपादयति—लोक

१. स्यैव—क० ख० ।

भावकालौ परिच्छेद्यपरिच्छेदकतां गतौ ।
चिता व्याप्तौ भवेतां वै यदा तर्हि तथाविधौ ॥३२॥
अव्याप्तौ तु चिता यर्हि कथं सिद्ध्येत् परिच्छिदिः ।
चितेर्बहिर्यदा चेत्यमस्ति तत् स्यात् परिच्छिदिः ॥३३॥
चितेर्बहिश्चेत्यसिद्धिः सर्वथा नोपपद्यते ।
यो बहिः स कथं सिद्ध्येच्चितिसम्बन्धवर्जितः ॥३४॥
सम्बन्धोऽपि नैकदेशः स्यादसिद्धस्तथेतरः ।
तत्सम्बन्धांशमात्रस्य भानादन्यन्न सिद्ध्यति ॥३५॥
अतो बहिः पदार्थोऽपि चितिनिर्मग्न इष्यताम् ।

इति । भावितः दृष्टः ॥३१॥ तत्रैवं स्थितिरित्याह—भावकालाविति । चिता व्याप्तयोः प्रकाशितयोरेव भावकालयोस्तथाविधता परिच्छेद्यपरिच्छेदकता ॥ ३२ ॥ तत्र परिच्छेद्यपरिच्छेदकयोर्मध्येऽन्यतरस्यापि चिताऽव्याप्तौ न परिच्छेदसिद्धिरित्याह—अव्याप्ताविति । एवञ्च प्रकृते परिच्छेदकाभिमतस्य कालादेश्चिद्व्याप्तत्वस्यावश्यमेष्टव्यत्वेन व्याप्येन कालादिना व्यापकस्य परिच्छेदो न सम्भवतीति भावः । यदि परिच्छेदकाभिमतकालादिचेत्यस्य चिद्व्याप्तस्य चितेर्बहिः सत्त्वसम्भवे परिच्छेदस्तेन चितेः स्यादित्याह—चितेरिति । तत् तदा ॥ ३३ ॥ चिद्व्याप्त्या प्रकाशमानस्यैव स्वरूपसिद्धिर्नान्यस्येत्याह—चितेरिति ॥ ३४ ॥ ननु चित्सम्बन्धाद्वस्तुस्वरूपसिद्धिः । तथा च घटे दण्डसम्बन्ध इव चितेः कालाद्येकदेशसम्बन्धेनापि कालादिस्वरूपसिद्धिश्चिद्व्याप्तिश्च सिद्ध्यतीति चेदाह—सम्बन्ध इति । चित्सम्बन्धः कालादेरेकदेश इति वक्तुमयुक्तम् । तथा सति चित्सम्बन्धादितरांशोऽसिद्धः स्यात । कुत इति चेदन्यांशस्याभावादित्याह—तत्सम्बन्धेति ॥ ३५ ॥ यतश्चित्यनिर्मग्नो न सिद्ध्यति, अतो यत्राव्यक्तभित्तावखिलदृश्यचित्रमवभासते तत्स्वरूपसिद्ध्यर्थं तदपि बहिःपदार्थरूपं चितिनिर्मग्नमिष्यताम् । एवञ्च

एवं च सर्वात्मनैव मग्नं चेत्यमपीष्यताम् ॥३६॥
कथं स्वान्तर्विनिर्मग्नं स्वपरिच्छेदकं भवेत् ।
चेत्यमेवंविधं राम विचारय सुयुक्तितः ॥३७॥
चितेरन्तर्भासमानं प्रतिबिम्बात्मकं भवेत् ।
न भावोदरगो भावो भवन् लोके सुदृश्यते ॥३८॥
भावानां स्याद्धि साङ्कर्यं तथा चेद् राम सर्वतः ।
बहिःपदार्थस्ते प्रोक्तो भ्रममूलो हि सर्वथा ॥३९॥

दीपालोकनिर्मग्नभित्तिस्थचित्राणामर्थाद्यथा दीपालोकनिर्मग्नत्वं तथा चितिनिर्मग्नं चेत्यमिष्यतामित्याह—अत इति ॥ ३६ ॥ एवं स्वान्तर्निर्मग्नेन कालादिना स्वपरिच्छेदोऽसम्भवीत्याह—कथमिति । एवं परिच्छेदककालादेर्व्याप्यत्वादपरिच्छेदकत्वमुक्त्वा सम्प्रति गगनव्याप्तैर्घटाद्यैर्गगनस्य परिच्छेदवदपि चिदात्मनो न परिच्छेद इति सूचयितुं गगनाद् घटादिकमिव चिदात्मनो व्यतिरिक्तं दृश्यं नास्तीति साधयितुमुपक्रमते—चेत्यमिति । एवंविधं चितिनिर्मग्नम् ॥ ३७ ॥ विचारप्रकारमेवाह—चितेरिति । चितिनिर्मग्नत्वेनान्तर्भासमानं चेत्यं प्रतिबिम्बात्मकमेव भवेत्, अन्यथा निरूपयितुमशक्यत्वात्, प्रतिबिम्बलक्षणयोगाच्च । एतच्च प्राग् वितानितम्[1] । अन्यथाऽनुपपत्तिमेव दर्शयति—न भावेति ॥ ३८ ॥ भावशरीरे न भावान्तरमित्यत्र प्रत्यक्षानुपलब्धि प्रदर्श्य तथाङ्गीकारे साङ्कर्यदोषमाह—भावानामिति । घटपटादेः परस्परस्वरूपान्तर्भावे घटः पटः स्यात्, पटो घटः स्यादिति भावः । तथा च दर्पणप्रतिबिम्बतुल्यत्वाद् दृश्यं न चिदात्मनो व्यतिरिक्तमिति तात्पर्यम् । प्रकारान्तरेणाव्यतिरिक्ततां साधयति—बहिःपदार्थ इति । अव्यक्तमित्यर्थः । भ्रममूलः स्वरूपाज्ञानमूल इति प्राक् प्रोक्तम्[2] ॥३९॥

1. द्वादशाध्याये चतुर्दशाध्याये च ।
2. द्वादशेऽध्याये ।

तदाश्रयाणां भावानां कथं स्यात् सत्यता वद ।
चितिस्वरूपः स्वात्मैव तत्तद्भावात्मना सदा ॥४०॥
भासते स्वाच्छन्द्यशक्त्या नाधिकं विद्यते क्वचित् ।
इति वाक्यं समाकर्ण्य पुनः पप्रच्छ भार्गवः ॥४१॥
भगवन् भवता प्रोक्तं दुर्घटं प्रतिभाति मे ।
शुद्धा चितिर्विचित्रैका भासत इत्यसम्भवात् ॥४२॥
चितिश्चेत्यमिति द्वेधा वस्तु सर्वैर्विभावितम् ।
तत्र चेत्यं चिता भास्यं स्वप्रभा चितिरस्तु ते ॥४३॥
यथाऽऽलोकभातमपि वस्तु तद्भिन्नमस्ति वै ।
एवं चिता भासितं तु चेत्यमस्तु पृथग्विधम् ॥४४॥
चेत्यं चिदात्मकमिति नानुभूतिं समारुहेत् ।

तदाश्रयाणाम् अव्यक्तात्मकबहिःपदार्थाश्रयाणाम् । भ्रान्त्यारोपितभित्तिगतचित्राणामिव नाधिष्ठानातिरिक्तत्वेन सत्यत्वमिति भावः । तस्मात् स्वात्मैव चितिस्वरूपः सदा तत्तद्दृश्यभावात्मना भासत इत्यन्वयः ॥ ४० ॥ कुत एवं भासत इति चेदाह—स्वाच्छन्द्येति । मायाभिधानया स्वातन्त्र्यशक्त्या मायाविपरिकल्पितेन्द्रजालसृष्टिरिव भासते । अतः स्वरूपातिरिक्तं क्वचित् किञ्चिदपि नहि विद्यते ॥ ४१ ॥ शुद्धाखण्डा[1] चितिरेकापि विचित्रा भासत इत्यसम्भवाद् दुर्घटं प्रतिभाति ॥ ४२ ॥ असम्भवमेव विशदयति—चितिरिति । सर्वैर्विभावितं सर्वानुभवसिद्धमनपह्नवनीयमिति तात्पर्यम् । तत्र तयोर्मध्ये ते चितिः स्वप्रभैवास्तु । चितेः स्वप्रकाशत्वं त्वदुक्तमेवास्त्विति तात्पर्यम् ॥ ४३ ॥ [2]चितेश्चेत्यं भिन्नमिति सदृष्टान्तं साधयति—यथेति । आलोकभातमालोकाद्यथा भिन्नम्, एवं चितो भिन्नं चेत्यमस्त्वित्यर्थः ॥ ४४ ॥ नानुभूतिं समारुहेत् सर्वानुभवविरोधाच्चिच्चेत्ययोरेकता नानुभव-

१. खण्डचिति–क० । २. चित–ग० ।

अथ च प्रागभिहितं जनकेन महात्मना ॥४५॥
सङ्कल्पवर्जनादेव निर्विकल्पं मनो भवेत् ।
तदेव निर्विकल्पं स्याज्ज्ञानं संसारनाशनम् ॥४६॥
तदेव ह्यात्मनो रूपमित्युक्तं तत् कथं भवेत् ।
आत्मनो हि मनः प्रोक्तं करणं ज्ञानकर्मणि ॥४७॥
मनो यद्यात्मनो न स्याद्विशिष्येत जडात् कथम् ।
मनो जडाद्विशेषः स्यादात्मनो भगवन्ननु ॥४८॥
मनसैव हि बन्धः स्यान्मोक्षो वाऽप्यात्मनः स्फुटम् ।
सविकल्पं मनो[1] बन्धो मोक्षः स्यान्निर्विकल्पकम् ॥४९॥
तत् कथं मन एवात्मा करणं हि मनः स्मृतम् ।
निर्विकल्पस्य संसिद्धावपि द्वैतं तु शिष्यते ॥५०॥

विषयेत्यर्थः । आक्षेपान्तरम्—अथेति । जनकेनोक्तमिति भवता यदभिहितं तत् कथमिति व्यवहितेन सम्बन्धः ॥ ४५ ॥ जनकोक्तिमेवानुवदति—सङ्कल्पेति । तदेव निर्विकल्पं मन एव । संसारनाशनम्, प्रत्यभिज्ञानद्वारा संसारनिवर्तकमित्यर्थः ॥४६॥ कथं भवेदित्याक्षेपनिदानानुपपत्तिमाह—आत्मनो हीति । ज्ञानकर्मणि ज्ञानक्रियायाम् ॥ ४७ ॥ चेतनस्यात्मनश्चितिक्रियाकरणं मनः । तदभावे आत्मनो जडत्वप्रसक्तिरित्याह—मन इति ॥ ४८ ॥ आत्मनो बन्धमोक्षावपि मनोनिमित्तकावित्याह—मनसैवेति । [1]बन्धमोक्षयोर्मुख्यहेतुत्वाद् बन्धो मोक्ष इति ॥४९॥ निर्विकल्पं मन एवात्मेति प्रागुक्तं तत्कथमित्याह—तत्कथमिति । तत् तस्मात् । कर्तृकरणयोरभेदानुपपत्तेरित्यर्थः । अतो दर्पणप्रतिबिम्बन्यायेन दृश्यैक्येऽपि [१]मनसो द्वैतं परिशिष्यत इत्यर्थः ॥५०॥

---

1. हेतुहेतुमतोरभेदेनोपचाराद् मनो बन्धो मनो मोक्ष इति चोच्यत इति भावः ।

१. मनसा—ख० ग० ।

अथापि लोके दृष्टोऽस्ति यस्य भ्रान्तिरसन् हि सः ।
नहि भ्रान्तिरसत्या स्यात्तदद्वैतं कथं भवेत् ॥५१॥
अर्थक्रिया न क्वचिच्च दृष्टाऽसत्येन वस्तुना ।
सर्वं हि जागतं वस्तु स्थिरमर्थक्रियाकरम् ॥५२॥
तदसत्यं कथं ब्रूहि यतोऽद्वैतं प्रसिद्ध्यति ।
सर्वं च भ्रान्तिविज्ञानं भ्रान्त्यभ्रान्तिभिदा कथम् ॥५३॥
भ्रान्तिः सर्वसमा वापि कथं स्याद् ब्रूहि मे गुरो ।
सन्देह एष [1]चिरतो हृदि मे परिवर्तते ॥५४॥
इत्येवं प्रश्नमाकर्ण्य दत्तात्रेयः समस्तवित् ।
साधुप्रश्नप्रहृष्टात्मा प्रवक्तुमुपचक्रमे ॥५५॥
राम साधु त्वया पृष्टं प्रोक्तप्रायमिदं पुनः ।
यावन्न मनसस्तोषस्तावद् भूयो विशोधयेत् ॥५६॥
गुरुर्वापि कथं ब्रूयादपृष्टस्तन्मनोगतम् ।

भ्रान्तिविषयस्यासत्यत्त्वेऽपि भ्रान्तिस्वरूपस्य सत्यत्वाद् द्वैतपरिशेष इत्याक्षिपति--अथेति ॥ ५१ ॥ अर्थक्रिया स्थैर्यं चासत्ये रज्जुसर्पादौ न दृष्टम्, तत् कथमर्थक्रियाकारिणोऽस्थि[णः स्थि]रस्य दृश्यमात्रस्यासत्यतेत्याह--अर्थक्रियेति ॥ ५२ ॥ यतः जगतोऽसत्यत्वात्, अद्वैतं प्रकर्षात् सिद्ध्यति। यदि दृश्यज्ञानं सर्वं भ्रान्तिरूपं तर्ह्यन्यस्याभ्रान्तिज्ञानस्याभावाद् भ्रान्तिरभ्रान्तिरिति ज्ञानभेदव्यवहारः कथमित्याह—सर्वमिति ॥ ५३ ॥ सर्वेषामेकरूपा भ्रान्तिर्वा कथं स्यादित्याह—भ्रान्तिरिति ॥ ५४ ॥ समस्तवित् सर्वज्ञः ॥ ५५ ॥ त्वया पुनः पृष्टमेतदतः प्रोक्तप्रायमेव। सर्वोऽप्येषोऽपूर्वः[2] प्रश्नो न भवतीति तात्पर्यम्। तर्हि कथमस्य साधुत्वमिति चेदाह—यावदिति। संशयनिवृत्त्या तोषः। विशोधयेत् विचारयेत् ॥ ५६ ॥ तन्मनोगतं शिष्य-

१. विरतो-क०ख०। २. अपूर्व-क०।

प्राणिनां हि बुद्धिभेदात्तर्कः पृथगवस्थितः ॥५७॥
अपृष्ट्वा स्वस्वाभिमतं कः सन्देहाद्विमुच्यते ।
प्रष्टुर्विद्या हि सुदृढा प्रश्नो बीजं निरूपणे ॥५८॥
अप्रष्टुर्नैव विद्या स्यात् पृष्ट्वा विद्यात्ततो गुरुम् ।
चितिरेकैव वैचित्र्याद्भासत इति सम्भवेत् ॥५९॥
एकरूपो यथादर्शः प्रतिबिम्बादनेकधा ।
पश्य स्वप्नविकल्पादौ मन एकं हि केवलम् ॥६०॥
द्रष्टृदर्शनदृश्यात्मवैचित्र्येण विभाति हि ।
एवं शुद्धैव सा संविद्विचित्राकारभासिनी ॥६१॥
चितिश्चेत्यमिति द्वेधा स्वप्नेऽपि हि विभासते ।
आलोकमन्तरा त्वन्धो भावं जानाति वै ननु ॥६२॥

जिज्ञासितम् । पुनः प्रश्नोऽप्युपपद्यत इत्याह—प्राणिनामिति । बुद्धिभेदेन तर्कभेदात् । शिष्यहृद्गततर्कस्य गुरुणा ज्ञातुमशक्यत्वेन सकृदुपदेशेन शङ्काऽनिवृत्तेरिति भावः ॥ ५७ ॥ अप्रष्टुः [1]सन्देहानिवृत्तिस्तस्मात् प्रष्टुरेव विद्या भवति नान्यस्येत्याह—अपृष्ट्वेति । प्रश्नादेव निरूपणं भवतीत्याह—प्रश्न इति ॥ ५८ ॥ ततः अप्रष्टुर्विद्याभावात् क्रमेणोत्तरं वक्तुमुपक्रमते—चितिरिति ॥ ५९ ॥ कथं सम्भवेदिति [2]चेद् दृष्टान्तमाह—एकरूप इति । दर्पणस्य बिम्बसापेक्षत्वेन वैषम्यमिति दृष्टान्तान्तरमाह—पश्य स्वप्नेति ॥ ६० ॥ स्वप्नमनोराज्यविकल्पे मन एव बिम्बाद्यनपेक्ष्य द्रष्ट्रादिवैचित्र्येण विभाति । एवमेव शुद्धसंविद्विचित्राकारभासिनी ॥ ६१ ॥ एवं चितेर्वैचित्र्यमुपपाद्य द्वितीयाक्षेपं निराकरोति—चितिरिति । चिच्चेत्ययोर्द्वैतं स्वप्ने सर्वेषां भासमानमपि यथा न वस्तुतोऽस्ति, एवं जाग्रति सर्वेषां भासमानमपि द्वैतं नास्तीत्यर्थः । अथालोकेन भासमानघटादेस्तदन्यत्व-

१. सन्देह—क० । २. च सह—क० ।

अन्धस्याभासमानं च रूपं भाति स्मृतौं किल ।
नैवं चितेरभाने किं कदा कुत्र विभासते ॥६३॥
यथादर्शं विना किञ्चित् प्रतिबिम्बं न भाति वै ।
आदर्शान्नातिरिक्तोऽतः प्रतिबिम्बो भवेद्यथा ॥६४॥
एवं चितिमृते किञ्चिदतिरिक्तं न विद्यते ।
अत एव मनोऽप्यन्यत् सर्वथा नास्ति वै चितेः ॥६५॥
यथा स्वप्ने मनस्तद्वज्जाग्रत्यपि मनो नहि ।
कल्पितं कार्यसंसिद्धयै करणं केवलं मनः ॥६६॥

मिव[1] चिता भासमानदृश्यस्य चिदन्यत्वमिति तृतीयाक्षेपपरिहारायाह—आलोकमिति । यद्यद्विना न भासते तत्तदात्मकमिति व्याप्तेर्दृष्टान्ते व्यभिचारः, अन्धस्यालोकं विना त्वचैव घटादेर्भासनात् ॥ ६२ ॥ नन्वेवमप्यालोकं विना रूपस्याभासनादालोकरूपयोरभेदप्रसक्तिरिति चेदाह—अन्धस्येति । जन्मान्धस्य रूपाभासनेऽपि तदन्येषां सर्वेषामालोकमनपेक्ष्य रूपस्यापि स्मृतौ भासमानत्वाद् नालोकात्मता रूपस्येत्यर्थः । प्रकृते तु न क्वापि व्यभिचार इत्याह—नैवमिति । एतदेवोपपादयति—चितेरिति । कदा काले[2] कुत्र देशे चितिमनपेक्ष्य किं विभासते, न किञ्चिदित्यर्थः ॥ ६३ ॥ प्रकृतव्याप्तेर्दृष्टान्तमाह—यथेति । यथा आदर्शं विना प्रतिबिम्बो न भाति, अतो हेतोरेव यथा प्रतिबिम्ब आदर्शान्नातिरिक्तः ॥६४॥ दार्ष्टान्तिके योजयति—एवमिति । अत एवेति । मनसोऽपि दृश्यतुल्यत्वादित्यर्थः ॥ ६५ ॥ अत्र दृष्टान्तः—यथेति । स्वप्ने हि ज्ञातृज्ञान[3]करणज्ञेयानामेकरूपत्वेन यथा पृथङ्मनो नास्ति, तथा जाग्रन्मनोऽपीत्यर्थः । यथा स्वप्ने कल्पितमनसैव सकलकार्यनिर्वाह एवं जाग्रत्यपीत्याह—कल्पितमिति ॥ ६६ ॥

---

१. मेव—क० । २. लोके—क० ख० ।
३. कारण—क०

यथा स्वाप्नः कुठारः स्यात् करणं तरुछेदने ।
राम क्रियाऽसत्यरूपा सत्यं तत्करणं कथम्[1] ॥६७॥
असता नरशृङ्गेण कः कदा सुविदारितः ।
तस्मान्नास्ति मनो राम चासत् कार्यस्य कारणम् ॥६८॥
स्वप्ने दृशिक्रियाकार्यंकरणं[2] मन उच्यते ।
यथा[3] तथा सर्वदापि मनो नास्ति क्रियाकरम् ॥६९॥
चिदात्मा केवलं स्वच्छस्वाच्छन्द्यान्मनआदिकम् ।
परिकल्प्य व्यवहरेद् दृश्यद्रष्ट्रादिभेदतः ॥७०॥
क्वचित् क्वचित् केवलं तु निर्विकल्पात्मना स्थितः ।
शृणु भार्गव चित्तत्त्वं परिपूर्णमपि स्वयम् ॥७१॥

स्वाप्नतरुच्छेदनक्रियाया असत्यत्वाद् यथा तत्करणं कुठारोऽप्यसत्यः, एवं दृश्यासत्यत्वेन तज्ज्ञानस्याप्यसत्यत्वात् तत्कारण[4]मप्यसत्यमित्याह—यथेति। तरुच्छेदने यथा कुठारस्तथा मन इति शेषः। मनसोऽसत्यत्वमवर्ज्जनीयमित्याह—क्रियेति ॥ ६७ ॥ कार्य[5]कारणयोरसत्यत्वे क्रिया सुतरामसत्येति सदृष्टान्तमाह—असतेति । कारकं करणम् ॥ ६८ ॥ [6]प्रोक्तमेव पुनः सदृष्टान्तं द्रढयति—स्वप्न इति । ॥ ६९ ॥ तर्हि कथमेतद्बन्धमोक्षादिवैचित्र्याभासनमिति चेदाह—चिदात्मेति । स्वच्छमप्रतिहतं स्वाच्छन्द्यं स्वातन्त्र्यम् । ऐन्द्रजालिक इव स्वीयमायाशक्त्यैव सर्वं परिकल्प्य व्यवहरेदित्यर्थः ॥ ७० ॥ क्वचित् क्वचित् प्रोक्ताऽन्तरालदशासु । चिदात्मैव सर्वत्र सविकल्पनिर्विकल्परूपेण भासत इत्युपपादयितुमुपक्रमते—शृण्विति ॥ ७१ ॥

---

१. तथा–ख० । २. कारणं–क० ख० ।
३. तथा राम–ख० । ४. करण–क० ।
५. करण–ग० । ६. प्रोक्ता–क० ।

नाकाशतुल्यं चैतन्यात् स्वप्रकाशमतः स्थितम् ।
आकाशश्च चिदात्मा च न विलक्षणतां गतौ ॥७२॥
पूर्णः सूक्ष्मो निर्मलश्चाजोऽनन्तोऽपि निराकृतिः ।
सर्वाधारोऽप्यसङ्गात्मा सर्वान्तरबहिर्भवः ॥७३॥
विशेषस्तत्र चैतन्यमाकाशे तन्न विद्यते ।
वस्तुतश्चैतन्यपूर्ण आत्मैवाकाश उच्यते ॥७४॥
नह्यात्माकाशयोर्भेदो लेशतोऽपि हि विद्यते ।
य आकाशः स आत्मैव यश्चात्माकाश एव सः ॥७५॥
अज्ञाः पश्यन्त्यात्मरूपमाकाशमिति वै भ्रमात् ।
सौरालोकं यथोलूकस्तमोमात्रं प्रपश्यति ॥७६॥
आकाशमेव विज्ञास्तु पश्यन्त्यात्मचिदात्मकम् ।
परा चितिः परेशानी स्वच्छस्वातन्त्र्यवैभवात् ॥७७॥

आकाशवत् पूर्णमपि चिद्रूपत्वान्नात्मवस्त्वाकाशतुल्यमित्याह—नाकाशतुल्यमिति । यतश्चैतन्यरूपमत आत्मतत्त्वं स्वप्रकाशम् । नाकाशवज्जडम् । आकाशात्मनोः सर्वसाम्येऽपि चैतन्यमात्रमेवात्मनोऽधिकमित्याह—आकाशश्चेति ॥ ७२ ॥ तयोः साधारणधर्मानाह—पूर्ण इत्यादि । पूर्णो व्यापकः । सूक्ष्मः अप्रतिघरूपः । निर्मलः एकरसः । अजोऽनन्त इति प्रागभावध्वंसाभ्यामस्पृष्टः । निराकृतिरवयवसंस्थानहीनः । सर्वाधारोऽप्यसङ्गात्मा सर्वाश्रयोऽप्यसंस्पृष्टः । सर्वान्तरबहिर्भवः सर्वानुस्यूतः ॥ ७३ ॥ एवं सर्वसाम्येऽपि चैतन्यमेवात्मनि विशेष इत्याह—विशेष इति । तत् चैतन्यम् । अवास्तवो ह्याकाशात्मनोर्भेद इत्याह—वस्तुतस्त्विति ॥ ७४–७५ ॥ आत्मानमेवाज्ञा आकाशं पश्यन्ति । अत्र दृष्टान्तः—सौरेति । यथोलूकः स्वनेत्रदोषात् सौरालोकमेवान्धकारात्मकं पश्यति, एवमविद्यादोषादात्मानमेवाकाशं पश्यन्ति जनाः ॥ ७६ ॥ विज्ञाः पण्डितास्त्वाकाशमेव आत्मचिद्रूपं पश्यन्ति ।

[1]अवभासयेदात्मानं परिच्छिन्नमनेकधा ।
यथा राम स्वमात्मानं स्वप्ने बहुविधं पृथक् ॥७८॥
मनुष्यादिविभेदेन भासयस्येवमेव हि ।
अनेकधाऽवभासोऽपि परिच्छिन्नदृशैव हि ॥७९॥
स्वयं स्वदृष्ट्या पूर्णात्मरूपिण्येव परा चितिः ।
ऐन्द्रजालिक एकोऽपि स्वमात्मानमनेकधा ॥८०॥
भासयंस्तत्र द्रष्टॄणां स्वदृष्ट्या [1]भासते स्वयम् ।
एक एव निर्विकार एवं सा परमा चितिः ॥८१॥
शुद्धैकरूपभासापि परिच्छिन्ना ह्यनेकधा ।
परिच्छिन्नस्वरूपाणां [2]भासयेद् माययावृता ॥८२॥
मायावरणमप्येतत् परिच्छिन्नदृशो भवेत् ।
यथैन्द्रजालिको मायावृतश्चान्यदृशो भवेत् ॥८३॥

एतदेवोपपादयति—परा चितिरिति । परचिद्रूपः परमेश्वरः स्वच्छ-स्वातन्त्र्यस्य वैभवाद् माहात्म्याद् अवभासयेदिति सम्बन्धः ॥ ७७ ॥ अत्र दृष्टान्तः—यथेति । पृथग् भासयसीत्यन्वयः ॥ ७८ ॥ एवमेव चिदात्मनो ह्यनेकधाऽवभासनम् । स्वात्मनोऽनेकधाऽवभासोऽपि न स्वदृष्ट्येत्याह—अनेकधेति ॥७९॥ अत्र दृष्टान्तः—ऐन्द्रजालिक इति ॥८०॥ यथा ऐन्द्रजालिकः स्वमाययाच्छन्नो मायावृतदृष्ट्या स्वयमनेकधा भासमानोऽपि मायाऽप्रतिबद्धस्वदृष्ट्या स्वयमेक एव भासते, एवं परा चितिः स्वमायोद्भाविताविद्याच्छन्नदृशामनेकधा भासमानापि स्वदृष्ट्या निर्विकारैकरूपेत्याह—एवं सेति ॥ ८१ ॥ शुद्ध एकरसः, एकः अखण्डः, भासो यस्याः सा ॥ ८२ ॥ यथाऽनेकरूपताऽन्यदृष्ट्या, एवं मायावृतत्वमप्यन्यदृष्ट्यैवेति सदृष्टान्तमाह—मायेति । [3]स्वदृष्ट्याऽना-

1. 'अवभासयत्' इति सार्वत्रिकः पाठः। टीकानुसारेण तु मूले पाठः स्थापितः।
१. भासयेत्—क० । २. भासयन्—ख० । ३. स्वदृष्ट्यना—ख० ।

माया परचितोऽत्यन्तं स्वातन्त्र्यमतिदुर्घटम् ।
लोकेऽपि योगिनोऽन्ये च मान्त्रिका ऐन्द्रजालिकाः ॥८४॥
आच्छादितं स्वस्वातन्त्र्यं प्राप्य किञ्चित् सुयुक्तितः ।
दुर्घटं घटयन्त्येव ततो नैतद्विचित्रितम् ॥८५॥
एवं परचितेः स्वच्छस्वातन्त्र्यात् स्वात्मनो वपुः ।
अनेकधा परिच्छिन्नं भासितं भृगुनन्दन ॥८६॥
परिच्छेदोऽभिमानस्य त्वेकदेशे सुविश्रमः ।
साऽप्यपूर्णत्वविख्यातिर्याऽविद्या परिगीयते ॥८७॥

वृतत्वम् अनेकत्वं चेति भावः ॥ ८३ ॥ ननु परचिदात्मनः शुद्धचिदेकरूपस्यैवमात्मनोऽनेकरूपतावभासनं न घटत इत्याशङ्क्य मायाशक्त्या सर्वं घटत इति वक्तुं मायास्वरूपमाह—मायेति। परचिदात्मनो यद् दुःसाध्यं घटयति, एवंविधमत्यन्तमत्युत्तमं[1] स्वातन्त्र्यं सा मायेत्यर्थः। अत्र दृष्टान्तः—लोकेऽपीति ॥ ८४ ॥ आच्छादितमिति । योगिप्रमुखा हि वस्तुतः परचिदात्मान एवेति पूर्णस्वातन्त्र्ययुता एव, तथापि परचिन्माययाच्छन्नं तत् स्वातन्त्र्यं योगादिसुयुक्त्याच्छन्नस्वातन्त्र्याद् यत्किञ्चित् स्वातन्त्र्यांशाभिव्यक्तिं प्राप्य नियतकारणाभावेन दुर्घटमपि गजतुरगादिकं ते घटयन्ति। तथा च प्रकृते परचिदात्मनोऽपरिच्छिन्नमायाशक्तेरेतज्जगदवभासनं न विचित्रमित्यर्थः ॥ ८५ ॥ एवं प्रोक्तोपपत्त्या ॥ ८६ ॥ ननु पूर्णस्य चिदात्मनः परिच्छेदः किंविध इति चेदाह—परिच्छेद इति। अभिमानोऽहंभावः। चिदात्मा हि दीपादिजडप्रकाशविलक्षणः स्फुरत्प्रकाशरूपः। तादृशस्फूर्त्यात्मकप्रकाशस्यानात्मविश्रम एवेदंभावः। स्वात्मविश्रमोऽहंभावः। यदुक्तमजडप्रमातृसिद्धौ—"प्रकाशस्यात्मविश्रान्तिरहंभावो हि कीर्तितः" [ का० २२ ] इति। ईदृशो योऽहंभावः स परचिदात्मनोऽखिल

1. तमस्वात—क० ख० ।

अत्र मुह्यन्ति बहवस्तार्किकाः पण्डिता अपि ।
स्वात्मानमनुदाहृत्य बहिर्दृष्टितया स्थितेः ॥८८॥
गुरूपदिष्टं यत् किञ्चित् सद्वाऽप्यसदपीतरत् ।
अनुदाहृत्य चात्मानं यावन्न ह्यवलोकयेत् ॥८९॥
तावन्न फलमाप्नोति परोक्षात्मतया श्रुतेः ।
अतो मयोक्तं राम त्वं सम्पश्यात्मनि सद्दृशा ॥९०॥
चितिर्या परमा देवी सर्वसामान्यरूपिणी ।

स्वरूपविश्रान्तत्वाद् [1]अपरिच्छिन्नत्वात् पूर्णाहंभाव इत्युच्यते । एवंविधपूर्णाखण्डस्वरूपस्यापि स्वस्वातन्त्र्याख्यमायावशतो यदेकदेशभासनं तत्र च यः स्वात्मविश्रमः स परिच्छेद इत्युच्यते । पूर्णाहंभावतः परमात्मनः स्वमायाशक्त्या यः स्वात्मैकदेशाहंभावः स परिच्छेद इति तात्पर्यम् । अपिरेवार्थे । याऽपूर्णत्वख्यातिः, अविद्या इति च शास्त्रेषु परिगीयते स एव [2]अपूर्णाहंभावः ॥८७॥ एवं चैकदेशेऽहंभावविश्रमात् तदतिरिक्ताखिलचिदात्मप्रदेश एव आकाशत्वेन भासते, अतो नात्मनोऽतिरिक्त आकाश इति सिद्धम् । अत्र आकाशस्यात्मानन्यत्वे मुह्यन्ति । कुतो मुह्यन्ति इति चेदाह—स्वात्मानमिति । अनुदाहृत्येति । श्रुते मतेऽप्यर्थे प्रत्यग्रूपे निदिध्यासनमकृत्वेत्यर्थः । तत्रापि हेतुर्बहिर्दृष्टितया स्थितेरिति ॥ ८८ ॥ [3]तस्माद् निदिध्यासनपूर्वकापरोक्षं विना नाज्ञाननिवृत्तिरूपफलप्राप्तिरित्याह—गुरूपदिष्टमिति । सद्वा प्रकाशादिरूपता वा, इतरदसद्वा अप्रकाशादिरूपता वा ॥ ८९ ॥ तावत् अपरोक्षपर्यन्तम् ; फलम् अज्ञाननाशादिः । परोक्षात्मतया श्रुतेरेव श्रवणजनितपरोक्षतामात्रादेव न फलम् । सद्दृशा त्यक्तबहिर्मुखत्वदृष्ट्या ॥ ९० ॥ पुनः परिच्छेदकारणमायास्वरूपनिरूपणपूर्वकमाकाशस्वरूपं सुस्पष्टं

1. अपरिच्छिन्नपूर्णा—क० ख० । 2. पूर्णा—क० । 3. तस्य—क० ।

सा प्रकाशमयी यस्माज्जडव्यावृत्तरूपिणी ॥९१॥
अतः स्वात्मनि विश्रान्तिस्त्वहन्ता पररूपिणी ।
जडाश्चिदात्मविश्रान्ताश्चिदात्मनि विभासतः ॥९२॥
न स्वरूपे स्वतो भान्ति तस्मान्न स्वात्मविश्रमः ।
चितेस्तु केवलं स्वस्मिन्ननन्यापेक्षया सदा ॥९३॥
भासमानत्वतः स्वस्मिन् विश्रान्तिरुपपद्यते ।
पूर्णाहन्ता परा सेयं या जडेषु न विद्यते ॥९४॥
व्यावृत्तिस्पर्शहीनेयं परिच्छेदविवर्जनात् ।
सर्वमस्यां यतः संस्थमादर्शे नगरं यथा ॥९५॥

निरूपयितुमुपक्रमते—चितिरिति । सर्वसामान्यरूपिणी दृश्याकारपरिच्छेदरहिता । यस्माज्जडव्यावृत्तरूपिणी । प्रकाशमयीति दीपादिजडव्यावृत्तप्रकाशमयीत्यर्थः॥९१॥ अतः स्वात्मनि विश्रान्तिरूपा पररूपिण्यहन्ताऽपरिच्छिन्ना पराहन्ता तस्या भवेदिति शेषः । जडानां न स्वात्मविश्रान्तिरित्याह—जडा इति ॥ ९२ ॥ एतदेव स्पष्टमाह– न स्वरूप इति । स्वतः अनन्यापेक्षतया जडानां चिदात्माश्रयेणैव भासनात् स्वात्मनि स्वतो भासनाभावान्न स्वात्मविश्रमः, चितेस्तु केवलं जडमनपेक्ष्यानन्यापेक्षया स्वातन्त्र्येण सदा स्वस्मिन् भासमानत्वात् स्वस्मिन् विश्रान्तिरुपपद्यत इति सम्बन्धः ॥ ९३ ॥ उपपद्यत इति । जडवदन्यापेक्षा स्वस्वरूपप्रकाशे या नास्ति, एष एव स्वात्मविश्रम इति भावः । सेयं स्वात्मविश्रान्तिरेव पूर्णाहन्ता ॥ ९४ ॥ अस्या अहन्तायाः पूर्णत्वं कुत इति चेदाह—व्यावृत्तीति । व्यावृत्तेर्भेदस्य स्पर्शेन हीना, सर्वथा भेदसम्बन्धविधुरेति भावः । कुत एवमिति चेदाह—परिच्छेदेति । कुतः परिच्छेदवर्जनमिति चेदाह—सर्वमिति । यस्मादादर्शे प्रतिबिम्बनगरवदस्यामेव पूर्णाहन्तात्मकचिति तादात्म्येन स्थितं सर्वं दृश्यम । अतः

व्यावृत्तिर्वा परिच्छेदः कथं केन हि सम्भवेत् ।
एवं पूर्णस्वरूपायाः पूर्णं यत्स्फुरणं स्थितम् ॥९६॥
तदेव स्वात्मविश्रान्तिः पूर्णाहन्ता च कथ्यते ।
अखण्डैकरसं ह्येतदेतावद् राम वै भवेत् ॥९७॥
निरूपणे बहुविधमिव तत् प्रतिभासते ।
एतावदेव स्वातन्त्र्यं यतः शक्तिर्हि तन्मयी ॥९८॥
प्रकाशस्तेजसो यद्वदौष्ण्यं चैवापृथक् स्थितम् ।
एवं स्वातन्त्र्यविश्रान्तिसहितैकरसात्मिका ॥९९॥
इयमेव हि मायाख्या शक्तिः परमदुर्घटा ।
आदर्शवद्यत्स्वरूपे चिदेकरसरूपिणी ॥१००॥
सत्यप्यनेकवैचित्र्याभासनेन विभासते ।

परिच्छेदकस्य स्वातिरिक्तस्यान्यस्याभावात् [1]परिच्छेदाभावेन व्यावृत्तिस्पर्शो नास्तीति ॥९५॥ अतो व्यावृत्त्यादिकं न सम्भवतीत्याह—व्यावृत्तिरिति । पुनः पूर्णाहन्तां निष्कृष्याह—एवमिति । पूर्णस्वरूपायाश्चितेः पूर्णमपरिच्छिन्नं यत् स्वरूपस्फुरणं तदेव कथ्यत इति सम्बन्धः ॥ ९६ ॥ ननु तथापि चितिः पूर्णाहन्तेति च वस्तुद्वैविध्यात् परिच्छेदः स्यादित्याशङ्क्याह--अखण्डेति । एतावत् चितिः पूर्णाहन्ता चेति द्वयमप्येतदखण्डैकरसम् । अखण्डमेकम् एकरसं चिन्मात्रम् ॥ ९७ ॥ तर्हि कथं द्विधा निर्देश इति चेदाह—निरूपण इति । तत् चित्तत्त्वम् । एतावदेव अखण्डैकरसमेव स्वातन्त्र्यमपि । पूर्णाहन्ता स्वातन्त्र्यञ्च शक्तिरेवेति तन्मयं तदेकरसमित्यर्थः ॥ ९८ ॥ भेदव्यवहारविषयशक्तेरपृथक्त्वे दृष्टान्तमाह—प्रकाश इति । सहिता चितिः ॥ ९९ ॥ इयमेव पूर्णाहन्तैव । दुर्घटा दुःसाध्यमपि घटयति । दुर्घटतामेव निरूपयति--आदर्शवदिति ॥ १०० ॥ प्रतिबिम्बविचित्रोऽप्येकरूपादर्श इव स्वरूपे

---

१. परिच्छिन्ना—क० ख० ।

तथा भासनकालेऽपि स्वरूपादनिवर्तनम् ॥१०१॥
परिच्छेदावभासो यः सोऽनात्माभास उच्यते ।
साऽविद्या जडशक्तिः सा शून्यं प्रकृतिरेव च ॥१०२॥
अत्यन्ताभाव आकाशस्तमः प्रथमसर्गकः ।
सर्वं तदेव सम्प्रोक्तं परिच्छेदनमादिमम् ॥१०३॥
राम यः परिपूर्णात्मा विश्रमो वै समास्थितः ।
तस्यैकदेशताभ्रान्तिकृतमाकाशभासनम् ॥१०४॥
अत आत्मप्रदेशो य आत्माभिमतिवर्जितः ।
आकाशः स हि सम्प्रोक्तः स हि संसारकारणम् ॥१०५॥
एष एव भवेद् भेदः पशुदृष्ट्येकगोचरः ।
राम सूक्ष्मदृशा पश्य य आकाशस्त्वयेक्ष्यते ॥१०६॥

चिदेकरूपिणी सत्यपि जगद्वैचित्र्याभासनेन विभासनं वैचित्र्यभासनकालेऽपि चिदेकरसस्वरूपादनिवर्तनमिति यत्, एतदेव तस्या अतिदुर्घटत्वमिति शेषः ॥ १०१ ॥ एवं स्वातन्त्र्याख्यमायया यः स्वात्मनः परिच्छेदावभासः स एवानात्माभासः। आभासाभास्ययोस्तादात्म्यादाह--साऽविद्येति ॥ १०२ ॥ सर्वम् अनात्माभासादिप्रथमसर्गान्तं तदादिमं परिच्छेदनमेवोक्तम्। मायया आद्यपरिच्छेदवासनाऽविनाभूतमनात्मभासनमेवाविद्यादिशब्दैरुच्यत इत्यर्थः ॥ १०३ ॥ एवमुक्तमेवाकाशस्वरूपं निष्कृष्य श्लोकद्वयेन भङ्ग्यन्तरेणाह—राम य इति। तस्य पूर्णात्मविश्रमस्य । एकदेशताभ्रान्तिकृतम् ॥ १०४ ॥ अतः अहन्ताया एकदेशत्वभ्रान्तेः। आत्माभिमतिरहंभावः, आत्माभिमतिवर्जितो य आत्मप्रदेशः स एवाकाशः। स एवाकाशः संसारकारणम् ॥ १०५ ॥ नन्वाकाशः कथं संसारकारणमिति चेदाह एष इति। आकाश एवेत्यर्थः । संसारकारणपरिच्छिन्नात्मज्ञानभासिताकाशावभासनान्तरीयकत्वाद् भेदाभासस्य भेद एवाकाशः संसार-

तत्रत्यजीवराशीनामात्मा चैतन्यमेव सः ।
यथाऽन्यदेहेष्वाकाशो भासते यः सदा तव ॥१०७॥
स एव तेषामात्मा स्याच्चिदानन्दघनात्मकः ।
एवं स्वकल्पिताकाशग्रस्तं यच्चिद्वपुः स्थितम् ॥१०८॥
तदेव मन इत्युक्तमात्मैव नहि चेतरत् ।
तत्रावरणमुख्यत्वात् प्रमाणं मन उच्यते ॥१०९॥
आवृतप्राधान्यतस्तु प्रमाता जीव उच्यते ।
एवमाकाशावृतोऽपि चिदात्मा भूय एव तु ॥११०॥
आकाशे कोमलेऽत्यन्तशिथिले निर्घनेऽमले ।

कारणं चेति भावः । आकाशात्मनोरभेदमनुभावयति—रामेति ॥१०६॥ तत्रत्येति । तादृशाकाशप्रदेशस्येत्यर्थः । जीवराशीनां शरीरिणाम् । स आकाशः । यः स एवात्मेत्यन्वयः ॥ १०७ ॥ अन्यदेहेषु सदा तवाकाशो भासते यः स एवाकाशस्तेषां चिदानन्दघनात्मक आत्मा स्यात्, वस्तुनोरेकदेशस्थत्वायोगादिति यथा तथा तवाप्यात्मेति शेषः । एवं च यत्र यत्र यो य आकाशो भासते तत्रत्यशरीरिणां स एवात्मेति भावः । एवमाकाशात्मनोरैक्यमुपपाद्य मनःस्वरूपं निरूपयति—एवमिति । आकाशग्रस्तम् आकाशपरिच्छिन्नम् ॥१०८॥ तदेव आकाशपरिच्छिन्नं चिद्वपुरेव । अत आत्मैव मनो नेतरत् । नन्वात्मन एव मनस्त्वे कथं प्रमातृप्रमाणभेद इत्याशङ्कापनोदनायाह—तत्रेति । आत्मन एव मनस्त्वे सिद्धे सतीत्यर्थः । आवरणमुख्यत्वादिति । जडशक्त्यावृतं चित्तत्त्वं हि जीवः । तत्रावरणात्मकजडशक्तिप्राधान्येन प्रमाणं ज्ञानकरणं मन इत्यर्थः ॥ १०९ ॥ आवृतचित्तत्त्वप्राधान्येन जीव एव प्रमातेत्याह—आवृतेति । एवं स्वस्वातन्त्र्यपरिकल्पिताकाशात्मकजडशक्त्या आवृतोऽपि भूयः पञ्चभूतात्मकदेहेनाप्यावृत इत्याह—एवमिति । ॥ ११० ॥ तत्रादावाकाशस्यैव गुणान्तरोल्लासनेन वाय्वादिरूपते-

कठिनश्लिष्टघनतामालिन्यानां प्रकल्पनैः ॥१११॥
भूतान्याभास्य देहात्मा देहेनापि समावृतः ।
कुम्भोदरगतो दीप उदरं व्याप्य भासते ॥११२॥
एवमेष शरीरान्तरवभासनमात्रकः ।
आस्ते गूढप्रदीपात्मा तदन्तर्मात्रभासनः ॥११३॥
दीपप्रभा घटच्छिद्राद्यथा निर्याति वै बहिः ।

त्याह—आकाश इति। आकाशे कोमले स्पर्शाभाववति, शिथिलेऽसंश्लिष्टावयवे, निर्घनेऽनिबिडे, अमले मालिन्यरहिते। कठिनत्वं स्पर्शः, श्लिष्टता संश्लिष्टावयवता, घनता निबिडता, मालिन्यं समलता, एतेषां प्रकल्पनैः। भूतान्याभास्येति सम्बन्धः ॥ १११ ॥ भूतानीति। अस्पर्शस्याकाशस्य स्पर्शकल्पनेन वायुत्वम्। तस्यैव वायोरसंश्लिष्टावयवस्य संश्लिष्टावयवत्वकल्पनेन तेजस्त्वम्। भवति हि वाय्वपेक्षया तेजसः संश्लिष्टावयवत्वम्, यतः संश्लिष्टावयवस्य पृथ्वीसंक्रान्तस्य चक्षुर्गोचरतोपपद्यते। तस्यैव तेजसो निर्घनत्वस्य घनताकल्पनेन जलत्वम्। भवति हि [1]जलस्य घनत्वम्, यतोऽभिघात उपपद्यते। तस्यैव जलस्य निर्मलस्य मालिन्यकल्पनेन पृथ्वीत्वम्। भवति च पृथिव्यां मालिन्यम्, यतो जले निमग्नघटादिकमिव पृथ्वीनिमग्नं न दृश्यत इति। एवंविधभूतराशिमयदेहेनापि समावृतः सन् देहतादात्म्येन देहात्माऽभवदिति शेषः। एवं देहात्मतां प्राप्तोऽपि चिद्रूपतां न परित्यजतीति सदृष्टान्तमाह—कुम्भेति। यथा भासत इति योजनीयम् ॥ ११२ ॥ एष चिदात्मा, अवभासनमात्रकः। चित्प्रकाशमात्ररूपो[2] घटान्तर्गूढप्रदीपवदात्मा स्वरूपं यस्य। यथा घटान्तर्मात्रभासनो दीपः, एवं देहान्तर्मात्रभासनः ॥ ११३ ॥ नेत्रादिकरणसरणिसमुदितमपि घटादिज्ञानमात्मभूतमेवेति सदृष्टान्तमाह—दीपप्रभेति।

---

१. 'जलस्य' नास्ति—क० ।  २. रूपकः—क० ।

एवमक्षद्वारमुखाद् भूयो निर्याति वै चितिः ॥११४॥
निर्याणं तु चितेर्नास्ति पूर्णत्वादक्रियत्वतः ।
स्वात्मावरणमाकाशं स्फूर्त्तिशक्तिश्चिदात्मनः ॥११५॥
यावन्निवारयेत्तावद् निर्याणं प्रविभासते ।
मनोव्यापार एष स्यात् स्फूर्त्त्यापहतिरावृतेः ॥११६॥
तस्माद्राम मनो नान्यदात्मैव मन उच्यते ।
चला चितिर्मनोनाम्नी निश्चलात्मस्वरूपिणी ॥११७॥
आवृत्त्यभिहतिः स्फूर्त्त्या चलनं राम वै चितेः ।
एतदेव विकल्पः स्याद् विकल्पपरिवर्जने ॥११८॥
निर्विकल्पं पूर्णरूपं विज्ञानं मुक्तिनामकम् ।

भूय इति । अतः सदा प्रकाशमाना चितिस्तत्तद्विषयाकारेण पुनर्नूतनत्वेनापि प्रकाशत इत्यर्थः ॥ ११४ ॥ ननु चितेराकाशतुल्यायाः कथं निर्याणसम्भव इति चेदाह—निर्याणमिति । न वस्तुतश्चितेर्निर्याणमस्ति, किन्तु तदाभासनमात्रमित्याह—स्वात्मेति ॥११५॥ यावदिति । स्वात्मन आवरणभूतमाकाशात्मकं जडशक्तिरूपमज्ञानम्, चिदात्मनः स्फूर्त्तिरूपा ज्ञानशक्तिर्यावद् दूरं निवारयेत् तावच्चितेर्निर्याणं प्रविभासते । अत्रेदं तत्त्वम्—परचिदात्मनः स्वातन्त्र्योद्भासितपरिच्छिन्नाहम्भावावभासनेन परिमितप्रमाता जीवः । स घटान्तर्गतदीपवद्देहान्तर्गतचित्प्रकाशमयः । घटच्छिद्रान्निर्गतदीपप्रभया निष्क्रियस्य तमसोऽपसरणवत् चिदात्मनः स्फूर्त्तिशक्तेर्यत्र यत्रेन्द्रियादिसम्प्रयोगनिमित्ताभिव्यक्तिस्तत्र तत्र तदावरकाकाशाद्यभिधाज्ञाननिवृत्त्या चितिः प्रसृतेव भातीति । एवमावरणनिवृत्तिरेव मनोव्यापारोऽपीत्याह—मन इति ॥ ११६ ॥ तस्मादिति । आवरणमुख्यचिदात्मन एव मनस्त्वादित्यर्थः । एतदेव पुनर्निष्कृष्याह—चलेति ॥ ११७ ॥ चलनपदार्थमाह—आवृत्तीति । एतदेव चलनमेव । विकल्पस्य चलनस्य परिवर्जने कृते सतीति शेषः ॥ ११८ ॥ पूर्णरूपम् । परिच्छेदस्य विकल्पकृतत्वात् पूर्णरूपता । एवंविधपूर्णरूपतैव

राम त्यजात्र सन्देहं विकल्पस्य विवर्जने ॥११९॥
अप्यावरणशेषः स्यादिति नास्त्येव चावृतिः ।
आवृतिर्नहि सत्याऽस्ति यतः स्वेनैव कल्पिता ॥१२०॥
यथा मनोरथे बद्धः केनचिच्छत्रुणा स्वयम् ।
ताड्यमानस्तर्ज्यमानो यावत् सङ्कल्पवर्जनम् ॥१२१॥
कुर्यात्तावत्ताडनं वा तर्जनं वापि लीयते ।
किं तत्र शिष्यते बन्धस्तथाऽत्रापि विभावय ॥१२२॥
अनादिकालाद्रामात्र बन्धो नास्त्येव कस्यचित् ।
जडात्मभ्रान्तिमुत्सृज्य कोऽयं बन्धो विचारय ॥१२३॥
एष एव महाबन्धो बन्धसत्यत्वनिश्चयः ।
मृषा भीतस्य बालस्य यद्वद्ग्रह इव स्थितः ॥१२४॥

मुक्तिरित्यर्थः । अत्र निर्विकल्पविज्ञानस्य मुक्तिरूपत्वे ॥११९॥ सन्देहस्वरूपमाह—विकल्पवर्जनेऽप्यावरणशेषः स्यादिति । अस्य सम्भावनारूपत्वात् सन्देहत्वम् । ननु निर्विकल्पस्थितिमात्रेणावरणनिवृत्तिः कथं स्यादित्याशङ्क्याह—नास्त्येवेति । रज्जुसर्पवदावृतेः स्वेनैव कल्पितत्वादिति भावः ॥ १२० ॥ अत्र दृष्टान्तमाह—यथेति । मनोरथे मनोराज्यावसरे । सङ्कल्पवर्जनं कुर्यादिति सम्बन्धः ॥ १२१ ॥ यावत्तावदिति यदा तदेत्यर्थकम् । एवं सङ्कल्पवर्जनेन ताडनादेर्विलये सति तत्र तस्मिन् काले बन्धनं शिष्यते किम् ? न शिष्यत इत्यर्थः । तथाऽत्रापीति । सङ्कल्पवर्जने बन्धो न शिष्यत इत्यर्थः ॥ १२२ ॥ कल्पनातिरिक्तो बन्धः कस्यापि कदापि कुत्रापि नास्तीत्याह—अनादीति । अत्र संसारे । ननु तर्हि व्यर्थोऽयमुपदेशादिक्रम इति चेन्नेत्याह—जडेति । जडात्मकद्वैतभ्रान्तिकृत एव बन्ध इति भावः ॥ १२३ ॥ बन्धसत्यत्वनिश्चय एवापोह्यो बन्ध इत्याह—एष इति । स्वरूपज्ञाने सत्यपि बन्ध-

यावद् बन्धभ्रान्तिमेनां नोत्सृजेद् बुद्धिमानपि ।
न तावत् संसृतेर्मुक्तो भवेत् क्वापि महोद्यमैः ॥१२५॥
कोऽयं बन्धः कथं वा स्यान्निर्मलस्य चिदात्मनः ।
प्रतिबिम्बात्मकैः स्वात्मादर्शान्तःप्रविभावितैः ॥१२६॥
बन्धो यदि तदादर्शप्रतिबिम्बाग्निरादहेत् ।
बन्धस्य सत्यताबुद्धिर्मनसोऽस्तित्वनिश्चयः ॥१२७॥
एतद् द्वयमृते नास्ति बन्धः कस्यापि कुत्रचित् ।
यावदेतद् द्वयमलं सद्विचारमहाजलैः ॥१२८॥
नोन्मार्जितं तावदिह तस्य संसारनाशने ।
अहं वा ब्रह्मदेवो वा विष्णुर्वापि च शङ्करः ॥१२९॥
विद्यात्मिका वा त्रिपुरा नैव शक्ताः कथञ्चन ।
तस्माद्राम द्वयं चैतत् परित्यज्य सुखी भव ॥१३०॥

सत्यत्वभ्रान्त्यनुवृत्तौ[1] ज्ञानफलानुदयादेष एव मुख्यो बन्ध इति भावः। तस्यानर्थकरत्वे दृष्टान्तः—मृषेति ॥ १२४ ॥ बन्धसत्यत्वभ्रान्तिम्, क्वापि काले देशे वा ॥ १२५ ॥ अनारोपितो बन्धो न सिद्ध्यतीत्याह—कोऽयमिति। निर्मलस्याकाशतुल्यस्यासङ्गस्य चिदात्मनः कोऽयं बन्ध इति बन्धस्वरूपाक्षेपः, कथं वा स्यादिति तत्सम्बन्धाक्षेपः। ननु बन्धस्य चिदात्मातिरेकेणासत्त्वेऽपि तदन्तः प्रतिबिम्बभूतैर्दृश्याभासैः स्यादिति चेन्नेत्याह—प्रतिबिम्बात्मकैरिति ॥ १२६ ॥ स्वात्मान्तः प्रतिबिम्बात्मभूतैर्दृश्यैर्बन्धस्यात्यन्तासम्भवमाह—तदादर्शेति। [2]बन्धः सत्यः, मनोऽस्तीति द्विविधभ्रमातिरिक्तो बन्धो नास्तीत्याह—बन्धस्येति ॥ १२७ ॥ द्वयमलं प्रोक्तभ्रमद्वयात्मकमलम् ॥१२८॥ यस्य प्रोक्तद्विविधभ्रमो विचारेण न नष्टस्तस्य संसारो दुष्परिहर इत्याह—तस्येति ॥ १२९ ॥ द्वयं प्रोक्तभ्रमद्वयम् ॥१३०॥

१. भ्रान्त्यावृत्तौ—क० ख० । २. बन्धसत्यः—क० ख० ।

तस्माद्राम निर्विकल्परूपे मनसि संस्थिते[1] ।
आत्ममात्रत्वतस्तस्य द्वैतं न परिशिष्यते ॥१३१॥
इदं तदितिरूपेण भासनान्यन्मनो नहि ।
इदमादिपरित्यागे [2]भासनात्मैव शिष्यते ॥१३२॥
रज्जुसर्पपरिभ्रान्तिः सत्याभिमतवस्तुनि ।
रज्जुरूपे हि सर्पस्य भासिनीति विनिश्चयः ॥१३३॥
तत्र सर्पस्य बाधेऽपि रज्ज्वालम्बनहेतुतः ।
चिद्रूपादात्मनोऽन्यत्तु रज्जुज्ञानं स्थितं भवेत् ॥१३४॥
[3]सापि रज्जुश्चिति यदा स्वप्नदृष्टान्तकल्पिता ।
रज्जुबाधे हि तज्ज्ञानं कथं शिष्येत् किमाश्रयम् ॥१३५॥
तस्माद् दृश्यस्य बाधे तु तज्ज्ञानं केवला हि दृक् ।

एवं प्रसङ्गागतं प्रतिपाद्य निर्विकल्पदशायामपि मनसः सत्त्वाद् द्वैतापत्तिरिति दोषपरिहारमुपसंहरति—तस्मादिति । मनसोऽनन्यत्वादित्यर्थः । तस्य मनसः ॥ १३१ ॥ मनसो रूपं निष्कृष्याह—इदमिति । भासनादन्यत् । दृश्याकारसंवलित आत्मैव मन इति तात्पर्यम् ॥ १३२ ॥ भ्रान्तिस्वरूपेणापि द्वैतं परिहरति—रज्ज्विति । रज्जुरूपे सत्याभिमतवस्तुनि रज्जुसर्पस्य भ्रान्तिः सर्पस्य भासिनी ॥ १३३ ॥ तत्रेति । रज्जुसर्पभ्रान्त्यादौ सर्पादेरारोपितस्य बाधेऽपि भ्रान्तिज्ञानं रज्जुविषयत्वहेतोः प्रमातुरन्यत्तद्रज्जुज्ञानमबाधितं स्थितं भवेदित्यर्थः ॥ १३४ ॥ नैवं प्रकृते इत्याह—सेति । स्वप्नदृष्टान्तेन यदा सा रज्जुश्चिति कल्पितेति निश्चयः, तदा रज्जोरपि बाधे निरालम्बनं तज्ज्ञानं प्रमातृव्यतिरेकेण किमाश्रयं कथंरूपं वा शिष्येदित्यर्थः । घटनाशे घटाकाशवन्न पृथक् शिष्यत इति तात्पर्यम् ॥ १३५ ॥ तस्माद् भ्रान्तिज्ञानापरिशेषात् । तज्ज्ञानं दृश्यज्ञानम् । अतस्तस्य

१. संस्थितः—क० । २. मनसा—क०, भानमा—ख० । ३. सापरज्जु—ख० ।

चिदात्मानतिरिक्तत्वाद् द्वैतं तेन कथं भवेत् ॥१३६॥
अर्थक्रिया हि संदृष्टा स्वप्नवस्तुषु सुस्थिरा ।
स्वाप्नवस्तु स्थिरमिति स्वप्ने सर्वैर्विभावितम् ॥१३७॥
एतावानेव भेदः स्यात् स्वप्नजाग्रद्विभासयोः ।
[1]जाग्रति स्वप्नमिथ्यात्वनिश्चयो भवति ध्रुवम् ॥१३८॥
स्वप्ने न जायते जाग्रन्मिथ्यात्वस्य विनिर्णयः ।
नैतावतैव सत्यत्वं जाग्रद्व्यवहृतेर्भवेत् ॥१३९॥
यथा जाग्रति वस्तूनां स्थिरतार्थक्रियापि च ।
दृश्यते किं तथा स्वप्ने दृश्यते नहि वा वद ॥१४०॥
न स्वप्ने जागरा भावाः स्वाप्ना वा नैव जागरे ।
अर्थक्रियाकरा वापि स्थिरा वा भान्ति तत्समम् ॥१४१॥
विभावय सूक्ष्मदृशा को भेदोऽतीतस्वप्नयोः ।
पश्यैन्द्रजालिककृते स्थैर्यमर्थक्रियामपि ॥१४२॥

चिदात्मानतिरेकात्तेन भ्रमज्ञानेन कथं द्वैतं भवेत् ॥ १३६ ॥ अर्थक्रियाकारित्वाद् दृश्यं सत्यमिति पक्षं प्रतिक्षिपति—अर्थक्रियेति । सुस्थिरा तत्कालेऽबाधिता । स्वाप्नवस्तुनः स्थैर्यं च स्वाप्नानुभवसिद्धमित्याह—स्वाप्नेति ॥ १३७ ॥ ननु 'स्वप्नजागरयोः को भेद इति चेदाह—एतावानेवेति । स्वप्नानुभूतस्य मिथ्यात्वनिश्चयः ॥ १३८ ॥ स्वप्ने जाग्रदनुभूतस्य न मिथ्यात्वनिर्णयः । एतावता भेदेनैव ॥ १३९ ॥ अर्थक्रिया स्थैर्यं च जाग्रत्स्वप्नयोस्तुल्यमित्याह—यथेति । स्वप्ने तथा न दृश्यते किमिति योजना ॥ १४० ॥ तत् तस्मात् । समं जाग्रत् स्वप्नश्चेति द्वयं तुल्यम् ॥ १४१ ॥ अतीतस्वप्नयोः को भेदः ? न कोऽपीत्यर्थः । चित्तारोहाय जाग्रत्यनुभूयमानं दृष्टान्तान्तरमाह—पश्येति । ऐन्द्रजालिककृते गजतुरगादौ ॥ १४२ ॥

१. स्वाप्न—क० ।

किं तावतैव तत् सत्यमैन्द्रजालिकनिर्मितम् ।
सत्यासत्यविभागो वै प्राकृतैर्विदितो नहि ॥१४३॥
अत एव मोहितास्ते प्रोचुः सत्यं हि जागतम् ।
कदाप्यभावासंस्पृष्टं सत्यं राम प्रचक्षते ॥१४४॥
अभावः स्यादभानाद्वै त्वभानं न चितेः क्वचित् ।
अभानमचितामस्ति ह्यनेकत्वावभासतः ॥१४५॥
परस्पराभावभासा अचिद्भावा हि सर्वथा ।
चिदभानं कदा कुत्र स्याद् राम प्रविचारय ॥१४६॥
यदा चितिर्न भायाद्वै तदा भायात् कथं वद ।

तावतैव अर्थक्रियास्थैर्याभ्यामेव । ननु तौल्येऽपि तयोः कथमेकं सत्यमपरमसत्यमिति व्यवहार इति चेत् सत्यासत्यविवेकाभावादित्याह—सत्येति ॥ १४३ ॥ तर्हि किं तयोर्लक्षणमिति चेत् सत्यलक्षणमाह—कदापीति । प्रतियोगित्वेनाभावासंस्पृष्टम् । अभावाप्रतियोगीत्यर्थः ॥ १४४ ॥ कुतश्चिदात्मनोऽभावासंस्पृष्टत्वमिति चेदनुपलम्भस्याभावगमकत्वेन चिदात्मनस्तदसम्भवात्तदभावासिद्धेरित्याह—अभाव इति । अभानात् प्रतियोग्यनुपलब्धेः । अभावः प्रमितत्वेन सिद्धः स्यात् । अचितां दृश्यानामभानं सर्वतोऽस्तीत्याह—अभानमिति । तत्र हेतुः—अनेकत्वेति ।।१४५।। दृश्यानामनेकत्वावभासेऽपि कथमभानमिति चेदाह—परस्परेति । अचिद्भावा दृश्यभूता घटादयोऽनेकत्वात् परस्पराभावभासाः । घटादीनां परस्परं व्यावृत्तानां स्वेतरभिन्नत्वेनैव भानम् । तथा च स्वेतरान्योन्याभाववतामेव दृश्यानामव[1]भासनात् परस्पराभावभासा[2] अचिद्भावा इति भावः । नैवं चिदात्मेत्याह—चिदभानमिति । घटादीनां प्रतिबिम्बतया चिदात्मनिमग्नानामेव भानान्न तस्याभानं कदाचिद्वा सेत्स्यतीति भावः ॥ १४६ ॥ ननु

१. मभास—क० । २. राभासा—ग० ।

न भायाद्वा कथं भायादभाने यदि तद्द्वयोः ॥१४७॥
राम भायादेव चितिस्तस्मात् सत्यैव सा चितिः ।
राम सत्यासत्यभेदं शृणु संक्षेपतो ब्रुवे ॥१४८॥
अन्यानपेक्षभासं स्यात् सत्यमन्यदसत्यकम् ।
अन्यथा रज्जुसर्पाद्यमपि सत्यं भवेन्ननु ॥१४९॥
बाधो ह्यभावविज्ञानं तद्भावेऽपि हि सम्भवेत् ।
अभावे भावविज्ञानमपि सम्भवति स्फुटम् ॥१५०॥

दृश्यसामान्यानुपलम्भदशासु सुषुप्त्यादिषु चिदनुपलम्भाच्चितेरप्यभावः स्यादित्याशङ्क्याह—यदेति। यस्मिन् काले चितिर्न भायात् तदा यदेतिशब्दवाच्यतत्कालः कथं भायात्। किञ्च, न भायादिति प्रोक्तचिदनुपलब्धिर्वा कथं भायात्। तत्कालानुपलब्ध्योरपि चित्प्रकाश्यत्वादिति तात्पर्यम्। ननु तत्कालानुपलब्ध्योरभानेऽपि चिदभावः सेत्स्यतीति चेदाह—अभान इति। तद्द्वयोः तत्कालतदनुपलब्ध्योः ॥ १४७ ॥ भायादेवेति। तत्कालतदनुपलब्ध्योरभानेनासिद्ध्या तदुपलब्धिरेव सिद्ध्यतीति भावः। तस्मात् तदभावासिद्धेः। एवं चिदात्मनः सत्यतां तद्व्यतिरेकेण दृश्यस्यासत्यतां प्रतिपाद्य पुनरेतस्यैव दार्ढ्याय सत्यासत्यलक्षणं प्रकारान्तरेण वक्तुमाह—रामेति। ॥ १४८ ॥ अन्यानपेक्षेति। स्वप्रकाशं सत्यमितरदसत्यमिति फलितार्थः। अन्यथेति। नास्तीत्यभावप्रत्ययेन बाधितमसत्यमबाधितं सत्यमिति चेदित्यर्थः। रज्ज्विति। यत्र रज्जुसर्पादिज्ञानोत्तरं नायं सर्प इत्यादिबाधज्ञानमनुत्पन्नं तत् सर्पाद्यमपि सत्यं भवेदित्यर्थः ॥ १४९ ॥ एतदेवोपपादयति—बाध इति। भवदभ्युपगतो बाधोऽभावविज्ञानम्, तच्च भावे सत्याभिमतेऽपि सम्भवेत्। अभावेऽसत्याभिमते भावविज्ञानमस्तीत्यबाधितसत्यज्ञानं च सम्भवतीति स्फुटं सर्वानुभवसिद्धम्। सत्याभिमतस्य बाधितत्वमसत्याभिमतस्याबाधितत्वं तन्मते

ततो न बाधितं सत्यमसत्यं बाधितं भवेत् ।
इति पक्षो न युक्तः स्यात् सर्वथा व्यभिचारतः ॥१५१॥
चितोऽभाने न किञ्चित् स्यान्न स्यात्तदपि सर्वथा ।
तस्माद्यश्चिन्न भातीति वदेत् तार्किकसत्खरः ॥१५२॥
स ब्रूयान्नाहमस्मीति तत्र केन किमुच्यते ।
यस्यात्मनि स्यात् सन्देहो भानाभावेन सर्वदा ॥१५३॥
सोऽन्येषां नाशयेन्मोहं निपुणैस्तर्कगुम्फनैः ।
तदा गण्डशिलाऽप्येषाऽप्यन्यमोहं विनाशयेत् ॥१५४॥
तस्मादर्थक्रियाभासमात्रेण नहि सत्यता ।
सर्वमेव हि विज्ञानं भ्रान्तिरेव न संशयः ॥१५५॥
अपरेयं महाभ्रान्तिस्तेष्वभ्रान्तत्वनिश्चयः ।

स्यादिति भावः ॥ १५० ॥ ततः उक्तातिप्रसङ्गात् । यन्न बाधितं तत् सत्यं यद्बाधितं तदसत्यमिति त्वत्पक्षो न युक्तः, प्रोक्तरीत्या सर्वथा व्यभिचारात् ॥१५१॥ मत्पक्षे चिदतिरिक्तस्यास्वप्रकाशत्वेन चितः स्वप्रकाशत्वेन न दोष इत्याह—चित'इति । चितोऽभाने न किञ्चित् सिद्ध्यति । तदपि न किञ्चित् स्यादित्यपि । अतश्चित् स्वप्रकाशाऽभ्युपगन्तव्येति भावः । चितः परप्रकाश्यत्वेन नित्यप्रकाशत्वमनभ्युपगच्छन्तं तार्किकमुपहसन्नधिक्षिपति—तस्मादिति । उक्तानुपपत्तेरित्यर्थः ॥१५२॥ केन किं समाधानमुच्यते । अतिमूढत्वेन समाधानोत्तरानर्ह इति तात्पर्यम् ॥ १५३ ॥ यदि मोहं तर्कगुम्फनैरुपलक्षितशास्त्रप्रणयनेन जनानां नाशयेत् तदेति योजयेत् ॥ १५४ ॥ तस्मात् सत्यासत्यविभेदस्य प्रोक्तविधत्वात् । सर्वस्य ज्ञानस्य भ्रान्तित्वे भ्रान्त्यभ्रान्तिविभेदो न स्यादिति शङ्कां निराकर्तुमुपक्रमते—सर्वमेवेति ॥ १५५ ॥ तेषु जागतभ्रान्तिज्ञानेषु । ननु सर्वं ज्ञानं भ्रान्तिरूपं चेदभ्रान्तित्वेन कथं

यथा हि बाधविज्ञानात् पूर्वं भ्रान्तिर्भवेत्तथा ॥१५६॥
सर्वंजागतविज्ञानमभ्रान्तिरिव हि स्थितम् ।
यथा च रजतज्ञानं शुक्तिज्ञानाद् भ्रमात्मकम् ॥१५७॥
एवं चिदात्मविज्ञानात् सर्वं ज्ञानं भ्रमात्मकम् ।
नभोनीलभ्रमः सर्वसमानो भासते तथा ॥१५८॥
जागतो भ्रम एष स्यात् सर्वेषां दोषहेतुतः ।
अभ्रान्तिः शुद्धविज्ञानं यच्चिदात्मतया स्थितम् ॥१५९॥
एवमेतत्त्वया पृष्टं प्रोक्तं युक्त्यनुसङ्गतम् ।
सन्देहमत्र सन्त्यज्य राम प्रोक्तं विनिश्चिनु ॥१६०॥
कथं मुक्ते व्यवहृतिरिति पृष्टं पुरा तु यत् ।
तत्ते प्रवक्ष्यामि राम शृणु सम्यक् समाहितः ॥१६१॥
मुक्ता हि ज्ञानिनो लोके ह्युत्तमाधममध्यमाः ।
प्रारब्धोपनतैर्भोगैः खिद्यमानाः क्षणे क्षणे ॥१६२॥

भातीति चेदाह—यथेति ॥ १५६ ॥ तर्हि कदैतेषां भ्रान्तित्वं गृह्यत इति चेदाह—यथेति ॥ १५७ ॥ चिदात्मविज्ञानाद् अद्वितीयपूर्णचिदात्मापरोक्षात् । सर्वं जागतं ज्ञानम् । भ्रमस्य कथं सर्वसाधारणत्वमिति शङ्कामपनुदति—नभ इति । यथा तथेति योजनीयम् ॥ १५८ ॥ दोषहेतुत इति । दूरत्वदोषवदविद्यादोषस्य साम्यादिति भावः । अभ्रान्तिमुपपादयति—शुद्धविज्ञानमिति । सर्वज्ञानानुस्यूतं चिन्मात्ररूपम् ॥ १५९ ॥ उपसंहरति—एवमिति । युक्त्यनुसङ्गतं युक्तियुक्तम् । मया प्रोक्तम् ॥ १६० ॥ पुरा पञ्चदशाध्यायादौ मुक्ते कथं व्यवहृतिरिति पृष्टम् ॥ १६१ ॥ अधमानाह—प्रारब्धेति ।, प्रारब्धेनोपनतैः

स्वरूपज्ञास्तु ये राम ते मन्दज्ञानिनः स्मृताः ।
ये तु प्रारब्धसंप्राप्तान् भुञ्जाना अपि नो विदुः ॥१६३॥
मधुक्षीबा रसमिव मध्यास्ते ज्ञानिनः स्मृताः ।
ये तु प्रारब्धकोटीनां फलैरपि विचित्रितैः ॥१६४॥
न स्वस्थितेः प्रच्यवन्ते नोद्विजन्त्यापदां गणैः ।
न विस्मयन्ति चाश्चर्यैर्न हृष्यन्ति महासुखैः ॥१६५॥
अन्तःशान्ता बहिर्लोकसमास्ते ज्ञानिषूत्तमाः ।
एवं बुद्धिविभेदेन ज्ञानपाकविभेदतः ॥१६६॥

प्राप्तैर्भोगैर्विषयजनितसुखदुःखैः ॥ १६२ ॥ पूर्णात्मस्वरूपज्ञा अपि वैषयिकसुखे दोषग्रहात् सुखे दुःखे च तत्तत्काले खिद्यमाना मन्दज्ञानिनोऽधमज्ञानिन इत्यर्थः । सम्प्राप्तान् विषयान् ॥ १६३ ॥ कथं नो विदुरिति चेदाह—मधुक्षीबेति । सततसमाहित[1]स्वान्ताः[2] । सुषुप्तौ मन्दमारुतमशकदंशनजातसुखदुःखानुभववद् आपातसुखदुःखानुभवो [3]मध्यज्ञानिनामित्यर्थः ॥ १६४ ॥ स्वस्थितेः स्वरूपसमाहितेः ॥ १६५ ॥ अन्तःशान्ताः कामक्रोधादिजनितक्षोभरहिताः । बहिरज्ञानिलोकसमव्यवहारवत्त्वेन तत्समाः । अधमज्ञानिनो न सन्ततं स्वरूपसमाधिः, अपि तु प्रारब्धेन वासनाशेषेण च मध्ये समाधिविच्छेदात् क्लेशयोगः । नायं जीवन्मुक्तः, अपि तु केवलज्ञानी । इतरौ द्वौ जीवन्मुक्तौ । तत्र द्वितीयस्तु परिपक्वनिरोधसमाधिः । तृतीयस्तु परिपक्वबाह्यसमाधिः । एवं बुद्ध्यादिभेदेन तृतीयेष्वपि व्यवहार-

---

१. हितः—क० ।
२. 'स्वान्ताः' नास्ति—क० ।
३. मध्यमाना—ख० ।

प्रारब्धशेषमाहात्म्याद् व्यवहारा विचित्रिताः ।
मधुमत्तादिवत्तेषां व्यवहारोऽपि सम्भवेत् ॥१६७॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे
अष्टादशोऽध्यायः ॥



वैचित्र्यमित्याह—एवमिति ॥ १६६ ॥ तेषां ज्ञानिनाम् ॥ १६७ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायाम्
अष्टादशोऽध्यायः ॥



# अथैकोनविंशोऽध्यायः

इति दत्तात्रेयमुखाच्छ्रुत्वा भार्गवनन्दनः ।
भूयः पप्रच्छ मुक्तानां व्यवहारक्रमं क्रमात् ॥ १ ॥
भगवन् भूय एतन्मे विस्तरेण निरूपय ।
यथा बुद्धिविभेदेन ज्ञानपाकविचित्रता ॥ २ ॥
ज्ञानं त्वेकविधं स्वात्ममात्रभानात्मकं ननु ।
उपेयं च तदेव स्याद्यन्मोक्षस्तत्प्रथात्मकः ॥ ३ ॥
तत् कथं बुद्धिभेदेन पाकभेदसमाश्रयम् ।
साधनान्यपि भिद्यन्तेऽथवा नेति तदीरय ॥ ४ ॥
इति पृष्टः पुनस्तेन दत्तात्रेयो दयानिधिः ।
विस्तरेण तमेवार्थं प्रवक्तुमुपचक्रमे ॥ ५ ॥
शृणु राम प्रवक्ष्यामि रहस्यं ह्येतदुत्तमम् ।

**अत्र खारीपपद्यैस्तु ज्ञानस्य मूलसाधनम् ।**
**ज्ञानिस्थितिश्च पुरुषापराधश्च निरूप्यते ॥**

पूर्वाध्यायान्ते संग्रहेणोक्तां जीवन्मुक्तस्थितिं तद्भेदनिमित्तं च निरूपयितुं रामप्रश्नमवतारयति—इतीति ॥ १ ॥ एतदित्युक्तमेव विशदयति—यथेति । ज्ञानपाकः ज्ञानसिद्धेरप्रकम्प्यता ॥ २ ॥ ज्ञानपाकवैचित्र्यमाक्षिपति—ज्ञानमिति । यत् यस्मात् । तत्प्रथात्मकः ज्ञानात्मप्रथात्मकः ॥ ३ ॥ तत् तस्मात्, मोक्षोपायमोक्षयोरेकरूपत्वात् । बुद्धेस्तीव्रमन्दत्वभेदेऽप्युपायोपेययोरेकविधत्वेन ज्ञाने कथं[1] पाकविचित्रतेति भावः । समाश्रयं ज्ञानम्, ज्ञानस्य साधनानि ॥ ४ ॥ तेन रामेण । तमेवार्थं ज्ञानपरिपाकभेदम् ॥ ५ ॥ ज्ञानसाधने विभेदो

१. 'कथं' नास्ति—क० ।

साधने न विभेदोऽस्ति ज्ञानं न चित्रसाधनम् ॥ ६ ॥
तारतम्यात् साधनानां फलप्राप्तिर्विभेदिता ।
पूर्णे तु साधने ज्ञानमनायासेन सिद्ध्यति ॥ ७ ॥
अपूर्तितारतम्येन त्वया सा[त्वायासा]पेक्षणाद्भवेत् ।
वस्तुतः साधनं किञ्चिद् ज्ञाने नैवोपयुज्यते ॥ ८ ॥
ज्ञानं क्वचिन्नैव साध्यं सिद्धत्वात्तु स्वभावतः ।
चैतन्यमेव विज्ञानं तत् सदा स्वप्रकाशकम् ॥ ९ ॥
तत्र का साधनापेक्षा [1]नित्यभानस्वरूपके ।
चैतन्यं[2] निहितं चित्तकरण्डेऽतिसुनिर्मले ॥१०॥
अनन्तवासनापङ्कमग्नं नैवोपलभ्यते ।
निरोधसलिलैः सम्यग् वासनापङ्कमार्जने ॥११॥

नास्ति। एतदेव स्पष्टमाह—ज्ञानमिति ॥ ६ ॥ साधनानां तारतम्याद् अल्पानल्पत्वहेतोः। फलप्राप्तिः ज्ञानसिद्धिः। पूर्णे त्विति। अनेकप्राग्जन्मार्जितसाधनपूर्तिसम्पत्तौ ॥ ७ ॥ साधनपूर्तौ ज्ञानमाकाशफलपात[3]वदनायासेन सिध्यति, अपूर्तिपक्षेऽप्यपूर्तितारतम्येनायासतारतम्यापेक्षेत्याह—अपूर्तीति। अथ ज्ञानस्य स्वरूपत्वेन सिद्धत्वान्न तत्र साधनोपयोग इत्याह—वस्तुत इति ॥ ८ ॥ स्वभावतः स्वरूपत्वात् साधनानां तदुत्पत्तावनुपयोगेऽपि ज्ञप्तावुपयोगः स्यादिति चेदाह—चैतन्यमिति ॥ ९ ॥ तदावरणनिवारण एव साधनोपयोगं ज्ञानस्य मणिरूपकत्वेन निरूपयति—चैतन्यमिति। अतिसुनिर्मल इति। स्फटिककरण्डान्तर्गतपद्मरागवच्चित्तान्तर्गतमपि चैतन्यमनावृतमेवेति[4] तात्पर्य्यम् ॥ १० ॥ अनन्तेति। पङ्कतुल्यवासनौघपूरितस्फटिककरण्डतुल्यचित्तान्तर्गतत्वात् पद्मरागतुल्यमपि चैतन्यं न स्वरूपेणोपलभ्यत

---

१. नित्या—क० । २. 'चैतन्यं''''निर्मले' नास्ति—ख० ।
३. 'फलपात' नास्ति—क० । ४. वृत्तमेवेति—ख० ग० ।

विचारशितयन्त्रेण यत्नाच्चित्तकरण्डके ।
चिरात् संघटिते राम सुयुक्त्योद्घाटिते ततः ॥१२॥
भासमानं तु मणिवच्चैतन्यमुपलभ्यते ।
राम तस्माद् वासनानां निरासे साधनं स्मृतम्[1] ॥१३॥
वासना[2]ल्पाधिक्यभावाद् बुद्धिस्तु विविधा भवेत् ।
यस्य यावद् वासनौघो बुद्धिमाच्छाद्य संस्थितः ॥१४॥
साधनापेक्षणं तस्य तावदेव भृगूद्वह ।
वासना विविधाः प्रोक्तास्तत्र मुख्या वदामि ते ॥१५॥

इत्यर्थः । तदुपलक्षणयुक्तिमाह—निरोधेति । मार्जने कृते सति ॥ ११ ॥ विचारेति । ततः पङ्कमार्जने कृत इत्यन्वयः । श्रवणादिरूपविचारानन्तरमेव निदिध्यासनरूपनिरोधसम्भवात् । चिरादनादिकालात् सङ्घटिते चित्तकरण्डे देहादितादात्म्यमापन्ने विचारतीक्ष्णयन्त्रेण युक्त्या मननसहितश्रवणेन उद्घाटिते देहादिभ्यो विवेचिते । दृश्यदेहादितादात्म्यहाने इति तात्पर्यम् ॥ १२ ॥ देहादितादात्म्यापन्नमेव चैतन्यं चित्तमित्युच्यते । तस्य देहादितादात्म्यमेव सङ्घट्टनम् । तस्य देहादिभ्यो विवेचनमुद्घाटनम्, निरोधेन वासनापगमे[3] भूयो देहादितादात्म्यानासादनम् । एवं विचारेण देहादिभ्यो विवेचितं चैतन्यमात्मतत्त्वं निरोधेन मणिवत् स्वतो भासमानमेवोपलभ्यत इत्याह—भासमानमिति । तस्मात् स्वरूपे साधनानुपयोगात् । साधनमुपयुक्तं स्मृतम् ॥ १३ ॥ यस्य जन्मान्तरसमर्जितपुण्यादिसाधनादिना चित्ते यावद्वासना न्यूनाऽधिका वा तस्य तावत् साधनापेक्षाऽल्पानल्पते[4]त्याह—यस्येति ॥ १४ ॥ तत्र [5]यत्नेनापोहाय प्रबलाः काश्चन वासनाः परिगणयति—वासनेति । वासनाः संस्काराः ॥ १५ ॥ ता एव

---

१. स्थितम्—ख० । २. नात्स्या—क० ख० । ३. 'वासनापगमे' नास्ति—क० ।
४. क्षात्मानात्म्यते—क० ख० । ५. 'यत्नेनापोहाय' नास्ति—ख० ।

अपराधकर्मकामभेदेन त्रिविधा हि सा ।
अश्रद्धैवापराधः स्याद् मुख्यः स्वात्मविनाशनः ॥१६॥
विपरीतग्रहश्चापि ह्यपराधस्तु पौरुषः ।
प्रायः कलासु कुशला अपराधवशान्ननु ॥१७॥
सत्सङ्गशास्त्रयोगैश्च परं तत्त्वं हि नो विदुः ।
निर्विशेषं परं तत्त्वं नास्ति नैव च सम्भवेत् ॥१८॥
अस्ति तन्नैव विज्ञातं शक्यते केनचित् क्वचित् ।
ज्ञात्वापि परमं तत्त्वं [1]नैतत्तत्त्वं परं भवेत् ॥१९॥
एतज्ज्ञानात् कथं मोक्ष इत्यादि बहुधा स्थितः ।
विपरीतग्रहो वापि चैतत्संशय एव वा ॥२०॥
अपराधः पौरुषस्तु वासनाद्या प्रकीर्तिता ।
शास्त्रविद्यासु कुशलाः शतशोऽथ सहस्रशः ॥२१॥

क्रमेण विवेचयन्नाद्यमपराधमाह—अश्रद्धेति । श्रद्धा गुर्वागमोक्तं यत् तत्तथैवेति दृढनिश्चयः, तदभावोऽश्रद्धा ॥ १६ ॥ [2]अज्ञानबीजपल्लवभूतविपरीतग्रहोऽपि पुरुषापराध इत्याह—विपरीतेति । पौरुषः पुरुषस्वभावाभ्युपगतः । महतां शास्त्रज्ञानामप्येतद्वशादेव ज्ञानानुदय इत्याह—प्राय इति ॥ १७ ॥ सत्सङ्गादिसाधनसत्त्वेऽपि[3] । विविधविपरीतग्रहानाह—निर्विशेषमिति ॥ १८ ॥ न ज्ञातुं शक्यमिति द्वितीयः । निदिध्यासनान्तसाधनेन ज्ञात्वापि नैतत्परं तत्त्वमिति तृतीयः ॥१९॥ एतस्य निदिध्यासनेनापरोक्षीकृतस्य ज्ञानात् । [4]आदिना नास्ति कैवल्यमोक्ष इत्यादिसंग्रहः । प्रोक्तविपरीतग्रहवत्तत्संशयोऽपि पुरुषापराध इत्याह—एतत्संशय इति ॥ २० ॥ एषोऽपराध एवाद्या वासनेत्याह—

---

१. नैव तत्त्वं—क० । २. अहन्ता—ख० ।
३. सत्यत्वेऽपि—क० । ४. अनादिर्नास्ति—क० ख० ।

अनया विहृता राम संसृतिं समुपागताः ।
पुरा दुष्कृतसंस्कारवशाद् बुद्धौ तु यत् स्थितम् ॥२२॥
मालिन्यमुपदेशस्य ग्रहणप्रतिबन्धकम् ।
येनाचार्यैः सम्यगुक्तमपि नो गृह्यते खलु ॥२३॥
सा कर्मवासना प्रोक्ता दुर्जेयापि निरोधतः ।
कामः कर्तव्यशेषः स्यादनन्तो बहुशाखकः ॥२४॥
रामाम्भोधौ तरङ्गाणां संख्यां कुर्याद्धि कश्चन ।
पार्थिवानामणूनां वा तथा तारागणस्य वा ॥२५॥
एकस्यापि हि कामानां संख्यातुं नैव शक्यते ।
इयं राम तृतीया ते संप्रोक्ता कामवासना ॥२६॥
आकाशादपि विस्तीर्णा ह्यचला भूधरादपि ।
आशापिशाची प्रोक्तेयं [1]राम या कामवासना ॥२७॥
अनयैव हि सर्वोऽयं लोक उन्मत्तवत् स्थितः ।
येन दन्दह्यमानोऽयं लोक आक्रन्दते सदा[2] ॥२८॥

अपराध इति ॥ २१ ॥ अनया अपराधरूपवासनया । द्वितीयां वासनामाह—पुरेति ॥ २२ ॥ मालिन्यं मौढ्यम् । येन बुद्धौ स्थितेन ॥ २३ ॥ सेयं कर्मवासना । दुर्जेयेति । प्रायः सर्ववासना निरोधाज्जेयाः, इयं तु दुर्ज्जेयेत्यर्थः । तृतीयामाह—काम इति । इदं कर्तव्यमिदं कर्तव्यमिति कर्तव्यशेषात्मकः संस्कारगणः । अनन्तो विस्तीर्णः । बहुशाखकः असंख्येयभेदः ॥ २४ ॥ असंख्येयत्वमेव निरूपयति—रामेति ॥ २५ ॥ एकस्यापि पुरुषस्य ॥ २६ ॥ अनन्तत्वमेवाह—आकाशादिति । सर्वजगद्व्यापकत्वाद् दुष्पूरत्वाद्वा विस्तीर्णा । निरसितुमशक्येत्याह—अचलेति । पिशाची इति प्रोक्ता । इयं कामवासना ॥ २७ ॥ पिशाचीत्वमुपपादयति—अनयेति । ग्रस्त इति शेषः । येन आशापिशाचीग्रसनेन

१. रामेयं-ग० । २. तदा क० ख० ।

केऽपि लोके धन्यतमा महामन्त्रसमाश्रयात् ।
विनिर्मुक्तास्तया भान्ति नराः सर्वाङ्गशीतलाः ॥२९॥
एताभिस्तिसृभी राम वासनाभिर्यतो मनः ।
समाक्रान्तमतो नूनं तत्तत्त्वं नावभासते ॥३०॥
अतः सर्वसाधनस्य वासनानाशनं फलम् ।
तत्राद्या ह्यपराधत्वनिश्चयाद् विनिवर्तते ॥३१॥
द्वितीया जन्मतैकेन निवर्तेतापि जन्मभिः ।
ऐश्वरेण प्रसादेन नान्यथा कोटियुक्तिभिः ॥३२॥
तृतीया विनिवर्तेत वैराग्यादिसुसाधनैः ।
दोषदृष्टचैव वैराग्यं भवेन्नैवान्यथा क्वचित् ॥३३॥
प्रोक्तानां वासनानां वै स्वल्पानल्पविभेदतः ।
तस्याश्चाल्पानल्पभावापेक्षा भवति भार्गव ॥३४॥

॥ २८ ॥ केऽपीति । लोकोत्तमा इत्यर्थः । महामन्त्रः परवैराग्यम् ॥ २९ ॥ एताभिः अपराधकर्मकामरूपाभिः । तत्तत्त्वं नित्यापरोक्षमप्यात्मतत्त्वम् ॥ ३० ॥ अतः नित्यापरोक्षप्रत्यगात्मतत्त्वे साधनानुपयोगात् । त्रिविधवासनानाशे प्रत्येकं साधनमाह—तत्रेति । तास्वित्यर्थः । आद्या अश्रद्धाद्यपराधरूपा । अपराधत्वनिश्चयाद् मम ज्ञानानुत्पत्तिरेतदपराधमूलिकैवेति निश्चयात् ॥ ३१ ॥ द्वितीया मौढ्यरूपा कर्मवासना । ऐश्वरप्रसादेनाल्पाया एकेन जन्मना, अनल्पाया अनेकजन्मभिर्निवृत्तिः । नान्यथा ईश्वरप्रसादं विना ॥३२॥ तृतीया कामवासना । वैराग्यविषयवैमुख्यादितीव्रसाधनैः । वैराग्ये कारणमाह—दोषदृष्टयैवेति । विषयेषु सदा दोषचिन्तनादित्यर्थः । एतेनापराधत्वनिश्चये ऐश्वरप्रसादे च गुरूपदेशविचारयोश्च ईश्वराराधनं क्रमात् कारणं ज्ञेयम् ॥ ३३ ॥ प्रोक्तानां कामवासनानाम् । तस्याश्च दोषदृष्टेश्च । अल्पानल्पभावापेक्षा । वासनाल्पत्वे दोषदृष्टयल्प-

तत्राद्यं सर्वमूलं स्यान्मुमुक्षुत्वं न चेतरत् ।
मुमुक्षामन्तरा यत्तु श्रवणं मननादिकम् ॥३५॥
न मुख्यफलसंयुक्तं केवलं शिल्पवद् भवेत् ।
न शिल्पज्ञानमात्रेण प्राप्यते परमं पदम् ॥३६॥
मुमुक्षामन्तरा यैस्तु श्रुतं सम्यग् विचारितम् ।
शवालङ्कारवत् सर्वं तेषां व्यर्थं भवेत् खलु ॥३७॥
व्यर्था सापि भवेन्मन्दा मुमुक्षा राम सर्वथा ।
यथा फलश्रुतेरिच्छा सामान्या न फलावहा ॥३८॥
फलश्रुत्युत्तरोद्भूता नेच्छा कर्मफलावहा ।
फलश्रुत्या कस्य नाम न स्यात् सा जीवधर्मिणः ॥३९॥
तस्मादापातरूपाया मुमुक्षाया न वै फलम् ।

सत्त्वाद्यपेक्षेति ॥ ३४ ॥ तत्र साधनेषु मध्ये सर्वमूलं सर्वसाधनसम्पत्तिहेतु । अत एवाद्यम् । ननु मुमुक्षामन्तरापि शास्त्रकुशलानां श्रवणादिसाधनमस्तीति चेत्, तन्न फलपर्यन्तमित्याह—मुमुक्षेति । आदिना निदिध्यासनम् ॥ ३५ ॥ फलीभूतापरोक्षज्ञानाभावेन शास्त्रप्रक्रियाज्ञानमात्रसम्पत्त्या[1] शिल्पवत् तावता न संसारनिवृत्तिरूपमहाफलमित्याह—न शिल्पेति ॥ ३६ ॥ अमुमुक्षोः साधनसम्पत्तिर्व्यर्थेत्याह—मुमुक्षामिति ॥ ३७ ॥ मुमुक्षाऽप्यतीव्रा व्यर्थेत्याह—व्यर्थेति । सा मुमुक्षा । फलश्रुत्या सर्वेषामनुत्कटा[2] सामान्या इच्छा भवत्येव । सा यथा न तत्तत्फलावहा, एवं प्रकृतेऽपीत्याह—यथेति ॥ ३८ ॥ एतदेव स्पष्टमाह—फलेति । इच्छाऽनुत्कटा । सा इच्छा । तस्याः फलावहत्वे[3] सर्वेषां सर्वं फलं प्रायो भवेदिति भावः ॥ ३९ ॥ तस्माद्

१. सम्पत्त्यादिशिल्प—क० ।
२. कण्ठा—क० ।
३. घहवत्त्वे—क० ।

यथा मुमुक्षा तीव्रा स्यात्तथा [1]तस्याऽचिरं फलम् ।।४०।।
मुमुक्षा या मुख्यतमा सा साधनगणेष्वलम् ।
प्रवृत्तिमुत्पादयेद् वै सा हि तत्परतोच्यते ।।४१।।
यथा सुदग्धसर्वाङ्गो न शीतान्यदपेक्षते ।
तथा यदा विमुक्त्यन्यन्नापेक्षेत हि सर्वथा ।।४२।।
सा मुमुक्षा भवेत्तीव्रा समर्था फलसाधने ।
एषा विमुक्तेरन्यत्र दोषदृष्टचैव जायते ।।४३।।
तीव्रवैराग्यमुखतः क्रमेण तीव्रतामियात् ।
दोषदृष्टचा हि वैराग्यं विषयप्रीतिनाशनम् ।।४४।।
वैराग्येण मुमुक्षुत्वं तीव्रं तत्परतोदयम् ।
तत्परत्वं साधनेषु प्रवृत्तिरतितीव्रतः[१] ।।४५।।
अतितीव्रप्रकृत्यैव द्रुतं फलमवाप्नुयात् ।
इति दत्तात्रेयवचो निशम्य भार्गवः पुनः ।।४६।।

मन्दमुमुक्षायाः फलाभावात् । अमन्दापि सा तीव्रा तीव्रतरेत्यादिरूपेण यथोत्कटा तथा तस्या अचिरं फलं भवेदित्याह— यथेति ॥ ४० ॥ अलम् अत्यन्तम् । सा साधनेष्वत्यन्तप्रवृत्तिः ॥ ४१ ॥ तीव्रमुमुक्षायां दृष्टान्तः—यथेति । शीतजलादेरन्यन्नापेक्षते ॥ ४२ ॥ तीव्रमुमुक्षायां कारणमाह—एषेति । तीव्रमुमुक्षेत्यर्थः ॥ ४३ ॥ दोषदृष्ट्या मुमुक्षोदयक्रममाह—तीव्रेति । वैराग्यमुखतः वैराग्यद्वारतः । सामान्या मुमुक्षैव तीव्रतां क्रमेण प्राप्नुयात् । तत्क्रममाह— दोषदृष्ट्येति । वैराग्यं विषयवैमुख्यम् ॥ ४४ ॥ तत्परताया उदयो जननं यस्मात् ॥ ४५ ॥ तीव्रमुमुक्षुत्वं तीव्रप्रवृत्तिद्वारेणैव फलसाधकमित्याह—

---

1. तस्या अचिरमिति च्छेदः । सन्धिरार्षः ।

१. तीव्रता—क० ।

पप्रच्छ सन्दिग्धमनाः संशयं सुमहत्तरम् ।
भगवन् भवता प्रोक्तं सत्सङ्गो मूलकारणम् ॥४७॥
ईश्वरानुग्रहश्चापि दोषदृष्टिरपीति च ।
किमादिकारणं मुख्यं तत्प्राप्तिर्वा कथं भवेत् ॥४८॥
नहि निष्कारणं किञ्चिद् भवेदिति हि निश्चयः ।
तत् कथं स्याद्विना हेतोरेतन्मे वद विस्तरात् ॥४९॥
इति पृष्टः प्राह रामं दत्तात्रेयो दयानिधिः ।
भार्गव शृणु ते वक्ष्ये श्रेयसः परमोद्भवम् ॥५०॥
परा सा या चितिर्देवी स्वस्वातन्त्र्यस्य वैभवात् ।
स्वात्मन्येव जगच्चित्रं दर्पणप्रतिबिम्बवत् ॥५१॥
सैव हैरण्यगर्भाख्यां तनुमास्थाय वै परा ।
अनाद्यज्ञानसंच्छन्नजीवानां हितकाम्यया ॥५२॥
उन्मेषयदागमाब्धिं सर्वकामप्रपूरणम् ।

अतितीव्रेति ॥ ४६ ॥ मूलकारणम् आदिकारणम् ॥ ४७ ॥ सत्सङ्ग ईश्वरानुग्रहो दोषदृष्टिश्च मूलकारणमित्युक्तम् । तेषु मध्ये मुख्यमादिकारणं किम् ? तस्यापि किं कारणमिति पृच्छति—किमादीति ॥ ४८ ॥ ननु न तस्य किञ्चित्कारणमिति चेदाकस्मिकत्वप्रसक्तिरित्यभिप्रायेणाह—नहीति ॥ ४९ ॥ परमोद्भवमिति । परमं प्रकृष्टम् आद्यम् उद्भवमुत्पत्तिम् । श्रेयस आदिकारणमिति यावत् ॥ ५० ॥ सत्सङ्ग एव मूलकारणम् । स च प्राक्तनविचित्रसुकृतपरिपाकवशादित्येतत्कर्मप्रवृत्तिनिरूपणपूर्वकं वक्तुमाह—परेति । सा प्रकरणप्रतिपाद्यत्वेन प्रसिद्धा । स्वीयस्वातन्त्र्यस्य मायाशक्तेर्वैभवान्माहात्म्याद् जगच्चित्रम् उन्मेषयदिति योजयेत् ॥ ५१ ॥ सैव परा चितिरेव ॥ ५२ ॥ तेषां कामा एव हिता इति सर्वकामप्रपूरणम् आगमाब्धिमुन्मेषयत् । कुतो जीवानां

तत्र जीवाः स्वभावेन विचित्रकामवासनाः ॥५३॥
कथं तेषां शुभं भूयादेवं चिन्तापरायणः ।
असृजत् काम्यकर्माणि फलचित्राणि सर्वशः ॥५४॥
सदसद्वापि हि जनः करोत्येव स्वभावतः ।
तथा च केनापि कर्मपरिपाकवशेन तु ॥५५॥
भ्रमन् योनिविभेदेषु मानुष्यमुपसङ्गतः ।
कामनावशतः काम्ये कर्मण्यभिमुखो भवेत् ॥५६॥
कामनाया विशेषेण यदेश्वरपरो भवेत् ।
तदैश्वराणि शास्त्राणि प्रसङ्गादवलोकयेत् ॥५७॥
काम्यकर्मफलश्रुत्या प्रवृत्तः काम्यकर्मणि ।
विहतस्तत्फलाप्राप्त्या[1] वैगुण्यात् सूक्ष्मकर्मणः ॥५८॥

कामहितत्वमिति चेदाह—तत्रेति । सृष्टौ स्वभावेन । अनादिकालिक[2]-कामवासनया कामानुभवः, तदनुभवाद् वासनोत्पत्तिरिति भावः ॥ ५३ ॥ कामवासनयैव जननमरणप्रवाहपतितानां तेषां चिन्तापरायणो हिरण्यगर्भ आगमाब्धौ काम्यकर्माण्येवासृजत् प्रतिपादितवान् । सर्वशः सर्वत्र ॥ ५४ ॥ तत्रादौ मानुष्यप्राप्तिप्रकारमाह—सदसद्वेति । स्वभावतः कर्मवासनया ॥ ५५ ॥ उपसङ्गतः प्राप्तः । कर्मण्यभिमुखः प्रवृत्तः ॥ ५६ ॥ कामनाया विशेषेण काम्यकर्मफलं निर्विघ्नेन मे भूयादितीच्छाविशेषेण ॥ ५७ ॥ एतदेव विविच्याह—काम्येति । कामवासनया काम्यप्राप्त्युपायमन्विष्यन् आगमस्थकाम्यफलश्रुतेः तत्र प्रवृत्तः । तत्र सूक्ष्मकर्मणः कर्मैकदेशलेशस्यापि वैगुण्याद् लोपादवश्यसम्भाव्य[व्यात्] तत्फलाप्राप्त्या विहतो दुःखितः । कथं कृत्वा कर्मफलं प्राप्नुयामिति कर्तव्यजिज्ञासया प्रष्टुं कञ्चित् सत्पुरुषं पूर्णा-

---

१. प्राप्तिवैगु—ग० । २. 'कामवासनाया' इत्यधिकं—क० ख० ।

कर्तव्यजिज्ञासयैव कञ्चित् सत्पुरुषं व्रजेत् ।
तत्प्रसङ्गवशात् क्वापि माहात्म्यं शृणुयात् क्वचित् ॥५९॥
महेश्वरस्य च ततः प्राक्पुण्यपरिपाकतः ।
तस्य प्रसादने भूयात् प्रवृत्तिरपि भार्गव ॥६०॥
तस्मात् प्राक्पुण्यपाकेन सत्सङ्गमभिगम्य तु ।
प्राप्नोति श्रेयःसोपानपङ्क्तिमत्यन्तदुर्लभाम् ॥६१॥
प्रायः सत्सङ्गमूलैव श्रेयःप्राप्तिरुदीरिता ।
क्वचिदुत्कृष्टपुण्येन चोत्कृष्टतपसापि वा ॥६२॥
श्रेयः प्राप्नोति सहसा ह्याकाशफलपातवत् ।

शयं प्राप्तकामं व्रजेत् शरणीकुर्याद् इत्यन्वयः ॥ ५८ ॥ तत्प्रसङ्गवशादिति । सत्पुरुषाः कामिषु विमुखा एव तिष्ठन्ति । तथापि सत्पुरुषाणां क्वापि देशे क्वचित् काले यः प्रसङ्गः परस्परं प्रश्नप्रतिवचनात्मकः कथाविशेषस्तत्र महेश्वरस्य माहात्म्यं शृणुयात् । एतदुक्तं वासिष्ठे— "सदा सन्तोऽभिगन्तव्या यद्यप्युपदिशन्ति नो । या हि स्वैरकथास्तेषामुपदेशा भवन्ति ताः ॥" [ यो० वा० सा० १।७ ] इति ॥ ५९ ॥ "यस्य[1] स्मृत्या च नामोक्त्या" इत्यादिमाहात्म्यं श्रुत्वा तत ऐश्वराणि शास्त्राण्यवलोकयेत् । ततः पुण्यपरिपाकवशात् तत्प्रसादने[१] प्रवृत्तिर्भूयात् ॥ ६० ॥ एवं प्राक्पुण्यपरिपाकादेव सत्सङ्गपूर्वकं क्रमेण श्रेयःप्राप्तिरित्युपसंहरति—तस्मादिति ॥ ६१ ॥ उत्कृष्टपुण्येन उत्कृष्टतपसा परमेश्वरप्रीतये कृतेन ॥ ६२ ॥ प्राग्जन्मकृतेन पुण्यादिना । सहसा अकस्मात् सत्सङ्गादिकं विनैव । तस्मात् कारणवैचित्र्यात् स्वरूपावरक-

---

1. "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतामेति सद्यो वन्दे तमच्युतम् ॥"
इति सम्पूर्णः श्लोको भक्तिग्रन्थेषु बहुशो दृश्यते ।

१. तत्प्रतिपादने–क० ख० ।

तस्मात् कारणवैचित्र्याच्छ्रेयःप्राप्तिविचित्रता ॥६३॥
तथा च बुद्धिभेदेन वासनातारतम्यतः ।
साधनानां तारतम्याद् विचित्रा ज्ञानिनां स्थितिः ॥६४॥
स्वभावाद्यस्य वै बुद्धेर्वासना विरला भवेत् ।
तस्याल्पसाधनेनैव ज्ञानसिद्धिर्भवेदलम् ॥६५॥
यस्य स्वभावात् संशुद्धं वासना नहि लेशतः ।
तस्य स्वल्पनिमित्तेन भवेज्ज्ञानं महत्तरम् ॥६६॥
यस्य स्वभावादत्यन्तवासनानिबिडं मनः ।
तस्य ज्ञानं जातमपि समाच्छादितकल्पकम् ॥६७॥
तेनैव साधितं भूयश्चिरादभ्येति पूर्णताम् ।
अत एव ज्ञानिनां तु दृश्यते विविधा स्थितिः ॥६८॥

वासनानाशकसाधनानामल्पानल्पत्वेन वैचित्र्यात् श्रेयःप्राप्ति-विचित्रतां, ज्ञानावरकवासनानिवृत्तितारतम्येन ज्ञानवैचित्र्यमिति भावः ॥ ६३ ॥ तथा चेति । ज्ञानतारतम्ये सिद्धे चेत्यर्थः । बुद्धिभेदेन वासनातारतम्यतः । सर्वबुद्धौ वासनासाम्याभावात् । अत एव साधनसाम्यं नास्तीत्याह—साधनानामिति ॥६४॥ एतदेव विविच्याह—स्वभावादिति । प्राक्कृतपुण्यकर्मादिसंस्कारात् । विरला अल्पा । अल-मत्यन्तमप्रतिबद्धा ज्ञानसिद्धिः ॥ ६५ ॥ स्वभावात् पुण्यकर्मादिप्रकर्ष-संस्कारात् संशुद्धं मन इति शेषः । स्वल्पनिमित्तेन जनकस्येव सकृच्छ्रुतमात्रेण महत्तरं निष्प्रकम्पं चिराभ्यासपरिपक्वज्ञानसदृशम् ॥ ६६ ॥ स्वभावात् अतिपापकर्मसंस्कारात् । आच्छादितकल्पकं अज्ञाननाशनासमर्थम् ॥ ६७ ॥ तेनैव आच्छादितज्ञानवतैव । निदि-ध्यासनप्रकर्षेण साधितम् । चिरात्[1] एकेन अनेकेन वा जन्मना । पूर्णतामज्ञाननाशनसमर्थताम् । अत एव कर्मसंस्कारभेदेन बुद्धिस्थिति-

१. 'चिरात्' नास्ति—क० ।

चित्तपाकविभेदेन स्थितिभेदो भृगूद्वह ।
तस्माद् बुद्धौ वासनाभिस्त्वावृत्तेस्तारतम्यतः ॥६९॥
ज्ञानं भिन्नं लक्ष्यते हि स्थितिभेदस्तथा भवेत् ।
राम पश्य स्थितेर्भेदं ज्ञानिनां तु परस्परम् ॥७०॥
ब्रह्मविष्णुमहेशानां स्वभावज्ञानिनस्तु ते ।
तेषां पश्य स्थितेर्भेदं स्वभावप्रभवैर्गुणैः ॥७१॥
नैषां ज्ञानस्य मालिन्यं वक्तुं शक्यं कथञ्चन ।
स्वभावगुणमाहात्म्यं भिन्नमेव तथापि हि ॥७२॥
यथा ज्ञानिशरीरं तु गौरं न श्यामतां व्रजेत् ।
एवं चित्तस्वभावोऽपि नान्यभावं प्रपद्यते ॥७३॥
अस्मान् राम तथा पश्य ज्ञानिनोऽत्रिसुतान् स्थितान् ।
दुर्वाससं चन्द्रमसं मां च भिन्नस्थितिं गतम् ॥७४॥
क्रोधिनं कामिनं त्यक्तसर्वलिङ्गपरिग्रहम् ।
वसिष्ठं पश्य कर्मिष्ठं सनकादींश्च न्यासिनः ॥७५॥
नारदं भक्तिसंमग्नं कवयन्तं च भार्गवम् ।

भेदादेव ॥ ६८ ॥ एतदेव स्पष्टमाह—चित्तेति । ज्ञानिस्थितिभेदः । एतदेव भूयो विवेचयति—तस्मादिति । तस्मात् आवृत्तितारतम्यात् ॥ ६९ ॥ ज्ञानिस्थितिभेदः । एतदेव उदाहरति—रामेति ॥ ७० ॥ स्वभावज्ञानिनः । तेषां चित्ते कर्मादिवासनाभावाद् अनावृतज्ञानाः । स्थितिभेदं सृष्ट्यादितत्परत्वं सत्त्वादिप्राकृतगुणैः ॥ ७१ ॥ ज्ञानमालिन्यं ज्ञानावरणं न वक्तुं शक्यम्, सर्वज्ञत्वाद्यैश्वर्यस्य प्रसिद्धत्वात् । तथापि विशुद्धज्ञानित्वेऽपि ॥ ७२ ॥ ज्ञानस्य स्वभावानभिभावकत्वमाह—यथेति ॥ ७३ ॥ स्वात्मानं चोदाहरति—अस्मानिति ॥ ७४ ॥ भिन्नस्थितिमेवाह—क्रोधिनमिति । लिङ्गं वर्णाश्रमचिह्नम् । परिग्रहः स्त्रीधनादिः । न्यासिनः संन्यासिनः ॥ ७५ ॥ भार्गवं

दैत्यपक्षसंश्रयिणं गुरुं देवसमाश्रयम् ॥७६॥
वाग्मिनं[1] च व्यासमपि शास्त्रनिर्माणतत्परम् ।
जनकं पश्य राजानं भरतं त्यागिनं तथा ॥७७॥
भिन्नस्थितीन् स्वभावेन ज्ञानिनः पश्य चापरान् ।
रहस्यं ते प्रवक्ष्यामि शृणु भार्गवनन्दन ॥७८॥
त्रिविधा[2] या वासनोक्ता द्वितीया तत्र या भवेत् ।
कर्मजा मूढतारूपा सा सर्वेभ्यो महत्तरा ॥७९॥
येषां तल्लेशकश्चित्ते नास्ति मेधाविनस्तु ते ।
अपराधविहीनानां तेषां कामादिवासनाः ॥८०॥
अभ्यासेनाविलीनाश्च ज्ञानस्याप्रतिबन्धिकाः ।
ततो वैराग्यादिकं तु न तेषामुपयुज्यते ॥८१॥

शुक्रम् । कवयन्तं काव्यं रचयन्तम् ॥ ७६ ॥ वाग्मिनं वादकुशलम् । भरतो जडभरतः ॥ ७७ ॥ अपरान् च्यवनयाज्ञवल्क्यविश्वामित्रादीन् । एवं स्थितिभेदनिमित्तं वक्तुमाह—रहस्यमिति ॥ ७८ ॥ त्रिविधा अपराधकर्मकामरूपा । सर्वेभ्यः अपराधकामवासनाभ्यः ॥ ७९ ॥ तस्याः कर्मवासनाया लेशः पूर्वसम्पादितसाधननष्टत्वान्नास्ति । ते मेधाविन इत्युच्यन्त इति शेषः । अपराधोऽपि स्वनिमित्तकर्मविशेषाभावान्नास्ति । कामादिवासना [3]अविलीना इति सम्बन्धः ॥ ८० ॥ अभ्यासेनेति । अभ्यासाभावेनाविलीना इति भावः । ज्ञानस्याप्रतिबन्धिका इति । इदमत्र तात्पर्यम्—कर्मवासनयाऽत्यन्तमूढचित्तानामपराधादिवासनाभावेऽपि मौढ्यादेव न ज्ञानोदयः । स्वल्पकर्मवासनया ईषन्मूढचित्तानामपराधकामवासना ज्ञानप्रतिबन्धिकाः । येषां पुनरपराधकर्मवासने लेशतोऽपि न स्तस्तेषां

१. वाग्मिनं व्यासमपि च—ख० । २. विविधा—क० ग० ।
३. विलीना—क० ।

न वा भूयोऽपि मननं समाधिश्चोपयुज्यते ।
सकृच्छ्रवणमात्रेण मननं ध्यानमेव च ॥८२॥
तत्काल ईषत् संप्राप्य ज्ञातासन्दिग्धतत्पदाः ।
भवन्ति जीवन्मुक्तास्ते जनकप्रमुखा इव ॥८३॥
विपरीताभ्यासवशान्नैव तैः क्षपिताः खलु ।
कामादिवासनाः सम्यक् सूक्ष्मा निर्मलबुद्धिभिः ॥८४॥
अतस्तैस्तत्पदे ज्ञाते चापि पूर्वस्थितास्तु ताः ।
कामादिवासनाः प्राग्वत् प्रवर्तन्ते निरन्तरम् ॥८५॥
न ताभिरीषद्वा बुद्धेस्तेषां लेपो भवेत् क्वचित् ।
विद्वद्भिस्ते हि संप्रोक्ता मुक्ताश्च बहुमानसाः ॥८६॥
राम कर्मवासनाभिरतिमूढं तु यन्मनः ।
तस्य ज्ञानं नैव भवेत् शिवोदितमपि क्वचित् ॥८७॥

कामवासना न ज्ञानप्रतिबन्धिका इति । तत इति । कामवासनाया अप्रतिबन्धकत्वात् । आदिना दोषदर्शनम् ॥ ८१ ॥ वैराग्यादेरिव मननादेरप्यनुपयोगमाह—न वेति । भूयः असकृत् । तेषां ज्ञानोत्पत्तिक्रममाह—सकृदिति ॥ ८२ ॥ तत्काले श्रवणकाले । तत्पदं पूर्णात्मपदम् ॥ ८३ ॥ ज्ञानाप्रतिबन्ध[क]त्वादेव कामक्रोधादिवासना न क्षपिताः । ॥ ८४ ॥ अतः अभ्यासेन अक्षपितत्वात् ॥ ८५ ॥ लेपः स्वरूपच्युतिनिमित्तमालिन्यम् । एवं च येषां वैराग्या[1]द्यभ्यासेन कामक्रोधादिवासनाः प्रारब्धविशेषजाता ज्ञानाप्रतिबन्धिका न नष्टास्तेषां ज्ञानोत्पत्त्यनन्तरमपि कामित्वक्रोधित्वादिकमिति भावः । एवं स्थितिभेदमुपपाद्योत्तमत्वादिभेदमपि ज्ञानिनामाह—ते हि संप्रोक्ताः । बहुमानसा उत्तमा भवन्तीति शेषः ॥ ८६ ॥ अपराधकर्मवासनयोर्दार्ढ्ये ज्ञानं न भवेदेवेत्याह—राम कर्मेति ॥८७॥ ज्ञानं न स्यात्, वासना

1. द्यनभ्यासेन-क० ।

दृढापराधयुक्तानामपि न स्यात् कथञ्चन ।
यस्यापराधरूपापि कर्मरूपापि वासना ॥८८॥
स्वल्पा कामात्मकाश्चापि बहुलास्तस्य भार्गव ।
बहुलश्रवणैस्तद्वद् मननैश्च समाधिभिः ॥८९॥
चिरकालेन विज्ञानं बहुक्लेशेन जायते ।
तस्य व्यवहृतिः स्वल्पा तत्राभ्यासप्रकर्षतः ॥९०॥
मनो यदि भवेन्नष्टप्रायं निर्वासनत्वतः[1] ।
ज्ञानिनस्त्वीदृशाः प्रोक्ता मध्यमा नष्टमानसाः ॥९१॥
तेषामेव तु केषाञ्चिदभ्यासस्याप्रकर्षतः ।
वासनाविरलं यस्मादनष्टं मानसं भवेत् ॥९२॥
समनस्कास्तु ते प्रोक्ता मन्दज्ञानयुतास्तु वै ।
केवलज्ञानिनस्त्वेते जीवन्मुक्तास्तथेतरे ॥९३॥
केवलज्ञानिनो दृष्टदुःखभाजो भवन्ति हि ।
प्रारब्धतन्त्रास्ते प्रोक्ता देहान्ते मुक्तिभागिनः ॥९४॥

स्वल्पेत्यन्वयः ॥८८॥ कामात्मकाः वासनाः । बहुलेति । भूयः कृतश्रवणादिभिरित्यर्थः ॥८९॥ तस्य तत्र समाध्यभ्यासप्रकर्षाद्व्यवहृतिः स्वल्पा [2]शारीरनिर्वाहमात्रोपयोगिनी ॥९०॥ एवं स्वल्पव्यवहृतिपराणां योगनिष्ठाप्रकर्षेण यदि कामादिवासनानाशाद् मनो नष्टप्रायं सदा निरुद्धं भवेत् तदा ईदृशज्ञानिनो ये ते मध्यमा नष्टमानसाः ॥ ९१ ॥ तेषां योगनिष्ठानामेव येषां केषाञ्चिद् अलसानामभ्यासाप्रकर्षाद् वासनाविरलं मनोऽनष्टं भवेत् ॥ ९२ ॥ एते मन्दज्ञानिनो न जीवन्मुक्ता इत्याह—केवलेति । इतरे मध्यमा उत्तमाश्च ज्ञानिनः ॥ ९३ ॥ जीवन्मुक्त्यभावे दृष्टदुःखभोगो भवेदित्याह—केवलेति । प्रारब्धतन्त्राः प्रारब्धा-

---

१. निर्वासनं ततः—क० । २. शरीर—क० ।

ये नष्टमानसाः प्रोक्तास्तैः प्रारब्धं पराकृतम् ।
मनोभूमौ तु प्रारब्धबीजं भोगाङ्कुरं भवेत् ॥९५॥
मनोभूमेरभावेन तत् प्रारब्धं तु कालतः ।
कुसूलस्थं बीजमिव विनश्येद् नष्टशक्तिकम् ॥९६॥
यथात्यन्तसुमेधावी युगपद् दश पञ्च च ।
कार्याणि कुरुते क्वापि भवेदस्खलितोऽपि च ॥९७॥
भूय एवंविधा दृष्टाः क्रियानैपुण्यसंश्रयाः ।
यथा गच्छन् वदन् कुर्वन् युगपल्लक्ष्यते जनः ॥९८॥
तत्र चैकेन मनसा कथं स्यात् त्रिविधा क्रिया ।
अध्येतॄणां बहूनां च युगपल्लक्षयेद् गुरुः ॥९९॥
अपभ्रंशानुच्चरितं[नूच्चरित]वर्णभेदव्यवस्थितम् ।
राम यस्ते हतः शत्रुरर्जुनो हैहयाधिपः ॥१००॥
सहस्रबाहुर्युगपद् हेतिभिर्बहुभिः पृथक् ।

धीनाः ॥ ९४ ॥ अन्ये तु न प्रारब्धतन्त्रा इत्याह—ये इति । पराकृतं जितम् । ननु तत् प्रारब्धं किं भवेदिति चेत् स्वत एव नश्यतीत्याह—मन इति ॥ ९५ ॥ तन्नाशप्रकारं सदृष्टान्तमुपपादयति—मनोभूमेरिति । कुसूलस्थबीजवद् मनःसम्बन्धाभावेन कालेन नष्टशक्तिकं सदाश्रयलिङ्गदेहनाशाद् विदेहमुक्तिकाले नश्यतीति भावः ॥ ९६ ॥ अथोक्तमज्ञानिनां बहुमानसत्वनिरूपणमुपक्रमते—यथेति । युगपदेककाले ॥ ९७ ॥ एवंविधा मेधाविनो लोके भूयो बहुशो दृष्टाः । एतदेवोदाहरति—यथेति ॥ ९८ ॥ एवं युगपदेकमनसाऽनेकक्रिया कथं स्यादित्याह—तत्रेति । प्रोक्तपुरुषेष्वित्यर्थः । उदाहरणान्तरम्—अध्येतॄणामिति ॥ ९९ ॥ अपभ्रंशेति । स्वोच्चारानन्तरोच्चरितवर्णानां भेदेनायथावर्णेन व्यवस्थितमपभ्रंशमपशब्दम् । उदाहरणान्तरम्—राम यस्त इति ॥ १०० ॥ हेतिभिरायुधैः । अस्खलन्

अयुध्यदस्खलन् क्वापि मेधावी दृष्ट एव ते ॥१०१॥
तेषां मनो बहुविधं भूत्वा तत्तत्क्रमानुगम् ।
यथा कार्यं बहुविधं साधयेत्तद्वदेव हि ॥१०२॥
उत्तमज्ञानिनामात्मदृष्टिर्बाह्यगतापि च ।
अविरुद्धा सर्वदा स्याद्येषां ते बहुमानसाः ॥१०३॥
तत् प्रारब्धं मनोभूमौ भवेदङ्कुरितं पृथक् ।
भवेद् ज्ञानाग्निना दग्धं भूतं भूतं पुनः पुनः ॥१०४॥
प्रारब्धबीजाङ्कुरः स्यात् सुखदुःखसमागमः ।
तद्विमर्शः फलं प्रोक्तं कुतो दग्धाङ्कुरे फलम् ॥१०५॥
आहृतैरनुसन्धानैस्तेषां व्यवहृतिर्भवेत् ।
यथा प्रौढो हि बालेन सह खेलन् हि दृश्यते ॥१०६॥

तत्तच्छस्त्रप्रयोगमार्गादप्रच्युतः सन् । ते[1] त्वया ॥ १०१ ॥ एवं युगपद्विविधक्रिया एकेन मनसा न सम्भवतीत्यत आह—तेषामिति । अर्जुनादिमेधाविनामित्यर्थः । तत्तत्क्रमानुगं तत्तत्कर्मसाधनानुकूलव्यापारक्रमयुक्तम् ॥ १०२ ॥ आत्मदृष्टिः आत्माकारं मनः । बाह्यगतापि च विषयाकारमपि च । मनसोऽनेकत्वाद् अविरुद्धेति ॥ १०३ ॥ एवमुत्तमज्ञानिनो बहुमानसत्वमुपपाद्य प्रारब्धभोगाभावं निरूपयति—तत् प्रारब्धमिति । अङ्कुरितं सुखःदुखाकाराङ्कुरवत् । तथापि फलपर्यवसायि न भवतीत्याह—भवेदिति । अङ्कुरात्मना भूतं भूतं तत्तत्प्रारब्धं पुनः पुनर्ज्ञानाग्निना दग्धं भवति, [2]न तु द्विक्षणावस्थायि भवेदिति तात्पर्यम् ॥ १०४ ॥ प्रारब्धात्मकबीजस्याङ्कुरः सुखदुःखसम्बन्धः । सुखादि निर्विकल्पकं फलं सुखादेर्विमर्शः सविकल्पकम् । आपातत एव सुखादेर्भानमिति तात्पर्यम् ॥ १०५ ॥ नन्वेवं सर्वत्रापातप्रत्ययेनानुसन्धानाभावे कथं व्यवहार इति चेदाह आहृतेति । न तेषां स्वतोऽ-

१. 'ते' नास्ति—कं० खं० । २. नं तद्विलक्षणं—कं० खं० ।

हृष्टो विषण्णश्च शिलागजादीनां विनाशने ।
एवं हृष्यन्ति सीदन्ति कार्येषु बहुमानसाः ॥१०७॥
यथाऽन्यकार्यसक्तस्य हर्षोद्वेगौ न चान्तरौ ।
एवं तेषां व्यवहृतौ समा सर्वत्र संस्थितिः ॥१०८॥
मेधाविनां ज्ञानिनां तु वासनानाशहेतवे ।
विरुद्धवासनाभ्यासनिरोधादेरभावतः ॥१०९॥
अनुवृत्तिर्भवेत् पूर्ववासनाऽनाशहेतुतः ।
अतः केचित् कर्मनिष्ठाः कामिनः क्रोधिनोऽपरे ॥११०॥

नुसन्धिरुदेति, किन्तु व्यवहारोपयुक्तानुसन्धानं बलात् स्वेच्छया आहृत्य व्यवहरन्ति । एवं व्यवहारेऽपि तन्निमित्तहर्षादिर्नान्तरभ्युदेतीति सदृष्टान्तमाह—यथेति ॥ १०६ ॥ शिलागजादीनामिति । शिलादिनिर्मितगजतुरंगादिसेनयोर्युद्धक्रीडायां स्वीयगजादिनाशे परगजादिनाशे च यथा बालो विषीदति हृष्यति च, एवं प्रौढो बहिर्हृष्यन् विषीदन्नपि नान्तर्विकारमायातीत्यर्थः । एवमिति । प्राकृतानां हि दृश्यसत्यत्वनिश्चयात् संस्कारप्राबल्येनाऽनिच्छतोऽपि बलादनुसन्धिस्ततो हर्षविषादाश्च भवन्ति । उत्तमज्ञानिनस्त्वसत्यत्वनिश्चयात्[1] संस्कारशैथिल्येन स्वतः सर्वत्रानुसन्ध्याद्यभावेऽपि व्यवहारसिद्धये प्रयत्नेनाहृतधारणासंस्कारादनुसन्धिपूर्वको बाह्यव्यवहार इति भावः ॥ १०७ ॥ दृष्टान्तान्तरमाह—यथेति । न चान्तराविति । अन्यपुरुषव्यवहारे लाभालाभयोरन्तर्हर्षाद्यभावेऽप्यन्यहृदयरञ्जनाय हृष्यति खिद्यति चेत्यर्थः । तेषाम् उत्तमज्ञानिनाम् । समा अन्यकार्यवत् स्वकार्येऽपि ॥ १०८ ॥ ज्ञानिनां व्यवहारभेदे निमित्तं निष्कृष्योपपादयति—मेधाविनामिति ॥ १०९ ॥ अनुवृत्तिरिति । प्राक्कृतकर्मानुरूपशुभाशुभान्तःकरणवासनाया ज्ञानाप्रतिबन्धिकाया

1. निश्चयात्मसंस्कार—क० ।

उत्तमज्ञानिनो भान्ति विविधाचारतत्पराः ।
समनस्कस्तत्र यो वै मन्दज्ञानी निरूपितः ॥१११॥
तेनापि वेद्यमखिलमसत्यत्वेन निश्चितम् ।
स्वरूपवित्तौ नो किञ्चिद्भासते हि समाधिषु ॥११२॥
समाधिर्वै स्वरूपस्य विमर्शो नान्य उच्यते ।
निर्विकल्पस्वरूपं तु सर्वाश्रयतया सदा ॥११३॥
स्फुरत्येव हि सर्वेषां तदस्फूर्तौ न किञ्चन ।
तथा विकल्पविकलं स्फुरेत् प्रोक्तदशासु च ॥११४॥

अविनाशितत्त्वाद्[1] ज्ञानोर्ध्वमपि तत्तद्भासनानुवृत्तिर्भवेदेवेत्यर्थः । अतः तत्तद्भासनानुवृत्तेः ॥ ११० ॥ मन्दज्ञानिनोऽपि समाहितदशायामुत्तमज्ञानितुल्यत्वमेवेत्याह— समनस्क इति ॥१११॥ तेनापि [2]मन्दज्ञानिनाऽपि । समाधिषु समाहितदशासु । स्वरूपस्याद्वयचिदात्मनो वित्तिरनुसन्धानं यस्मिन् काले, तस्मिन् काले वेद्यं न किञ्चिद्भाति । तथा च तस्य तदेतरज्ञानिवदेव न[3] हर्षविषादादीति भावः ॥ ११२ ॥ एवं मन्दज्ञानिनः समाधिदशां निरूप्योत्तमस्य समाधिम्—[1]"तत्त्वात्मबोध एवैकः सर्वाशातृणपावकः । प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥" [ यो० वा० ५।९२।८ ] इति वासिष्ठोक्तरीत्या सहजसमाधिरूपं निरूपयति—समाधिरिति । विमर्शोऽविच्छेदेनानुसन्धानम्, नान्यो हठयोगिभिः क्रियमाणो मूढसमाधिः । ननु हठयोगिनामपि समाधा ज्ञानिनामिव निर्विकल्पात्मतत्त्वमेव भासते, तथा च कुतो न तस्य समाधित्वमिति चेदाह—निर्विकल्पेति । सदा स्फुरत्येवेति सम्बन्धः ॥ ११३ ॥ तदस्फूर्तौ न किञ्चन स्फुरेदिति शेषः । विकल्पविकलं निर्विकल्पात्मरूपम् । प्रोक्तदशासु परिच्छिन्नज्ञानान्तरालादिदशासु ॥ ११४ ॥

1. "तत्त्वात्मबोधो भगवन्" इति मुद्रितपुस्तकपाठः ।

१. तत्त्वज्ञानो—क० ख० । २. भेद—क० । ३. 'न' नास्ति-क० ।

तावता नहि सर्वेषां समाधिः स्याद्धि भार्गव ।
ये तद्विमर्शसंयुक्ताः स तेषामेव संस्मृतः ॥११५॥

स्वरूपज्ञानं विना निर्विकल्पस्वरूपस्फूर्तिमात्रेण न समाधिः सिद्ध्यतीत्याह—तावतेति । हठयोगिनो यदि [1]स्वरूपस्फूर्तिमात्रं निरोधकालिकं समाधिः स्याच्चेत् सर्वेषामपि प्रोक्तदशानां समाधित्वं स्यादिति भावः । येषां निर्विकल्पात्मतत्त्वविज्ञानवतामनुसन्धानात्मकविमर्शपूर्वको निरोधः, स एव तेषां समाधिरिति विद्वद्भिः संस्मृतः ।

अत्रेदं विज्ञानरहस्यम्—श्रवणादिभिरपरिचितनिर्विकल्पचिदात्मतत्त्वो हठयोगी द्विविधः—पातञ्जलोक्ताष्टाङ्ग[2]संसिद्धः, तन्त्रोक्तषट्कर्मादिसाधनपूर्वकप्राणायामप्रकर्षपरिपाककुण्डलीसुषुम्णादिविभेदक्रमसिद्धश्चेति । तत्राद्यः समाध्यादावनात्मविकल्पोल्लेखहानं सङ्कल्प्य क्रमेण सर्वविकल्पमपहाय सर्वान्तेऽखिलविकल्पाभावमुल्लिखंस्ततस्तदुल्लेखमपि त्यक्त्वा तत्संस्कारशेषमात्रस्तिष्ठति । तथा च पातञ्जलं सूत्रम्—"विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" [१।१८] इति । द्वितीयस्तु सुषुम्णायां प्राणवायोरत्यन्तप्रवेशे तदादौ प्राणनिरोधजातायासस्य सुषुम्णाप्रवेशमात्रेण विनष्टत्वाद् भारापगम इव सुखी भवति । ततो मदमूर्च्छाग्रस्तमिव मनो मूर्च्छितप्रायं भवति । द्वयोरपि तत्काले सुषुप्ताविव सुखरूपतेति । श्रवणादिभिर्विज्ञातनिर्विकल्पचिदात्मतत्त्वस्य ज्ञानयोगिनस्तु समाधेः पूर्वमप्यविद्यावरणनिर्मुक्तनिर्विकल्पात्मतत्त्वं प्रतिबिम्बक्रमचित्रितदर्पणदृश्यविकल्पविचित्रं सदा प्रस्फुरत्येव । ततः समाध्यादौ विकल्पांशमपहाय विकल्पांशापगमसाक्षी प्रस्फुरन्निर्विकल्पचिद्रूपः परिशिष्टस्तिष्ठतीति । न च हठयोग्यपि तदा तावतैव रूपेण तिष्ठतीति वाच्यम्, तावदेव रूपं ज्ञानयोगिनः समाधौ परिहृताज्ञानावरणविक्षेपोभयभागं भवति । हठयोगिनस्तु तदा स्वरूपं परिहृताज्ञानविक्षेपांशमप्यज्ञानावरणांशावृतमेव भवेत् । ज्ञानिनस्त्व-

१. स्वस्वरूप-क० । २. 'सं' नास्ति--क० ।

व्यवहारपरा वित्तिरपि वेद्यविवर्जिता ।
विदितं नाभसं नैल्यं यथा भूयोऽवलोकने ॥११६॥
असत्यत्वेन विज्ञातं न वित्तिस्तेन संयुता ।

परोक्षज्ञानेनावरणांशस्य विनष्टत्वात्, अनावृतं स्वरूपमिति भेदात्। ननु हठयोगिनां तर्हि सुषुप्तिसमाध्योः को भेद इति चेदुच्यते, सुषुप्तौ मनसस्तमःपरिणामेन गाढघनच्छन्नाभ्रदर्शनैशान्धकारवद् गाढमौढ्ययुतम्, समाधौ तु मनसः सत्त्वपरिणामेन प्रकाशमानमप्यात्मतत्त्वमभ्रच्छन्नसूर्यवदविद्यावृतं नालं भासते। ज्ञानिनस्तु मनसः सत्त्वपरिणामेनाविद्यावरणाभावेन च निरभ्रनिर्मलनभोमध्यगतद्युमणिरिवालं प्रद्योतमानं तदात्मतत्त्वमित्यादि प्रविदितात्मतत्त्वानामनुभवसरणिमवतीर्णमेवेति न किञ्चिदपूर्वमिति ध्येयम् ॥ ११५ ॥ एवं ज्ञानिनामेव समाधेः समाधित्वमुपपाद्योत्तमज्ञानिनां व्यवहारकालेऽपि समाधिरव्याहत इत्याह—व्यवहारेति। समाधिर्नाम वेद्यसम्बन्धरहितवित्तिदशा। उत्तमज्ञानिनां व्यवहारेऽपि वेद्यसम्बन्धवर्जितैव वित्तिरित्यर्थः। एतदेवोपपादयति–विदितमिति ॥ ११६ ॥ विदितं दृश्यमानमपि नैल्यमसत्यत्वेन विज्ञातं सद् भूयोऽसत्यत्वेन ज्ञानानन्तरं पुनरवलोकने तेन नैल्येन वित्तिः पूर्ववन्न संयुतेत्यर्थः। ननु नैल्यवित्तेर्विषयसम्बन्ध आवश्यक एवेति चेदाह—अन्यथेति। विषयसम्बन्धाभ्युपगम इत्यर्थः। तत्त्वातत्त्वविभासयोरिति। आकाशे नैल्यं नास्तीति नैल्यबाधज्ञानवतो य आकाशस्य तत्त्वात्मको यथार्थो विभासः, यश्च प्रोक्तबाधज्ञानविधुरस्याकाशविषयकोऽतत्त्वात्मकोऽयथार्थो विभासः, तयोरुभयोर्नैल्यसम्बन्धाभ्युपगमे भेदो न स्यात्। न चेष्टापत्तिः कर्तुं शक्या, अर्थक्रियाभेदस्य सर्वानुभवसिद्धत्वात्। नहि मरुजलतत्त्वज्ञस्तदतत्त्वज्ञ इव तज्जलाहरणादौ प्रवर्तते। अतस्तत्त्वज्ञस्य ज्ञाने न मरूदकसम्बन्ध इति भावः। न च बाधज्ञानात् प्रवृत्तिः प्रतिबध्यत इति

अन्यथा नैव भेदः स्यात्तत्त्वातत्त्वविभासयोः ॥११७॥
तथाऽसत्यगृहीतस्य वेद्यस्य नहि वेदने ।
सम्बन्धः कुत्रचिद्वा स्याज्ज्ञानिनामत एव हि ॥११८॥
वेद्यहीना भवेद्वित्तिर्बाधितस्य विभासनात् ।
अमनस्कस्य सुतरां यतः सा चोन्मनी दशा ॥११९॥
मनो वै निश्चलं यत्र तदुक्तं चोन्मनी दशा ।
मनसश्चलनं तत् स्यात् सत्यवेद्यस्य सङ्गतिः ॥१२०॥
उत्तमज्ञानिनश्चैते दशे युगपदास्थिते ।
स सर्वदा व्युत्थितश्च समाधिस्थश्च भार्गव ॥१२१॥

वाच्यम्, क्लृप्तकारणाभावादेवाप्रवृत्तिसिद्धेः प्रतिबन्धकत्वकल्पनाया अन्याय्यत्वात् ॥ ११७ ॥ दृष्टान्तसिद्धार्थं दार्ष्टान्तिके योजयति—तथेति । असत्यत्वेन गृहीतस्य वेद्यस्य ज्ञानिनः कुत्रचिद्वेदने सम्बन्धो नहि स्यात् । अत एव ज्ञानिनां वेद्यहीना वित्तिर्भवेदिति सम्बन्धः ॥ ११८ ॥ वेद्यहीनेति । वेद्यसम्बन्धरहितेत्यर्थः । अत्र हेतुः—बाधितस्य विभासनादिति । अयं भावः—अबाधितजलादेर्यथाऽज्ञस्य मर्वादिसम्बन्ध-[द्ध]त्वेन भासनम्, नैवं ज्ञस्य वित्तिसम्बद्धधर्मिसम्बद्धत्वेन भानमिति । अमनस्कस्य मध्यमज्ञानिनस्तु सुतरां वित्तौ वेद्यसम्बन्धाभावः । अत्र हेतुः—यत इति । तस्य सा स्थितिरुन्मनी दशेत्युच्यते ॥ ११९ ॥ एतदेव विशदयति—मन इति । यत्र यस्यां दशायाम् । मनसो विषयव्यापृतौ वित्तौ वेद्यसम्बन्धो भवेत् । मध्यज्ञानिनो मनोव्यापाराभावान्न वेद्यसम्बन्ध इति भावः । ननु तर्हि मनश्चलनमुत्तमज्ञानिनोऽस्तीति वेद्यसम्बन्धः स्यादिति चेदाह—मनस इति । सत्यत्वेन ज्ञातवेद्यव्यापृतिरेव प्रकृते मनश्चलनं विवक्षितमिति भावः ॥ १२० ॥ एते दशे मनसोऽत्यन्तनिश्चलता असत्यवेद्यसङ्गतिरूपाभासचलता च । युगपदेककाल एव । उत्तमज्ञानिनां बहु-

तस्मात्तस्यापि वेद्येन रहिता वित्तिरास्थिता ।
एवमेतद्धि संप्रोक्तं पृष्टं यद्यत् पुरा त्वया ॥१२२॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे ज्ञानिस्थितिविभेदकथनम्
एकोनविंशोऽध्यायः ॥

मानसत्वाद् मनसोऽनेकाकारता युगपत् सम्भवेदिति भावः । अत एवाह--सर्वदेति ॥१२१॥ तस्माद् मनसो द्विविधत्वात् । तस्यापि उत्तमज्ञानिनोऽपि । उपसंहरति--एवमिति ॥ १२२ ॥

इति त्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायाम्
एकोनविंशतितमोऽध्यायः ॥

# अथ विंशोऽध्यायः

अत्र ते वर्तयिष्यामि पुरा वृत्तं शृणुष्व तत् ।
पुरा ब्रह्मसभामध्ये सत्यलोकेऽतिपावने ॥ १ ॥
ज्ञानप्रसङ्गः समभूत् सूक्ष्मात्सूक्ष्मविमर्शनः[1] ।
सनकाद्या वसिष्ठश्च पुलस्त्यः पुलहः क्रतुः ॥ २ ॥
भृगुरत्रिरङ्गिराश्च प्रचेता नारदस्तथा ।
च्यवनो वामदेवश्च विश्वामित्रोऽथ गौतमः ॥ ३ ॥
शुक्रः[2] पराशरो व्यासः कण्वः काश्यप एव च ।
दक्षः सुमन्तुः शङ्खश्च लिखितो देवलोऽपि च ॥ ४ ॥
एवमन्ये ऋषिगणा राजर्षिप्रवरा अपि ।

श्रीगुरुचरणद्वन्द्वं नत्वा स्मृत्वा परां चितिं त्रिपुराम् ।
सर्वान्तरात्मरूपां विद्यागीतां स्फुटां च विवृणोमि ॥
संशुद्ध्यै स्वस्य धियस्तद्दासत्वस्य संसिध्यै ।
तत्परजनसन्तुष्ट्यै सिद्धः स्याद्यत्न एष तत्कृपया ॥
अत्र जालकपद्यैस्तु सर्वार्थस्यापि संग्रहः ।
बोधसौकर्यसंसिद्ध्यै विद्यागीतात्मनोच्यते ॥

निखिलप्रकरणार्थं संग्रहेण विवक्षुर्विश्वासप्रकर्षसिद्ध्येऽधिकारिणां सुखबोधाय च ससाधनं विज्ञानं ज्ञानिस्थितिनिरूपणापदेशेन साक्षाद्विद्याशक्तिप्रतिपादितां विद्यागीतामुपदेष्टुं दत्तगुरुरुपक्रमते—अत्रेति । ज्ञानिनां स्थितिर्या पृष्टा तत्रेत्यर्थः । पुरा पूर्वकाले । वृत्तमतीतम् ॥ १ ॥ सूक्ष्मेति । अतिसूक्ष्मविचाररूपः । सनकाद्याः समुदिता इत्यन्वयः

---

१. नम्—क० । २. शुकः-ख० ।

सर्वे समुदितास्तत्र ब्रह्मसत्रे महत्तरे ॥ ५ ॥
मीमांसां चक्रुरत्युच्चैः सूक्ष्मात्सूक्ष्मनिरूपणैः ।
ब्रह्माणं तत्र पप्रच्छुर्ऋषयः सर्वं एव ते ॥ ६ ॥
भगवन् ज्ञानिनो लोके वयं ज्ञातपरावराः ।
तेषां नो विविधा भाति स्थितिः प्रकृतिभेदतः ॥ ७ ॥
केचित् सदा समाधिस्थाः केचिन्मीमांसने रताः ।
अपरे भक्तिनिर्मग्नाश्चान्ये कर्मसमाश्रयाः ॥ ८ ॥
व्यवहारपरास्त्वेके बहिर्मुखनरा इव ।
तेषु श्रेयान् हि कतम एतन्नो वक्तुमर्हसि ॥ ९ ॥
स्वस्वपक्षं वयं विद्मः श्रेयांसमिति वै विधे ।
इति पृष्टोऽवदद् ब्रह्मा मत्वाऽनाश्वस्तमानसान् ॥१०॥
मुनीन्द्रा नाहमप्येतद्वेद्मि सर्वात्मना ततः ।
जानीयादिममर्थं तु सर्वज्ञः परमेश्वरः ॥ ११ ॥

॥ २-४ ॥ ब्रह्मसत्रे ज्ञानयज्ञप्रसङ्गे ॥ ५-६ ॥ प्रकृतिभेदतः प्राक्तनसंस्कारभेदात् ॥ ७ ॥ तदेवाह—केचिदिति ॥८॥ तेषु समाधिस्थादिषु । श्रेयान् श्रेष्ठः ॥ ९ ॥ ननु यूयं [1]सर्वेविद्यापारङ्गता [2]एतद् विज्ञातुं स्वतः समर्था एवेति चेदाह—स्वस्वपक्षमिति । स्वीयं स्वीयं पक्षमेवागमयुक्तिघटितत्वेन श्रेयांसं विद्म इति हेतोर्वक्तुमर्हसीति योजना । नाहमप्येतद्वेद्मीत्यन्वयः । कुत एवं सर्वज्ञो विधिरवदत् ? इति चेदाह—अनाश्वस्तमानसानिति । अश्रद्धाहतचित्तान् । मयात्र समाधानमुक्तमपि स्वपक्षोऽनेनापि प्रोक्त इति न ग्रहीष्यन्तीति मत्वेति भावः ॥ १० ॥ सर्वात्मना सर्वांशेन, असन्दिग्धतयेति यावत् । ततः तस्माद्धेतोः । तत्र याम इत्यन्वयः । तस्य परमेश्वरस्य न क्वचिदज्ञानमिति ज्ञाप-

१. सर्वे तद्विद्या—क० ख० । २. एव—क० ख० ।

तत्र [1]यामोऽथ संप्रष्टुमित्युक्त्वा तत्र तैर्ययौ ।
सङ्गम्य देवदेवेशं [2]विष्णुनाभिसमागतम् ॥ १२ ॥
पप्रच्छ ऋषिमुख्यानां प्रश्नं तं लोकसृड् विधिः ।
प्रश्नं निशम्य च शिवो ज्ञात्वा विधिमनोगतम् ॥१३॥
मत्वाऽनाश्वस्तमनस ऋषीन् देवो व्यचिन्तयत् ।
किञ्चिदुक्तं मयाऽत्रापि व्यर्थमेव भवेन्ननु[3] ॥१४॥
स्वपक्षत्वेन जानीयुर्ऋषयोऽश्रद्धया युताः ।
इति मत्वा प्रत्युवाच देवदेवो महेश्वरः ॥१५॥
शृणुध्वं मुनयो नाहमप्येतद्वेद्मि सुस्फुटम् ।

यितुम्—सर्वज्ञ इति ॥ ११ ॥ तत्र सर्वज्ञसमीपे कैलासे । इत्युक्त्वा, अथ तदनन्तरमेव तत्काले तैः सनकाद्यैः सह ययौ । अर्थाद्विष्णुना समागतं सहितं देवदेवेशं महादेवं सङ्गम्य प्राप्य ॥ १२ ॥ तं प्रश्नं ज्ञानिषु भिन्नस्थितिषु कः श्रेष्ठ इति ऋषिभिः कृतम् । विधिमनोगतम् अनाश्वस्ता[4] एते मद्वचो न ग्रहीष्यन्तीति ॥१३॥ मत्वेति । योगदशाऽनाश्वस्तमनस ऋषीन् ज्ञात्वेत्यर्थः । चिन्तनप्रकारमेवाह—किञ्चिदिति । मयापीत्यन्वयः । अत्र प्रकृतप्रश्नविषये । नन्विति सम्भावनाद्योतकः ॥ १४ ॥ [5]कुतस्त्वदुक्तं व्यर्थं भवेदिति चेदाह—स्वपक्षत्वेनेति । महादेवस्य पक्षोऽयमिति जानीयुः । कुत एवमिति चेदश्रद्धाहतत्वादित्याह—अश्रद्धया युता इति । मदुक्तं व्यर्थं भवेदिति मत्वा ॥ १५ ॥ एतावता ग्रन्थेन सनकादिभिरप्यविदितत्वात् प्रकरणप्रतिपाद्यार्थस्यात्युत्तमत्वम्, ब्रह्माद्युक्तेरपि वैयर्थ्यकथनादश्रद्धाया ज्ञानं प्रति प्रबलप्रतिबन्धकत्वम्, ऋषिभिर्ब्रह्मादिष्वप्यज्ञानस्य सम्भावितत्वादज्ञानस्य दुर्निरसनत्वम्, सगुणमूर्तीनां परिच्छिन्नत्वं च सूचितम् । अथ प्रकरणप्रतिपाद्यपरदेवतायाः

१. यामोऽर्थे—क० । २. विष्णुं ना—क० । ३. न तु—क० ग० ।
४. श्वासा—क० । ५. कुतस्त्वेत—क० ख० ।

अतो विद्यां भगवतीं ध्यायामः परमेश्वरीम् ॥१६॥
तत्प्रसादान्निगूढार्थमपि विद्मस्ततः परम् ।
इत्युक्ता मुनयः सर्वे विधिविष्णुशिवैः सह ॥१७॥
दध्युर्विद्यां महेशानीं त्रिपुरां चिच्छरीरिणीम् ।
एवं सर्वैरभिध्याता त्रिपुरा चिच्छरीरिणी ॥१८॥
आविरासीच्चिदाकाशमयी शब्दमयी परा ।
अभवद् मेघगम्भीरनिःस्वनो गगनाङ्गणे ॥१९॥

शुद्धचिच्छक्तेः सर्वोत्तमत्वावगमनाय तद्ध्यानेनाश्रद्धानाशपूर्वकसर्वसंशयनिवृत्तिमृषीणां वक्तुं महादेववाक्यमुदाहरति—शृणुध्वमिति। एतद् भवत्पृष्टम्। अतः प्रकृतार्थे संशयनिवृत्त्यभावात्। विद्याशक्तेरविद्याविरोधित्वान्न तदुक्तावश्रद्धा स्यादिति तात्पर्यम्। परमेश्वरीमिति तस्या वागाद्यभावेऽपि पूर्णस्वातन्त्र्ययुक्तत्वेनासमस्तसंशयच्छेदने समर्थेवेति भावः ॥१६॥ निगूढार्थं रहस्यार्थम्। ततः परं ध्यानेन प्रसादनानन्तरम्। इति शिवेनोक्ताः॥ १७॥ महेशानीम् अभीष्टदाने स्वतन्त्राम्, त्रिपुरां जाग्रत्स्वप्नसुषुप्त्यादित्रिकेभ्यः पुरां तुर्याम्, अपरिच्छिन्नामिति तात्पर्यम्। चिच्छरीरिणीमिति। अविद्यातत्कार्यलेशरहितत्वेनानावृतचिद्रूपत्वेन सर्वज्ञत्वात् प्रश्नार्थनिरूपणे समर्थत्वं द्योतितम्। एवं प्रोक्तरीत्या स्वाभिलषितदान[1]योग्यरूपेण, अन्यथा फलप्राप्त्यनुपपत्तेः। तदुक्तम्—"यथा यथा ध्यायति तं तथैव चिन्तामणिस्त्वं समुपैषि देव" इति ॥१८॥ चिदाकाशमयी अपरिच्छिन्नचिदेकरूपा, अत एव दृश्यदोषलेशवर्जनात् परा उत्तमा। एवंविधायाः कथमाविर्भावसम्भव इति चेदाह—शब्दमयीति। शब्दरूपेणेन्द्रियगोचरतां ब्रह्मादीन् प्रति स्वस्यावभासयदिति तात्पर्यम्। तत्प्रकारमेवाह—अभवदिति। मेघानामिव गम्भीरो महान् निःस्वनः शब्दः। गगनाङ्गणे आकाशप्रदेशे ॥१९॥

१. ज्ञान–क० ख०।

वदन्त्वृषिगणाः किं वो ध्याता तद् द्रुतमीहितम् ।
मत्पराणां हि केषाञ्चिन्न हीयेताभिवाञ्छितम् ॥२०॥
इति श्रुत्वा परां वाणीं प्रणेमुर्मुनिपुङ्गवाः ।
ब्रह्मादयोऽपि तदनु तुष्टुवुर्विविधैः स्तवैः ॥२१॥
अथ प्रोचुर्ऋषिगणा विद्यां तां त्रिपुरेश्वरीम् ।
नमस्तुभ्यं महेशानि श्रीविद्ये त्रिपुरेश्वरि ॥२२॥
अशेषोत्पादयित्री त्वं स्थापयित्री निजात्मनि ।
विलापयित्री सर्वस्य परमेश्वरि ते नमः ॥२३॥
अनूतना सर्वदाऽसि यतो नास्ति जनिस्तव ।

निःस्वन[1]स्वरूपमेवाह—वदन्त्विति । ब्रह्मादीन् विहाय ऋषिगणा इति सम्बोधनं प्रश्नरूपध्याननिमित्तस्य ऋषिगणनिष्ठत्वेन । किं किमर्थम् । वः युष्माभिः । तदीहितमीप्सितम्, वदन्त्विति सम्बन्धः । द्रुतमिति । मयि प्रसन्नायां फलप्राप्तौ न कालविलम्बो भवेदिति तात्पर्यम् । तदेवाह—मत्पराणामिति । अहमेव परा स्वात्मरूपत्वेन परप्रेमास्पदत्वाद्भजनीया येषां तेषाम्, मद्भक्तानामित्यर्थः । न हीयेत कालाद्यन्तरितं न भवेत् ॥२०॥ वाग्रूपेणाभिव्यक्तां श्रुत्वा श्रवणेन्द्रियद्वारा हृदयङ्गमीकृत्य प्रणेमुः दण्डवन्नताः, ब्रह्मादयोऽपि प्रणेमुः दण्डवन्नताः, तदनु प्रणामानन्तरम् ॥ २१ ॥ अथ ब्रह्मादिस्तुत्यनन्तरं विद्यां तुष्टुवुरिति सम्बन्धः । श्रीमती दीप्तिमती अनवच्छिन्नप्रकाशरूपा विद्या चिद्रूपा, अत एव त्रिपुरा तुर्या शुद्धचिदद्वयरूपा, तथास्वरूपाप्यनन्तस्वातन्त्र्यशक्तिमत्त्वादीश्वरी ॥२२॥ समस्तजगत्सृष्ट्यादिस्वातन्त्र्यमपि तवैव, अतश्च त्वमेव परमेश्वरीत्याह—अशेषेति । निजात्मनि दर्पणसदृशे स्वस्वरूपे स्थापयित्री प्रतिबिम्बसदृशजगद्धारयित्रीत्यर्थः । स्वात्मनीति योग्यतयोत्पादयित्रीत्यादावपि योजनीयम् ॥ २३ ॥ उत्पत्तिनाशवदशेषजग-

१. 'स्वरूप' नास्ति—क० ।

नवात्मिका सदा त्वं वै यतो नास्ति जरा तव ॥२४॥
सर्वाऽसि सर्वसाराऽसि सर्वज्ञा सर्वहर्षिणी ।
असर्वाऽसर्वगाऽसाराऽसर्वज्ञाऽसर्वहर्षिणी ॥२५॥

दाश्रयभूताया अपि तव नोत्पत्तिनाशावित्याह—अनूतनेति। नूतनमुत्पत्तिमत्। यतो नास्ति जरेति। स्थितरूपनिवृत्त्या रूपान्तरप्राप्तिरूपविपरिणामावस्था नास्तीति भावः। एतच्चाशेषविकाराभावोपलक्षकं ज्ञेयम् ॥ २४ ॥ तदैश्वर्यं वर्णयति—सर्वाऽसीति। दर्पणस्य प्रतिबिम्बात्मत्ववत् स्वान्तरवभासितजगतस्त्वत्स्वरूपत्वात् त्वमेव सर्वाऽसि। ननु कथमविकृताद्वितीयरूपाया अपरिमितसर्वविकाररूपतेति चेदाह—सर्वसाराऽसीति। सारं दृढमनश्वरं रूपम्। तथा च घटादिषु मृदिव सर्वत्राव्यभि[1]चरितसारात्मकसद्रूपेणानुवृत्तत्वात् सर्वसारात्मत्वम्। ननु किं प्रधानात्मक[2]जडशक्तिरूपेणानुवृत्त[3]त्वमिति चेन्नेत्याह—सर्वज्ञेति। सर्वत्र ज्ञानात्मकचित्प्रकाशरूपेणानुवृत्तेत्यर्थः। ननु चित्प्रकाशोऽपि स्वातन्त्र्यवर्जित उदासीनो निमित्तभूतः[4]कृतेः स्वातन्त्र्ये जडतुल्ययोगक्षेमः सांख्यानामिव भवेदिति चेन्नेत्याह—सर्वहर्षिणीति। तस्य स्वातन्त्र्यमेवानन्दः। "आनन्दो विश्वाहन्तापरिणामः" [ यो० हृ० दी० १।१३ ] इत्याद्युक्तनीत्या सर्वत्र स्वातन्त्र्यात् सर्वहर्षवती, अपरिच्छिन्नानन्दरूपेत्यर्थः। लोकेऽपीह[5] यस्य यावत् स्वातन्त्र्यं तावांस्तस्यानन्द इति स्पष्टमेव। यस्य यावत् पारतन्त्र्यं तावत्तस्यानन्दाच्छादनम्, यावत्पारतन्त्र्यनिवृत्तिस्तावदानन्दाभिव्यक्तिरिति तात्पर्यम्। प्रोक्तविशेषणेषु सर्वपदार्थस्याभासनमात्रसारत्वेनाव्यतिरिक्तत्वाद्वस्तुतः सर्वात्मत्वादिकं नास्तीत्याह—असर्वेत्यादि। सर्वगतत्वे सारता स्यात्

१. भिचारवृत्तिसारा—क० । २. त्मकाजशक्ति—क० ।
३. नुक्तत्व—क० । ४. प्रकृतः—ग० ।
५. लोकेऽपि हि—ग० ।

देवि भूयो नमस्तुभ्यं पुरस्तात् पृष्ठतोऽपि च ।
अधस्तादूर्ध्वतः पार्श्वे सर्वतस्ते नमो नमः ॥२६॥
ब्रूहि यत्तेऽपरं रूपमैश्वर्यं ज्ञानमेव च ।
फलं [1]तत्साधनं मुख्यं साधकं सिद्धमेव च ॥२७॥
सिद्धेस्तु परमां काष्ठां सिद्धेषूत्तममेव च ।
देव्येतत् क्रमतो ब्रूहि भूयस्तुभ्यं नमो नमः ॥२८॥
इत्यापृष्टा महाविद्या प्रवक्तुमुपचक्रमे ।
दयमाना ऋषिगणे स्पष्टार्थं परमं वचः ॥२९॥

सर्वगतत्वाभावात् सारत्वाभाव इत्याह—असर्वगाऽसारेति ॥ २५ ॥ एवं स्तुत्वा नमस्कारस्य सम्मुखे कर्तव्यत्वेन परदेवताया अशरीरिण्याः साम्मुख्यदौर्लभ्यात् स्वपुरःपृष्ठाद्यखिलदिक्कालव्यापकत्वेन च सर्वतो नमस्कुर्वन्ति ऋषयः—देवीति । भूयः अपरिमितकृत्वः ॥ २६ ॥ एवं देवतां स्तुतिपूर्वकं नमस्कृत्य जिज्ञासितार्थं पृच्छन्ति—ब्रूहीति । यद्यपि ज्ञानिषूत्तमजिज्ञासयैव प्रवृत्तास्तथाप्यलभ्यपरदेवतासमागमपरितुष्टा ज्ञातस्याप्यर्थस्य दार्ढ्यसम्पत्तये दशधा मुनयः प्रश्नं चक्रुरिति । परमित्यत्राकारप्रश्लेषाप्रश्लेषाभ्यां परं रूपमपरं रूपमिति प्रश्नद्वयम्, उत्तरानुरोधात् । ते ऐश्वर्यं ते ज्ञानं ज्ञानस्य मुख्यं फलं साधनं साधकं च ज्ञाने[2] सिद्धम् ॥२७॥ सिद्धेरिति जात्येकवचनम् । निर्धारणे षष्ठी । सिद्धीनां मध्य इत्यर्थः । परमां मुख्यां काष्ठां पर्यवसानभूमिम्, यत्प्राप्त्यनन्तरं नास्ति प्राप्तव्यसिद्ध्यन्तरमिति तात्पर्यम् । [3]ज्ञानसिद्धेषु ॥ २८ ॥ आसमन्तात् सर्वैर्मुनिभिः पृष्टा । भूयः प्रणामेन भक्त्या च परितुष्टा प्रकर्षेण सर्वसंशयच्छेदनार्हयुक्तियोगेन वक्तुम् । नन्वाप्तकामायास्तस्याः प्रतिवचने किं निमित्तमिति चेदाह—दयमानेति । स्पष्टार्थम् असन्दिग्धम् । परममतिसुन्दरं श्रवणानन्दनम् ॥ २९ ॥

---

१. तस्माद्धनं—क० । २. ज्ञानं—क० । ३. ज्ञाना—क० ।

शृणुध्वमृषयः सर्वं[1] प्रवक्ष्यामि क्रमेण तत् ।
अमृतं ह्यागमाम्भोधेः समुद्धृत्य ददामि वः ॥३०॥
यत्र सर्वं जगदिदं दर्पणप्रतिबिम्बवत् ।
उत्पन्नं च स्थितं लीनं सर्वेषां भासते सदा ॥३१॥
यदेव जगदाकारं भासतेऽविदितात्मनाम् ।

श्रोतॄनभिमुखयति—शृणुध्वमिति । तद् भवत्पृष्टम् । आगमाम्भोधेः शास्त्रसमुद्रादमृतमिव सारांशं वो युष्मभ्यं ददामि ॥ ३० ॥ एवमभिमुखीकृत्याद्यं प्रश्नविषयं परं रूपमुपपादयति—यत्रेति । परा प्रतिभा मम परं रूपमीरितमिति षष्ठश्लोकेनान्वयः । इह घटपटादिविचित्रदृश्याकारा प्रतिभा ज्ञानशब्दवाच्या स्वप्रकाशाऽनपह्नवनीयास्ति । तस्या अपह्नवे न प्रश्नो नापि चोत्तरं घटते, प्रश्नप्रतिवचनादेः प्रतिभायत्तत्वात् । नहि तस्यास्तत्तद्दृश्याकारक्षणिकप्रतिभामात्रपरिनिष्ठितं रूपम्, स्मृत्यनुसन्धानाद्यनुपपत्तेः । अतस्तद्रूपं तत्तत्प्रतिबिम्बपरिच्छिन्नदर्पणांशराश्यनुस्यूतमहादर्पणवत्[2] तत्तद्दृश्याकारपरिच्छिन्ना परप्रतिभाधाराराश्यनुस्यूतमहाप्रतिभैव । एवैष परा प्रतिभा सामान्यज्ञानरूपा देशकालाद्यपरिच्छिन्ना मम परं सर्वमौलं रूपमिति तात्पर्यम् । तदेव यत्रेत्यादिपञ्चभिः श्लोकैश्चित्तारोहाय विशिष्यते । यत्र यस्यां परप्रतिभायाम्, इदं सर्वं प्रत्यक्षसिद्धं जगत्, उत्पन्नं नूतनाभासविषयं स्थितमाभासधाराविषयम्, लीनम् आभासाविषयम्, सदा सर्वेषां प्रमातॄणां क्रमाद्भासते । ननु भूतले घटादिरिव पृथक् सन् भासत इति चेन्नेत्याह—दर्पणप्रतिबिम्बवदिति । दर्पणे प्रतिबिम्बस्योत्पत्तिस्थितिलयावभासवत् परप्रतिभायामव्यतिरेकेणैव जगत उत्पत्त्यादिभासनमिति ॥ ३१ ॥ ननु दर्पणे बिम्बनिमित्तकं प्रतिबिम्बभासनम्, परप्रति-

---

१. सर्वे—क० । २. दर्पणात्—क० ख० ।

यद्योगिनां निर्विकल्पं विभात्यात्मनि केवलम् ॥३२॥
गम्भीरस्तिमिताम्भोधिरिव निश्चलभासनम् ।

भायां कुतो जगदवभासनमिति चेत्, स्वस्वातन्त्र्याख्यमायाशक्तिनिमित्तकमित्याह—यदेवेति। यदेव परप्रतिभाख्यतत्त्वमेव, अविदितात्मनां मायाशक्त्यवस्थान्तरात्मकाविद्यावृतमनसां कामलादोषावृतनयनानां शङ्खे पीतिमेव[1] जगदाकारं भासते। यदेव तत्त्वं योगिनां विद्याविनष्टाविद्यानां निर्विकल्पं दृश्यद्वैताकारवर्जितं भाति। ननु तथापि तदस्य भातीति भास्यभासकद्वैतानपगम इति चेदाह—आत्मनि केवलमिति। स्वात्मनि चिद्रूपे देहादिदृश्याभासलेशविकले केवलमहमिति द्रष्टृमात्ररूपेण भासत इत्यर्थः ॥ ३२ ॥ ननु तथापि तन्न[2] निर्विकल्पं भवितुमर्हति, तदा क्षणिककेवलज्ञानधाराया एव भासमानत्वात्तत्र च क्षणिककेवलज्ञानानां परस्परं भिन्नत्वादित्याशङ्क्याह—गम्भीरेति। योगिनामात्मतत्त्वं गम्भीरस्तिमिताम्भोधिवद् निश्चलभासनं भवति। गम्भीरमिति देशापरिच्छेदः, स्तिमितमिति कालापरिच्छेद उक्तो ज्ञेयः। अनन्ताद्वयरूपेणैव तद्भासन[3]मिति तात्पर्यम्। एवं तदेव तत्त्वं भक्तश्रेष्ठैरपि सेव्यत इत्याह—यत् सुभक्तैरिति। सेव्यत इति सम्बन्धः। सुष्ठु द्वैतमालिन्यवर्जनेन भजन्तीति सुभक्ताः परात्मतत्त्वविदः। अतिशयप्रीत्येति। प्रीतिरनुरक्तिः चित्तवृत्तिविशेषः, तस्या अतिशयत्वमनवधित्वम्। सेयं प्रीतिर्द्वैतिनां न घटते। "आत्मनस्तु कामाय सर्वं प्रियं भवति" [ बृ० उ० २।४।५ ] इत्युक्त्या तेषां परात्मप्रीतेरात्मार्थत्वेनात्मप्रीतेर्व्यावृत्तत्वेन न्यूनत्वेन चानवधित्वाभावात्। अद्वैतिनां परात्मनः स्वात्माभेदेन तत्प्रीतेरितरार्थत्वाभावान्नोक्तदोष इति ध्येयम्। कैतववर्जनादिति। कैतवं

१. पीतमिव—क०, पीतमेव—ख० २. तन्निर्वि—क० ख०।
३. भान—क० ख०।

यत् सुभक्तैरतिशयप्रीत्या कैतववर्जनात् ॥३३॥
स्वभावस्य स्वरसतो ज्ञात्वापि स्वाद्वयं पदम् ।
विभेदभावमाहृत्य[1] सेव्यतेऽत्यन्ततत्परैः ॥३४॥
अक्षान्तःकरणादीनां प्राणसूत्रं यदान्तरम् ।
यदभाने न किञ्चित् स्याद्यच्छास्त्रैरभिलक्षितम् ॥३५॥

शाठ्यम्[2] । यथा हि वारयोषा विटेषु प्रीतिं कुर्वन्ति तत्कैतवम् । अर्थगता हि तासां मुख्या प्रीतिः । यतोऽमुख्यामपि विटगतां मुख्यामिव कृत्वा प्रदर्शयन्ति, अतः सा प्रीतिः कैतवाद्भवति, द्वैतिनामीदृश्येव भक्तिरिति सुधीभिर्विमर्शनीयम् ॥ ३३ ॥ अद्वैतिनां स्वात्मभूतपरात्मसेवनं कथं सम्भवेत् सेव्यसेवकयोर्भेदविमर्शमन्तरेति चेदाह—विभेदभावमाहृत्येति । [3]विभेदस्य भावः सत्ता । तमाहृत्य बलाज्ज्ञात्वा । आहार्यभेदज्ञानेनेत्येतत् । एतदेवाह—ज्ञात्वापीति । स्वस्मादद्वयमद्वितीयं पदं प्राप्यं परात्मतत्त्वं ज्ञात्वापि । एवं ज्ञानवतः कुतो विभेदभावाहरणमिति चेदाह—स्वभावस्य स्वरसत इति । स्वभावस्य चित्तस्य स्वरसतः स्वाभाव्यात् । यथा हि केषाञ्चिज्ज्ञानिनां पूर्वसंस्कारवशाद्राज्यादिक्रिया, एवं वासनावैचित्र्यादेतदपीति भावः । नन्वेवंविधानां सेवनमनादरपूर्वकं स्यादिति चेदाह—तत्परैरिति । तत्परत्वयुतैरित्यर्थः ॥ ३४ ॥ अक्षेति । अक्षाणीन्द्रियाणि, अन्तःकरणं मनः, आदिना बुद्ध्यादेर्देहस्य च[4] ग्रहणम्, एतेषाम् । आन्तरं प्रतिबिम्बानां दर्पण इव यत् स्वभावभूतम् । यद्वा एतेषां यदान्तरं प्राणसूत्रम् । यथा हि सूत्रपाञ्चालिका स्वान्तरस्थेन प्राणतुल्येन सर्वचेष्टानिदानसूत्रेणैव तत्तच्चेष्टां करोति, एवमक्षादीनां स्वस्वचेष्टानिदानभूतान्तरप्राणसूत्रम् । अथ च यस्याभानेऽ-

१. मारुह्य—क० । २. कापट्यम्—ख० ग० ।
३. विवेकभेदस्य—क० ख० । ४. 'च' नास्ति—क० ।

परा सा प्रतिभा देव्याः परं रूपं ममेरितम् ।
ब्रह्माण्डानामनेकानां बहिरूर्ध्वे सुधाम्बुधौ ॥३६॥
मणिद्वीपे नीपवने चिन्तामणिसुमन्दिरे ।
पञ्चब्रह्ममये मञ्चे रूपं त्रैपुरसुन्दरम् ॥३७॥
अनादिमिथुनं [1]यत्तदपराख्यमृषीश्वराः ।
तथा सदाशिवेशानौ विधिविष्णुत्रिलोचनाः ॥३८॥

प्रकाशने किञ्चिदपि न स्यान्न सत्तां प्राप्नुयात् । एवंविधे परतत्त्वे किं प्रमाणमिति चेल्लक्षणावृत्त्या शास्त्रमेवेत्याह—यच्छास्त्रैरिति । एवं प्रोक्तरूपा पराऽनवच्छिन्ना प्रतिभैव देव्या जगत्क्रीडापराया मम परं वास्तवं रूपमिति योजयेत् ॥ ३५ ॥ एवं परं रूपं प्रतिपाद्याऽपरं रूपमुपपादयितुमादौ [2]त्रिपुरासगुणमूर्तिं प्रकृते प्रस्तुतां निरूपयति—ब्रह्माण्डानामिति । ब्रह्माण्डानामित्यादिकथनमनवधिकैश्वर्यनिरूपणद्वारा सगुणमूर्तिंश्च उत्कृष्टत्वेन प्रशंसितुम् । सुधाम्बुधौ अमृतजलार्णवे ॥ ३६ ॥ मणिद्वीपे नवरत्नमणिसंक्लृप्तनवखण्डात्मकद्वीपे । नीपाः कदम्बवृक्षविशेषाः, तेषां[3] वने विपिने । चिन्तामणिः भक्तानां चिन्तितफलप्रदो मणिविशेषः, अमृतमथनसमये महता प्रयत्नेन दैवैरेक आसादितः । तादृशमणिगणविरचिते सुन्दरे मन्दिरे । पञ्चब्रह्ममये ब्रह्मविष्णुरुद्रेश्वरात्मचतुष्पादे सदाशिवात्मफलके मञ्चे त्रैपुरसुन्दरं त्रिषु पुरेषु धामसु जाग्रदादिषु सर्वस्पृहणीयत्वेनातिसुन्दरम् अनुगतं यत्परं रूपं परचिदात्मतत्त्वम् , तत्सम्बन्धि भक्तानुग्रहाय स्वस्वातन्त्र्यमात्रनिमित्तावभासितं रूपम् ॥ ३७ ॥ अनादिमिथुनं प्राङ्माहात्म्यखण्डे प्रतिपादितम् उत्पत्तिवर्जितं कामेश्वरकामेश्वरीरूपम् । यद्यपि ब्रह्माद्यनुग्रहेणाविर्भावरूपोत्पत्तिस्तत्राभिहिता, तथापि न आदिः कारणं यस्येति विग्रहेण कारणात् स्वस्वातन्त्र्यभिन्नादुत्पत्तिवर्जनं ज्ञेयम् ।

---

१. ह्येतद्–ख० । २. पुरा–क० ख० । ३. 'तेषां' नास्ति–क० ।

गणेशस्कन्ददिक्पालाः शक्तयो गणदेवताः ।
यातुधानाः सुरा नागा यक्षकिम्पुरुषादयः ॥३९॥
पूज्याः सर्वा मम तनूरपराः परिकीर्तिताः ।
मम मायाविमूढास्तु मां न जानन्ति सर्वतः ॥४०॥
पूजिताऽहमेव[1] सर्वैर्ददामि फलमीहितम् ।
न मत्तोऽन्या काचिदस्ति पूज्या वा फलदायिनी ॥४१॥
यथा यो मां भावयति फलं मत् प्राप्नुयात्तथा ।
ममैश्वर्यमृषिगणा अपरिच्छिन्नमीरितम् ॥४२॥

एवंविधं यत्तदेव मेऽपरं रूपम्। [2]एवं प्रधानमपरं रूपमभिधाय "यद्य-द्विभूतिमत्सत्त्वम्" [ भ० गी० १०।४१ ] इति भगवदुक्तन्यायेना-प्रधानरूपाण्यप्याह—तथेति। सदाशिवाद्याः पञ्च अनुग्रहतिरोधानसृष्टि-स्थितिलयात्मकपञ्चकृत्याधिकारिणः ॥३८॥ गणेशो विनायकः। स्कन्दः षण्मुखः। दिक्पाला इन्द्रादयः। शक्तयः प्रागुक्ताः कुमारीलक्ष्मीप्रमुखा अन्याश्च। गणदेवताः वसुरुद्रादयो गणरूपाः। यातुधानादि-किंपुरुषान्ताः पूज्या इत्यन्वयः ॥३९॥ यातुधानासुरादिषु या याः पूज्या मूर्तयः, ताः सर्वा ममापराः, तनूः तन्वः। एवं सर्वत्र तत्तद्रूपेण स्थितां मायाविमूढा मां न जानन्तीत्याह—ममेति। ताः सर्वा मूर्तयो मत्सम्ब-न्धिन्य एवेति न जानन्तीति भावः ॥ ४० ॥ कुतस्ता मूर्तयस्त्वत्सम्ब-न्धिन्य इति चेत्तत्र तत्र पूज्या फलप्रदा चाहमेवेत्याह—पूजितेति। ईहितं इच्छितम्। कुत एतदिति चेत्, पूजानुरूपफलदातृत्वस्य संविदतिरिक्ते दुर्घटत्वमित्याह—न मत्त इति ॥ ४१ ॥ यथा यत्फलदातृत्वेन तत्फलं[3] मत् मत्तः, तथारूपायाः। तृतीयं प्रश्नमुत्तरयति—ममेति। अपरिच्छि-

---

१. पूजिता ह्येव सर्वैस्तैर्द—क० । २. 'एवं' नास्ति—क० ख० ।
३. 'तत्फलं' नास्ति--क० ख० ।

अनपेक्ष्यैव यत्किञ्चिद् अहमद्वयचिन्मयी ।
स्फुराम्यनन्तजगदाकारेण ऋषिपुङ्गवाः ॥४३॥
तथा स्फुरन्त्यपि सदा नात्येम्यद्वैतचिद्वपुः ।
एतन्मे मुख्यमैश्वर्यं दुर्घटार्थविभावनम् ॥४४॥
ममैश्वर्यं तु ऋषयः पश्यध्वं सूक्ष्मया दृशा ।
सर्वाश्रिया सर्वगता चाप्यहं केवला स्थिता[1] ॥४५॥
स्वमायया स्वमज्ञात्वा संसरन्ती चिरादहम् ।
भूयो विदित्वा स्वात्मानं गुरोः शिष्यपदं गता ॥४६॥

न्नम् अनन्तम् ॥४२॥ तत्र मुख्यमैश्वर्यमाह—अनपेक्ष्यैवेति । स्वरूपाद्भिन्नं यत्किञ्चित्कारणमनपेक्ष्यैव जगदाकारेण स्फुरामीत्यर्थः । ननु स्वरूपातिरिक्तकारणाभावेऽपि स्वांशभेदापेक्षया जगदाकारता स्यादिति चेन्नेति बोधयितुम्—अद्वयचिन्मयीति । अखण्डचिन्मात्रत्वेन ममांशाभावादिति तात्पर्यम् ॥ ४३ ॥ ननु पूर्वं तवाद्वयचिन्मात्रत्वेऽपि जगदाकारतापत्त्यनन्तरं विचित्रानेकरूपता स्यादिति चेदाह— तथेति । विचित्रजगदाकारेण सदा स्फुरन्त्यप्यहमद्वैतचिदात्मकं वपुः स्वरूपं नात्येमि न परित्यजामि । विचित्रजगदाकारस्य प्रतिबिम्बतुल्यत्वान्न मे स्वरूपप्रतिहतिरिति भावः । एतद् अनपगताद्वैतचिन्मात्ररूपाया अपि विचित्रजगदात्मना स्फुरणम् । दुर्घटार्थस्य विभावनं सम्पादनम् ॥ ४४ ॥ सर्वेषां दृश्यानामाश्रया, सर्वेषु गताऽनुस्यूता चापि केवलाद्वैतचिन्मात्रात्मनाहं स्थिता, एवंविधं ममैश्वर्यं पश्यध्वम् ॥ ४५ ॥ अपरमघटितघटनसामर्थ्यरूपमैश्वर्यमाह—स्वमाययेति । स्वसम्बन्धिनी या मायाशक्तिः परमस्वातन्त्र्यरूपा, तया अहं स्वं स्वात्मानमज्ञात्वाऽज्ञानावृतं कृत्वा संसरन्ती चिरादनादिकालाद् जननमरणप्रवाहपतिता सती शिष्यस्य पदं स्वरूपं

१. चितिः—क०।

नित्यमुक्ता पुनर्मुक्ता भूयो भूयो भवाम्यहम् ।
निरुपादानसम्भारं सृजामि जगदीदृशम् ॥४७॥
इत्यादि सन्ति बहुधा ममैश्वर्यपरम्पराः ।
न तद् गणयितुं शक्यं सहस्रवदनेन वा ॥४८॥
शृण्वन्तु संग्रहाद् वक्ष्ये मदैश्वर्यस्य लेशतः ।
जगद्यात्रा[1] विचित्रेयं सर्वतः संप्रसारिता ॥४९॥
मम[2] ज्ञानं बहुविधं द्वैताद्वैतादिभेदतः ।
परापरविभेदाच्च बहुधा चापि तत्फलम् ॥५०॥
द्वैतज्ञानं तु विविधं द्वितीयालम्बनं यतः ।

प्राप्ता भूत्वा, भूयः पुनः, गुरोः सकाशात् स्वात्मानमात्मतत्त्वं विदित्वा मुक्ता भवामीति सम्बन्धः ॥ ४६ ॥ एतद[एवम]विद्यादेर्मायिकत्वेन सत्यबन्धाभावान्नित्यमुक्तापि वारं वारं पुनर्मुक्ता भवामि । अथ च ईदृशमनन्तविचित्रं जगन्निरुपादानसम्भारं यथा तथा उपादानादिकारणसामग्रीं विनैव सृजामि ॥ ४७ ॥ तद् ऐश्वर्यं सहस्रवदनेन आदिशेषेणापि न गणयितुं शक्यम् । अनन्तत्वादिति भावः ॥ ४८ ॥ ऐश्वर्यस्यानन्तत्वमेव भङ्ग्यन्तरेणाह—शृण्वन्त्विति । जगद्रूपी यात्रा व्यवहारोऽवभास इति यावत् । इयमनाद्यनन्ता सर्वापरोक्षभूता सम्प्रसारिता सम्यगबाधितस्थिरार्थक्रियार्हरूपेण प्रसारिता अवभासितेत्यर्थः ॥ ४९ ॥ एवं परात्मनः परापरम् ऐश्वर्यं च प्रतिपाद्य तदुद्भावितविद्याबन्धान्मोक्षसिद्धये चतुर्थप्रश्नोत्तरमाह—ममेति । बहुविधतामेवाह—द्वैतेति । द्वैतज्ञानमुपासनम् । अद्वैतमनुभवरूपम् । [3]परमपरोक्षम् । अपरं परोक्षम् । एवं ज्ञानस्य बहुविधत्वात् फलमपि बहुविधमित्याह—बहुधेति ॥५०॥ द्वैतज्ञानस्यानेकविधत्वे हेतुमाह—द्वितीयालम्बनं यत इति । यतो ध्यातुः स्वरूपातिरिक्तमूर्तिमन्त्रादिविविध-

१. द्वात्रा—क० । २. ममाज्ञानं—क० । ३. 'परम्' नास्ति—क० ।

ध्यानमेव तु तत्प्रोक्तं स्वप्नराज्यादिसम्मितम् ॥५१॥
तच्चापि सफलं ज्ञेयं नियत्या नियतं यतः ।
अपरं चापि विविधं तत्र मुख्यं तदेव हि ॥५२॥
प्रोक्तमुख्यापरमय[1]ध्यानं मुख्यफलक्रमम् ।
अद्वैतविज्ञानमेव परविज्ञानमीरितम् ॥५३॥

विषयकध्यानमेव द्वैतज्ञानमित्यर्थः । अस्य ज्ञानस्याद्वैतज्ञानादपकृष्टत्वं द्योतयितुं विशेषणम्—स्वप्नराज्यादिसम्मितम् । आदिना मनोराज्यादिसंग्रहः । ध्यानस्य स्मृत्यनुसन्धानरूपत्वेनाप्रामाण्यात् स्वप्नराज्यभ्रमतुल्यत्वमिति ध्येयम् ॥ ५१ ॥ ननु ध्यानात्मकद्वैतज्ञानस्य भ्रमतुल्यत्वे निष्फलत्वापत्तिरिति चेदाह—तच्चापीति । स्मृतिरूपमपीत्यर्थः । सफलमित्येव ज्ञेयम् । कथमेतदिति चेदाह—नियत्या नियतं यत इति । यद्यपि स्मृतेः सामान्यतोऽज्ञाननिवृत्तिरूपप्रकृतफलं साक्षात् पारम्पर्येण वा नास्ति, तथापि प्रोक्तस्मृतिविशेषाणां भगवन्नियतिशक्तिनियमितत्वाच्चित्तशोधनद्वारा प्रोक्तफलवत्त्वमिति ज्ञेयम् । ननु द्वैतज्ञानमालम्बनभेदान्नानाविधमित्युक्तम् । तत्र किं सर्वं समम्, उत यत्किञ्चिन्मुख्यमिति चेदाह—अपरं चेति । द्वैतं चेत्यर्थः ॥ ५२ ॥ किं तदिति चेदाह—प्रोक्तेति । "ब्रह्माण्डानामनेकानाम्" [ २०।३६ ] इत्यादिना प्रोक्तं यन्मुख्यमपरं रूपम्, तन्मयं तदेकविषयकं यद्ध्यानं तदेव मुख्यम् । कुत इति चेदाह—मुख्यफलक्रममिति । मुख्यः साक्षात्प्राप्यः फलस्य चित्तशुद्ध्यादेर्ज्ञानसाधनसमुदायस्य, क्रमः परम्परा यस्मादित्यर्थः । मुख्याऽपररूपध्यानेन साक्षाज्ज्ञानसाधनसम्पत्तिः, सदाशिवादिध्यानेन त्वेतद्ध्यानप्राप्तिद्वारेति ज्ञेयम् । ध्यानात्मकद्वैतज्ञानस्य साक्षादज्ञाननाशकत्वाभावेनैतस्मात् साक्षादज्ञाननाशकमद्वैतज्ञानमेव श्रेष्ठमित्याह—अद्वैतेति । परविज्ञानं श्रेष्ठविज्ञानम् ॥ ५३ ॥

---

१. मयं ध्यानं–क० ।

मामनाराध्य परमां चिरं विद्यां तु श्रीमतीम् ।
कथं प्राप्येत परमां विद्यामद्वैतसंज्ञिकाम् ॥५४॥
तदेवाद्वैतविज्ञानं केवला या परा चितिः ।
तस्याः शुद्धदशामर्शो द्वैतामर्शाभिभावकः ॥५५॥
चित्तं यदा स्वमात्मानं केवलं ह्यभिसम्पतेत् ।

नन्वलं द्वैतविज्ञानेनापकृष्टेन, सर्वैरद्वैतविज्ञानं श्रेष्ठमेवाश्रयितव्यमिति चेदाह—मामिति । श्रीमतीं विद्यां श्रीविद्याभिधानां परमां "शरीरेषु मूर्धेव" इत्युक्तरीत्या सगुणमन्मूर्तिषु सदाशिवादिषु सुमुख्याम् । चिरं बहुकालमनाराध्य कथमद्वैतविद्या प्राप्येत ? नैव प्राप्येतेति भावः । विद्यां ज्ञानम् ॥ ५४ ॥ एवं द्वैतज्ञानं निरूप्यापरोक्षात्मकं परमद्वैतज्ञानमाह—तदेवेति । केवला दृश्यद्वैतलेशवर्जिता, परा अनवच्छिन्ना या चितिः परस्वरूपत्वेन प्रोक्ता, तदेवाद्वैतविज्ञानम् । ननु प्रोक्तपररूपात्मककेवलचितेः चित्रस्य भित्तिरिवाज्ञानसहितजगदाश्रयत्वेन कथमज्ञाननिवर्तकत्वं स्यादिति चेदाह—तस्या इति । परचितेः या शुद्धदशा वेद्याभाससम्भेदवर्जितरूपा, ज्ञेयवर्जितसामान्यज्ञानरूपेति यावत्, तस्या आमर्शो निर्दुष्टप्रमाणेनापरोक्षज्ञानम् । स द्वैतामर्शाभिभावकः, द्वैतविषयो य आमर्शोऽवभासः, तस्याप्रामाण्यग्रहोत्पादनेनाभिभावकः तिरस्कारजनकः, अर्थक्रियोत्पादनानर्हत्वसम्पादक इति यावत् । यथा हि दर्पणे ज्ञाते तद्गतप्रतिबिम्बसर्पव्याघ्रादेर्भयाद्यर्थक्रियोत्पादनानर्हता, एवमिति तात्पर्यम् ॥ ५५ ॥ एतदेव भूयः स्फुटतयोपपादयति—चित्तमिति । यदा यस्मिन् काले केवलं दृश्याकारकलङ्करहितं परोक्षतो विदितं स्वं स्वरूपभूतमहंप्रत्ययिनमात्मानमखिलावस्थानुगतसामान्यचिद्रूपम् । केवलमिति चित्तेऽप्यन्वेति । केवलं विकल्पसंस्कारवर्जितं दृश्यविमुखोऽस्मि, आत्माभिमुखोऽस्मीत्यादिसविकल्पसमाधिदशास्थसंस्कारेणापि वर्जित-

तदेवानुविभातं स्याद् विज्ञानमृषिसत्तमाः ।।५६।।
श्रुतितो युक्तितो वापि केवलात्मविभासनम् ।
देहाद्यात्मावभासस्य नाशनं ज्ञानमुच्यते ।।५७।।
तदेव भवति ज्ञानं यज्ज्ञानेन तु किञ्चन ।
भासमानमपि क्वापि न विभायात् कथञ्चन ।।५८।।

मिति यावत्। एवंविधं चित्तं चितः प्रसरद्रूपज्ञानशक्तिः। अभिसम्पतेत् अभितः परिच्छेदवर्जनेन सर्वतः सम्यगेकीभावसमापत्त्या पतेत्। चित्तस्य शुद्धचिदात्मनि मज्जनेन तदेकीभावप्राप्त्या निर्विकल्पसमाधिर्यदा भवेदिति तात्पर्यम्। ततः समाधेर्व्युत्थितस्य तदेव समाधावनुभूतं शुद्धचिद्रूपमनुविभातं स्यात्तदेवाहमित्यखण्डाकारेण प्रत्यभिज्ञातं स्याद् भवेत्। तदेव प्रोक्तप्रत्यभिज्ञानमेव परं विज्ञानमित्युच्यत इति शेषः ॥ ५६ ॥ एवं परं ज्ञानं निरूप्यापरज्ञानस्वरूपं निरूपयति—श्रुतित इति। श्रुतितः साङ्गश्रवणेन। युक्तितो वापि केवलतर्केण वा। केवलात्मनो देहादिपरिच्छेदवर्जितचिदात्मनः। विभासनं विशेषतो निश्चयरूपेण परोक्षतो यद्भासनम्। तच्च किंविधं तदाह—देहादीति। देहप्राणादौ परिच्छिन्ने दृश्ये य आत्म[1]त्वावभासोऽहंप्रत्ययः, तस्य नाशनं तत्राप्रामाण्यग्राहकम्, एवंविधकेवलात्मविभासनमपरज्ञानमुच्यते। ननु युक्तितो वापीति केवलतर्केण ज्ञानोपपादनमद्वैतशास्त्रविरुद्धमिति चेदुच्यते—श्रवणादिकं विनोत्तमाधिकारिणामनुपायाख्यज्ञानस्य केवलतर्कमात्रजनितस्यागमेष्वभ्युपगतत्वात्। यदुक्तम्—"उत्तमानां तु विज्ञानं गुरुशास्त्रानपेक्षणम्" इति। प्रसिद्धाश्चाकृतश्रवणा ज्ञानिनो वामदेवकर्कटिकादयः॥ ५७ ॥ एवं परापरज्ञाने क्रमान्निरूप्य भूयः [2]फलोद्देशेन द्वैतज्ञानाद्विवेचनाय परं ज्ञानं श्लोकपञ्चकेनाह—तदेवेति।

१. आत्माव–क० ख०। फलादेशेन–क०।

तदेवाद्वैतविज्ञानं यद्विज्ञानेन किञ्चन ।
अविज्ञातं नैव भवेत् कदाचिल्लेशतोऽपि च ॥५९॥
सर्वविज्ञानात्मरूपं यद्विज्ञानं भवेत् खलु ।
तदेवाद्वैतविज्ञानं परमं तापसोत्तमाः ॥६०॥
जाते यादृशविज्ञाने संशयाश्चिरसम्भृताः ।
वायुनेवाभ्रजालानि विलीयन्ते परं हि तत् ॥६१॥

यत्किञ्चन दृश्यं भासमानमपि क्वापि क्वचिदपि यज्ज्ञानेन कथञ्चन केनापि प्रकारेण न विभायाद् ज्ञातदर्पणतत्त्वस्य तत्प्रतिबिम्बमिव न पृथक्सत्त्वेन विशेषादबाधितत्वेन भायात्, तदेव परं ज्ञानं भवतीत्यर्थः ॥ ५८ ॥ यथा हि दर्पणतत्त्वज्ञानेन प्रतिबिम्बं लेशतोऽपि कदाचिदपि प्रतिबिम्बकालेऽन्यदा वाऽविज्ञातं न भवेत्, तथा यद्विज्ञानेन यत्किञ्चनापि दृश्यमविज्ञातं न भवेत् तदेवाद्वैतविज्ञानम् ॥ ५९ ॥ सर्वेषां घटादिव्यावृत्तविषयाणां परिच्छिन्नविशेष[1]-ज्ञानानां प्रतिबिम्बपरिच्छिन्नदर्पणांशानां महादर्पण इवात्मरूपं यद्विज्ञानं भवेत् । खल्वित्येवार्थः । आत्मस्वरूपमेव न कथञ्चिदन्यथेति तात्पर्यम् । तदेव परममद्वैतविज्ञानम् । ननु प्रत्यभिज्ञात्मकं ज्ञानं कथं सर्वज्ञानात्मरूपम्, प्रत्यभिज्ञाविषयस्य शुद्धचितस्तथात्वं स्यादिति चेदुच्यते—दर्पणान्तःप्रतिबिम्बदर्पणान्तरांशवत्तयोरत्यन्तमभेदप्रत्ययेन तथाव्यवहारसम्भवात् ॥ ६० ॥ यथा दर्पणतत्त्वे ज्ञाते तत्प्रतिबिम्बस्वरूपगताखिलसंशया दर्पणमात्रत्वनिश्चयेन विलीयन्ते, तथा यादृशविज्ञाने जाते सति प्रधानप्रकृतिका वा सृष्टिः परमाणुप्रकृतिका वेति दृश्यगताः, देहो वाहं प्राणो वेत्यादिद्रष्टृगताश्च संशयाश्चिरादनादिकालात् सम्भृता हृदि निहिता विलीयन्ते । वायुनेवाभ्रजालानीति विलये विलम्बाभावद्योतनाय । तत् ज्ञानम् ॥ ६१ ॥

१. विषय—क० ।

कामादिवासनाः सर्वा यस्मिन् सन्ति न किञ्चन ।
स्युर्भग्नदंष्ट्राहिरिव तद्विज्ञानं परं स्मृतम् ॥६२॥
विज्ञानस्य फलं सर्वदुःखानां विलयो भवेत् ।
अत्यन्ताभयसंप्राप्तिर्मोक्ष इत्युच्यते फलम् ॥६३॥
भयं द्वितीयसङ्कल्पादद्वैते विदिते दृढम् ।
कुतः स्याद् द्वैतसङ्कल्पस्तमः सूर्योदये यथा ॥६४॥
ऋषयो न भयं क्वापि द्वैतसङ्कल्पवर्जने ।

यथा[1] ज्ञातदर्पणतत्त्वस्य तत्प्रतिबिम्बगताखिलकामद्वेषादिवासनाविलयः, एवं यस्मिन् ज्ञाते सति दृश्यगतकामाद्यखिलवासना न किञ्चनेति निःस्वरूपा लुप्ता भवेयुरिति तात्पर्यम्। प्रारब्धादिवशात् काश्चन वासना अलुप्ता अपि भग्नदंष्ट्राहिरिव स्युः। यथा हि भग्नविषदंष्ट्रः सर्पो न मरणाद्यनर्थावहः, तथा ता वासना न जन्मान्तररूपानर्थप्रदाः, "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" [ ब्र० सू० ४।१।१३ ] इति न्यायेन तत्कामादिवासनया कृतकर्मफलासंश्लेषात् ॥ ६२ ॥ एवं ज्ञानं निरूप्य फलं निरूपयति—विज्ञानस्येति। सर्वदुःखानां शारीरादीनाम्। यद्यपि सर्वदुःखविलयः सुषुप्त्यादावस्ति, तथापि भाविदुःखसम्भावनया भयमस्तीत्यत आह—अत्यन्तेति। एष एव मोक्ष इत्युच्यते ॥ ६३ ॥ कुतोऽस्यात्यन्ताभयसम्प्राप्तिरिति चेदाह—भयमिति। अयं व्याघ्रोऽयं वृश्चिक इत्यादिद्वितीयसङ्कल्पादेव लोके भयं प्रसिद्धम्, सुषुप्तौ द्वैतसङ्कल्पाभावेन भयाभावात्। अद्वैते दृढ विदिते सति निःसन्दिग्धाद्वैतज्ञाने सति तेन ज्ञानेनाविद्याया नष्टत्वेन निमित्ताभावान्न पुनर्द्वैतसङ्कल्प इत्याह—कुत इति। यथा दर्पणाद्वयतत्त्वे विदिते पुनस्तत्प्रतिबिम्बेषु न द्वितीयत्वनिश्चय एवं प्रकृतेऽपीति भावः ॥ ६४ ॥ भयनिमित्तद्वैतसङ्कल्पवर्जने भय-

---

१. तथा—क० ख० ।

अतो यत्फलमन्यत् स्यात्तद्भयं सर्वथा भवेत् ॥६५॥
अन्तवत्तु द्वितीयं स्याद् भूयो लोके समीक्षणात् ।
सान्ते भयं सर्वथैवाभयं तस्मात् कुतो भवेत् ॥६६॥
संयोगो विप्रयोगान्तः सर्वथैव विभावितः ।
फलयोगोऽपि तस्माद्धि विनश्येदिति निश्चयः ॥६७॥
यावदन्यत् फलं प्रोक्तं भयं तावत्प्रकीर्तितम् ।
तदेवाभयरूपं तु फलं सर्वे प्रचक्षते ॥६८॥

सम्भावनापि नास्तीत्याह—ऋषय इति । क्वापि देशे काले वा । एवं द्वैतसङ्कल्पवर्जितं स्वरूपमेव फलं मोक्षात्मकमित्युक्त्वा स्वरूपातिरिक्तस्य नाभयात्मकफलत्वमित्याह—अत इति । निरुक्तस्वरूपस्यैव फलत्वात् । स्वरूपादन्यत्तु भयप्रदत्वाद् भयमेवेत्यर्थः ॥ ६५ ॥ तस्य भयप्रदत्वमेव साधयितुमाह—अन्तवदिति । नाशवदित्यर्थः । द्वितीयम् अन्यत् । कुत एतदवगतमिति चेदाह—भूय इति । लोके पुत्रकलत्रगृहधनादेरन्यस्यान्तवत्त्वस्य बहुधा दृष्टत्वादित्यर्थः । अतः सान्ते नश्वरे सर्वथैव भयं भवेत् । ततोऽभयं सान्तात् कुतो भवेत् ॥ ६६ ॥ एवमन्यस्य स्वरूपतोऽन्तवत्त्वेन भयप्रदत्वमुपपाद्य तत्सम्बन्धस्यापि तथात्वाद् भयप्रदत्वमाह—संयोग इति । सम्बन्ध इत्यर्थः । विप्रयोगान्तः विप्रयोगो वियोगः स्वरूपनाशः, सोऽन्ते यस्य, सम्बन्धो नश्वर इति यावत् । एवंविधः सम्बन्धः सर्वैर्विभावितो दृष्टः । अतः फलस्य योगः सम्बन्धोऽपि नश्येदेव ॥ ६७ ॥ तस्मादन्यफलं स्वरूपतः [1]सम्बन्धतश्चानित्यमिति भयप्रदमेवेत्याह—यावदिति । तस्माद्यदात्मस्वरूपादनन्यदेव मोक्षाख्यं फलमद्वैतशास्त्रोक्तं तदेवाभयरूपं फलमिति सर्वे पण्डिताः प्रकृष्टत्वेन कथयन्तीत्याह—तदेवेति । [2]यत्तदेवेति सम्बन्धः॥६८॥

१. सम्बन्धतस्तस्मादनि- क० ख० ।
२. एतदे-ख० ।

यदात्मनोऽनन्यदेव फलं मोक्षः प्रकीर्तितः ।
ज्ञाता ज्ञानं ज्ञेयमपि फलं चैकं यदा भवेत् ॥६९॥
तदा हि परमो मोक्षः सर्वभीतिविवर्जितः ।
ज्ञानं विकल्पसङ्कल्पहानं मौढ्यविवर्जितम् ॥७०॥
ज्ञातुः स्वच्छात्मरूपं तदादावनुपलक्षितम् ।
उपलक्षक[1] एवातो गुरुः शास्त्रं च नेतरत् ॥७१॥

यदात्मनोऽनन्यत्तदेवाभयरूपं फलं सर्वे प्रचक्षते । एवंविधं फलमेव मोक्षः प्रकीर्तित इति योजना । मोक्षाख्यं फलमद्वितीयात्मस्वरूपमेवेत्येतद्विविच्य प्रदर्शयितुमाह—ज्ञातेत्यादिना । यदा ज्ञातृज्ञानज्ञेयफलानां भेदानवभासादेकत्वं भवेत् तदेत्यन्वयः ॥ ६९ ॥ परमः द्वैतशास्त्रप्रसिद्धादुत्कृष्टो मोक्षो भवेत् । अत्र हेतुगर्भं विशेषणम्—सर्वभीतिविवर्जित इति । [2]इतोऽन्यो मोक्षो न सर्वभीतिविवर्जित इति तात्पर्यम् । ज्ञात्रादीनां स्वरूपोद्देशपूर्वकमेकत्वमुपपादयति—ज्ञानमिति । विकल्पात्मकाद्वैतविषया ये सङ्कल्पाश्चित्तवृत्तिविशेषाः, तेषां हानं वर्जनं यत्र । एतच्च सुषुप्त्यादावप्यस्तीति चेदाह--मौढ्यविवर्जितमिति । शुद्धस्वरूपस्फुरणं ज्ञानमिति भावः ॥७०॥ एतदेव ज्ञातुः स्वरूपमित्याह — ज्ञातुरिति । नन्वेवंविधस्वरूपमेव ज्ञानं चेत्तदादावपि स्थितमेवेति चेदाह— स्वच्छात्मरूपमिति । सङ्कल्पमौढ्याभ्यां वर्जितं स्वरूपं पूर्वं न स्थितमिति भावः । ननु ज्ञानान्तरालादिनिर्विकल्पदशासु स्थितमेवेति चेदाह— आदावनुपलक्षितमिति । स्थितमपि तन्नोपलक्षितं न परिचितम् , निर्विकल्पत्वेनाननुभूतत्वादिति तात्पर्यम् । अतो ज्ञानस्य स्वस्वरूपानतिरिक्तत्वाद् मोहेनानुपलक्षितस्वरूपस्य मोहनिरसनोपायेनोपलक्षक एव गुरुः शास्त्रं च । नेतरदिति । न तयोर्व्यापारान्तरमस्तीत्यर्थः ॥ ७१ ॥

---

१. उपदेशक—क० ।

२. यतो—क० ।

एतदेव हि विज्ञेयस्वरूपमभिधीयते ।
ज्ञातृज्ञानज्ञेयगतो यावद् भेदोऽवभासते ॥७२॥
तावज्ज्ञाता ज्ञानमपि ज्ञेयं वा न भवेत् क्वचित् ।
यदा भेदो विगलितो ज्ञात्रादीनां मिथः स्थितः ॥७३॥
तदा ज्ञात्रादिसम्पत्तिरेतदेव फलं स्मृतम् ।
ज्ञात्रादिफलपर्यन्तं न भेदो वस्तुतो भवेत् ॥७४॥
व्यवहारप्रसिद्धयर्थं भेदस्तत्र प्रकल्पितः ।
अतोऽपूर्वं लभ्यमत्र फलं नास्त्येव किञ्चन ॥७५॥
आत्मैव मायया ज्ञातृज्ञानज्ञेयफलात्मना ।

एतदेव सङ्कल्पमौढ्यवर्जितं संविद्रूपमेव । एवं ज्ञातृज्ञानज्ञेयानामेकरूपतामुपपाद्यैतदेव ज्ञात्रादीनां वास्तवं रूपमित्याह—ज्ञात्रेति । सङ्कल्पावर्जनेन यावद्भेदोऽवभासते ॥ ७२ ॥ तावज्ज्ञात्रादीनां भासमानं स्वरूपं न वास्तवं भवेदित्याह—तावदिति । यदा सर्वथा सङ्कल्पवर्जनेन ज्ञात्रादीनां मिथो भासमानो भेदो विगलितो भवेत्, तदा ज्ञात्रादीनां सत्यस्वरूपसम्पत्तिरित्यन्वयः ॥ ७३ ॥ एतदेवेति । एवंविधज्ञात्रादिरूपमेवेत्यर्थः । फलं परमोक्षाख्यं स्मृतम् । ननु ज्ञातृज्ञेयफलानामैक्येऽपि चित्तवृत्तिरूपप्रत्यभिज्ञात्मकज्ञानस्य कथं तदैक्यमिति चेदुच्यते—चित्तं हि जडशक्त्यावृतपरिच्छिन्नचैतन्यमेव । तद्वृत्तिविशेषो हि प्रत्यभिज्ञानमखण्डचैतन्याकारम् । तेनाज्ञाननिवृत्तौ परिच्छेदकजडशक्तेर्विलयाच्चित्तत्त्वे[1] विलीने तत्प्रत्यभिज्ञानमेव पूर्णचैतन्यतां प्राप्तमिति तदैक्यमवर्जनीयमेवेति । तस्मान्न ज्ञात्रादिफलान्तानां वस्तुतो भेद इत्याह—ज्ञात्रादीति ॥ ७४ ॥ ननु तर्हि कथं शास्त्रेषु ज्ञात्रादिभेदव्यवहार इति चेत् ? उपदेशार्थं प्रकल्पित इत्याह—व्यवहारेति । तत्र शास्त्रेषु । अतः ज्ञात्रादीनामभेदात् ॥ ७५ ॥ यावदविद्यया भेदसङ्कल्पनं तावदय-

१. चित्ते—क० ।

यावद्भाति भवेत्तावत् संसारो ह्यचलोपमः ॥७६॥
यदा[1] कथञ्चिदेतत्तु भायाद् भेदविवर्जितम् ।
संसारो विलयं यायाच्छिन्नाभ्रमिव वायुना ॥७७॥
एवंविधमहामोक्षे तत्परत्वं हि साधनम् ।
तत्परत्वे तु संपूर्णे नान्यत् साधनमिष्यते ॥७८॥
अपूर्णे तत्परत्वे तु किं सहस्रसुसाधनैः ।
तस्मात्तात्पर्यमेव स्यान्मुख्यं मोक्षस्य साधनम् ॥७९॥
तात्पर्यं सर्वथैतत्तु साधयामीति संस्थितिः ।
यस्तात्पर्येण संयुक्तः सर्वथा मुक्त एव सः ॥८०॥

मविद्यावभासितो जननमरणादिरूपः संसारः सुस्थिर इत्याह—आत्मैवेति । मायया अविद्यया ॥ ७६ ॥ यदा यस्मिन् काले, कथञ्चिद् अतिदुर्घटेन देवतानुग्रहैकमूलकेन सद्गुरूपदेशादिना । एतद् ज्ञात्रादिविभेदावभासं सर्वं भेदविवर्जितमेव भायात् । तदा विलयं यायात् । विलये निःशेषत्वविलम्बाभावयोर्द्योतनाय दृष्टान्तः—छिन्नाभ्रमिति । महासमुदायाद्विच्छिन्नमभ्रखण्डमित्यर्थः ॥ ७७ ॥ एवं फलं प्रतिपाद्य साधनमाह—एवमिति । महामोक्षे पूर्णमोक्षे । तत्परत्वस्यैव मुख्यसाधनत्वं वक्तुमाह—तत्परत्व इति । इष्यते फलसाधनायोपयुज्यते ॥ ७८ ॥ व्यतिरेकतोऽपि मुख्यतामाह—अपूर्ण इति । किं सहस्रसुसाधनैः सम्यक्साधनप्रचयैरपि न फलोदय इति भावः । तस्माद् एवमन्वयव्यतिरेकात् ॥ ७९ ॥ तात्पर्यं तत्परत्वम् । तत्स्वरूपमाह—सर्वथेति । एतत्तु एतदेव, प्रकृतं मोक्षाख्यं फलमेव । एतदवश्यं साधयिष्यामीति तत्साधनसम्पादने विलम्बासहनप्रयोजकचित्तवृत्तिविशेषः । मुक्त एव स इति । तत्साधनस्यावश्यफलपर्यन्तत्वाद् मुक्तप्राय एवेत्यर्थः

1. यथा—क० ।

दिनैर्मासैर्वत्सरैर्वा मुक्तः स्याद्वाऽन्यजन्मनि ।
बुद्धिनैर्मल्यभेदेन चिरशीघ्रव्यवस्थितिः ॥८१॥
बुद्धौ तु बहवो दोषाः सन्ति सर्वार्थनाशनाः ।
यैर्जनाः सततं त्वेवं पच्यन्ते घोरसंसृतौ ॥८२॥
तत्राद्यः स्यादनाश्वासो द्वितीयः कामवासना ।
तृतीयो जाड्यता प्रोक्ता त्रिधैवं दोषसंग्रहः ॥८३॥
द्विविधः स्यादनाश्वासः संशयश्च विपर्ययः ।
मोक्षोऽस्ति नास्ति वेत्याद्यः संशयः समुदाहृतः ॥८४॥
नास्त्येव मोक्ष इत्याद्यो भवेदत्र विपर्ययः ।
एतद्द्वयं तु तात्पर्ये मुख्यं स्यात् प्रतिबन्धकम् ॥८५॥

॥ ८० ॥ फलस्यावश्यंभावित्वमेवाह—दिनैरिति । ननु कथं साधनपरिपूर्तविकाकारायां कालविलम्बवैषम्यमिति चेदाह—बुद्धिनैर्मल्येति । बुद्धेर्मालिन्यतारतम्येन कालविलम्बतारतम्यमिति भावः ॥ ८१ ॥ बुद्धिमालिन्यमेव निरूपयति—बुद्धौ त्विति । सर्वेषां धर्मादिपुरुषार्थानां नाशनाः । यैः दोषैः । एवं जननमरणादिप्राप्त्या । पच्यन्त इति । दुःखमनुभवन्तीति तात्पर्यम् ॥ ८२ ॥ तानेव गणयति—तत्रेति । दोषेष्वित्यर्थः । अनाश्वासोऽविश्वासः, शास्त्रार्थेष्विदमित्थमेव भवेदिति दृढसम्भावनाऽभावः । अस्याद्यत्वं साधनप्रतिबन्धकेषु मुख्यत्वेन । कामवासना विषयाभिलाषादिः । जाड्यता जडत्वम् , शास्त्रार्थाग्रहणनिमित्तं चित्तस्य तमोऽशरूपं मौढ्यम् । संग्रह इति । विस्तारस्त्वेतेषां शाखोपशाखा[1]भूतोऽनन्त इति भावः ॥ ८३ ॥ आद्यस्यावान्तरभेदमाह—द्विविध इति । तत्स्वरूपमेवाह—मोक्ष इति । एतच्चोपलक्षणं मुक्तस्य पुनरावृत्तिरस्ति नास्ति वेत्यादेः ॥ ८४ ॥ मोक्षो नास्त्येवेति विपर्ययः । आद्यशब्देन पुनरावृत्तिरस्त्येवेत्यादिः । एवंविधानाश्वासस्य

१: शाखास्वाभू–क० ।

विपरीतनिश्चयेन नश्येदेतद् द्वयं क्रमात् ।
अत्रोपायो मुख्यतमो मूलच्छेदो न चापरः ॥८६॥
अनाश्वासस्य मूलं तु विरुद्धतर्कचिन्तनम् ।
तत्परित्यज्य सत्तर्कावर्तनस्य प्रसाधने ॥८७॥
विपरीतो निश्चयः स्याद् मूलच्छेदनपूर्वकः ।
ततः श्रद्धासमुदयादनाश्वासः प्रणश्यति ॥८८॥
कामादिवासना बुद्धेः श्रवणे प्रतिबन्धिका ।
कामादिवासनाविष्टा बुद्धिर्नैव प्रवर्तते ॥८९॥

प्रतिबद्धत्रयमाह—एतद् द्वयं त्विति । द्वयमेवेत्यर्थः । प्रारब्धस्यापि साधारणप्रतिबन्धकत्वान्मुख्यमिति[1] ॥ ८५ ॥ एतन्निरसने उपायमाह—विपरीतेति । मोक्षो भवेदेवेति दृढसम्भावनारूपः प्रोक्तसंशयादेर्विपरीतो निश्चयः । एतद् द्वयं प्रोक्तसंशयो विपर्ययश्च । क्रमादिति । निश्चयस्य स्वसंस्कारानुवृत्तिरूपदार्ढ्यतारतम्यक्रमात् संशयादिसंस्कारानुवृत्तेः क्रमान्नाश इति भावः । संशयविपर्ययसत्त्वे कथं निश्चयोदय इति चेत्, साधनमाह—अत्रेति । निश्चये इत्यर्थः ॥ ८६ ॥ कोऽयं मूलच्छेद इति चेदाह—अनाश्वासस्येति । आश्वासविरुद्धतर्कचिन्तनम् । [2]तद् विरुद्धतर्कचिन्तनं परित्यज्य । सत्तर्कस्य प्रोक्तसम्भावनात्मकाश्वासानुकूलतर्कस्य । आवर्तनस्य प्रसाधनमभ्यसनं तदनुवर्तनानुकूलमानसव्यापारः । तस्मिन् कृते सति ॥ ८७ ॥ विपरीतनिश्चयः प्रोक्तसम्भावनारूपः । मूलच्छेदनपूर्वकः विपरीततर्कनिमित्तसंस्कारच्छेदनपूर्वकः । ततः तदनन्तरम् । श्रद्धायाः प्रोक्तभावनाया उदयात् । अत्र विपरीतनिश्चयरूपभावनैव दृढा सती श्रद्धेत्युच्यते । प्रणश्यति निवर्तते ॥८८॥ द्वितीयदोषप्रतिबद्धत्रयमाह—कामादीति । बुद्धेः प्रतिबन्धिका । श्रुतार्थस्य बुद्धावनवतारनिमित्तम् । गुरूक्तार्थे सा बुद्धिर्नैव प्रवर्तते तमर्थं नैव

---

१. मुख्यत्वमिति—क० । २. 'तद् विरुद्धतर्कचिन्तनम्' नास्ति—ग० ।

लोकेऽपि कामी काम्यस्य सदा ध्यानैकतत्परः ।
पुरःस्थितं न पश्येच्च श्रोत्रोक्तं शृणुयान्न च ॥९०॥
कामादिवासितस्यैवं श्रुतं चाश्रुतसम्मितम् ।
कामादिवासनां तस्माज्जयेद् वैराग्यसम्पदा ॥९१॥
सन्ति कामक्रोधमुखा वासनास्तु सहस्रशः ।
तत्र कामो मूलभूतस्तन्नाशे नहि किञ्चन ॥९२॥
ततो वैराग्यसंयोगाद्[1] नाशयेत् कामवासनाम् ।
आशा हि कामः संप्रोक्त एतन्मे स्यादिति स्थिता ॥९३॥
शक्येषु स्थूलभूता सा सूक्ष्माऽशक्येषु संस्थिता ।

गृह्णाति ॥८९॥ अत्रार्थे लोकप्रसिद्धिमुपपादयति—लोकेऽपीति । काम्यस्य कामितस्य स्त्रीधनादेः । श्रोत्रोक्तं कर्णे उच्चरितमपि शब्दं न शृणुयात् ॥ ९० ॥ तस्मात् कामादिवासितस्य कामादिवासनाविष्टचित्तस्य । एवं प्रोक्तध्यानतत्परत्वात् । श्रुतमपि हृदयानारोहादश्रुतेन सम्मितं तुल्यं भवेत् । तस्मात् श्रवणप्रतिबन्धकत्वात् । वैराग्यस्य वैतृष्ण्यस्य सम्पदा सम्पत्त्या जयेत् ॥ ९१ ॥ कामादिवासनेत्यत्रादिपदार्थं कामवासनाया मुख्यत्वं चाह—सन्तीति । कामवासना क्रोधवासना । आद्यर्थकमुख[2]पदेन लोभमदमात्सर्यादिवासनाः । कामो विषयेच्छा । क्रोधोऽयं मेऽपकारी सर्वथा हन्तव्य इत्यादिचित्तवृत्तिः । तत्तद्विषयदर्शनमात्रेण झटिति कामाद्युद्भवनिमित्तः संस्कारश्चित्तगतो वासनेति ज्ञेयम् । क्रोधादीनां काममूलकत्वात् कामो मुख्य इत्याह—तत्रेति । तासु वासनास्वित्यर्थः । नहि किञ्चन क्रोधादिकं भवेदिति शेषः ॥९२॥ ततः कामस्य मुख्यत्वात् । कामस्वरूपमाह—आशेति । इति स्थिता आशा ॥ ९३ ॥ तस्यानन्ततामाह—शक्येष्विति । प्राप्तुं शक्येषु स्त्रीधनादिषु । स्थूलभूता इदं मे स्यादितीच्छारूपा । अशक्येषु ब्रह्माण्डभेद-

१. संपन्नो—ग० । २. मुख्य—क० ख० ।

दृढवैराग्ययोगेन सर्वां तां प्रविनाशयेत् ॥९४॥
तत्र मूलं काम्यदोषपरामर्शः प्रतिक्षणम् ।
वैमुख्यं विषयेभ्यश्च वासना नाशयेदिति ॥९५॥
यस्तृतीयो बुद्धिदोषो जाड्यरूपो व्यवस्थितः ।
असाध्यः सोऽभ्यासमुखैः सर्वथा ऋषिसत्तमाः ॥९६॥
येन तात्पर्यतश्चापि श्रुतं बुद्धिमनारुहेत् ।
तज्जाड्यं हि महान् दोषः पुरुषार्थविनाशनः ॥९७॥
तत्रात्मदेवतासेवामृते नान्यद्धि कारणम् ।
सेवायास्तारतम्येन जाड्यं तस्य हराम्यहम् ॥९८॥

नादिषु। सूक्ष्मा प्रोक्तसंस्काररूपा। दृढवैराग्ययोगेन सार्वकालिकस्य श्मशानवैराग्यादिभिन्नतीव्रवैराग्यस्य योगेन सम्पत्त्या। सर्वां स्थूलां सूक्ष्मां च। तां वासनाम् ॥ ९४ ॥ तत्र दृढवैराग्ये। काम्यस्य स्त्रीधनादेर्भोग्यविषयस्य, दोषः[1] नश्वरत्व-नाशेन दुःखप्रदत्व-संभावित-नाशानुसन्धानेन भयहेतुत्वादिरूपः[१], तस्य परामर्शोऽनुसन्धानम्। विषयेभ्यो वैमुख्यं विषयस्वरूपस्यानुसन्धानाभावो देहयात्रानुपयुक्ताधिकासेवनं च ॥ ९५ ॥ जाड्यरूपः प्राक्कृतदुष्कर्मनिमित्तकतमोंऽशप्रचुरता। अभ्यासाद्यैर्निवर्तयितुमसाध्यः ॥ ९६ ॥ अस्तु किं तेनैकेन? अन्यसाधनपौष्कल्यात् फलं भविष्यतीति चेदाह—येनेति। स्थितेन जाड्येनेत्यर्थः। चकारादितरनिखिलसाधनसंग्रहः। पुरुषार्थस्याज्ञाननिवृत्तेर्मोक्षस्य वा। विनाशनः प्रतिबन्धकः ॥ ९७ ॥ तत्र जाड्यनाशने। ममात्मदेवतारूपायाः सेवां जपपूजाध्यानादिरूपाम् ऋते

---

1. नश्वरत्वरूपः, नाशेन दुःखप्रदत्वरूपः, संभावितनाशानुसन्धानेन भयहेतुत्वादिरूपश्च दोष इति ग्रन्थयोजना।

१. 'भयहेतुत्वादिरूपः' इत्यस्याग्रे '[नश्वरत्वेन, नाशेन दुःखप्रदत्वेन, सम्भावितनाशानुसन्धानेन भयहेतुत्वादिरूपः]' इत्येवं कोष्ठके स्थापितः पाठो दृश्यते कपुस्तके। मूलमातृकायां टिप्पणीरूपेण स्थितः स्यादिति संभाव्यते।

जाड्याल्पानल्पभावेन सद्यो वा परजन्मनि ।
भवेत्तस्य फलप्राप्तिर्जाड्यसंयुक्तचेतसः ॥९९॥
सर्वसाधनसम्पत्तिर्ममैव प्रणिधानतः ।
उपयाति च यो भक्त्या सर्वदा मामकैतवात् ॥१००॥
स साधनप्रत्यनीकं विधूयाशु कृती भवेत् ।
यस्तु मामीश्वरीं सर्वबुद्धिप्रसरकारिणीम् ॥१०१॥
अनादृत्य साधनैकपरः स्याद् मूढभावतः ।
पदे पदे विहन्येत फलं प्राप्येत वा न वा ॥१०२॥
तस्मात्तु ऋषयो मुख्यं तात्पर्यं साधनं भवेत् ।
एवं तात्पर्यवानेव साधकः परमः स्मृतः ॥१०३॥

विना ॥ ९८ ॥ जाड्याल्पेति । जाड्याल्पत्वे सेवानल्पत्वे सद्यः, जाड्यसेवयोरल्पत्वेऽनल्पत्वे वा चिरकालात्, [1]जाड्यानल्पत्वे सेवाल्पत्वे परजन्मनि इति विवेकः ॥ ९९ ॥ एवं जाड्यनाशे मत्सेवाहेतुरित्युक्त्वा जाड्यरहितानामप्येतदावश्यकमित्याह—सर्वेति । सर्वेषां तत्परत्ववासनानाशादिरूपाणां सत्सङ्गादीनां च साधनानां सम्पत्तिः। प्रणिधानतः ध्यानादिरूपसेवनात् । भवेदिति शेषः । एतदेव स्पष्टमाह—उपयातीति । सेवत इत्यर्थः । भक्त्या अनवच्छिन्नानुरागेण । अकैतवादकापट्यात्, निष्कामनयेति भावः ॥ १०० ॥ सः एवंविधोपासकः । प्रत्यनीकं विघ्नम् । कृती कृतार्थः । यः साधकः । सर्वेषां बुद्धेः प्रसरः प्रवृत्तिः, तत्करणशीलाम् ॥ १०१ ॥ अनादृत्य अनुपगम्य । अत एव मूढभावनः मूढचित्तः । विहन्येत विघ्नैर्हतो भवेत् । फलप्राप्तावपि संशय एवेत्याह—फलमिति ॥ १०२ ॥ साधननिरूपणमुपसंहरति—तस्मादिति । तात्पर्यवतः फलाभावस्य बुद्धिदोषकृतत्वादिति भावः । वैराग्यशमादिकं प्रतिबन्धनिवर्तकम् । देवतोपासनं कार्यसाधारणकारणम् । अतस्तत्परत्वमेवात्र मुख्यं कारणमिति भावः । साधक-

1. जाड्याल्पत्वे--क० ख० ।

तत्र मद्भक्तियुक्तस्तु साधकः सर्वपूजितः ।
सिद्धिरात्मव्यवसितिर्देहानात्मत्वभावना ॥१०४॥
आत्मत्वभावनं नूनं शरीरादिषु संस्थितम् ।
तदभावनमात्रं तु सिद्धिर्मौढ्यविवर्जितम् ॥१०५॥
आत्मा व्यवसितः सर्वैरपि नो केवलात्मना ।
अत एव तु सम्प्राप्ता महानर्थपरम्परा ॥१०६॥
तस्मात् केवलचिन्मात्रं यद् देहाद्यवभासकम् ।

माह--एवमिति । प्रोक्तमुख्यतात्पर्यवानेव मुख्यसाधक इत्यर्थः ॥ १०३ ॥ तत्र तत्परतावत्सु । मद्भक्तियुक्तः मय्यनुरक्तः, मत्सेवापर इति यावत् । सर्वपूजितः साधकोत्तम इत्यर्थः । तत्साधनस्यावश्यक-फलान्तत्वात् । एवं साधकमुक्त्वा सिद्धिं निरूपयति—सिद्धिरिति । आत्मनो व्यवसितिर्व्यवसायो निश्चयः । सा व्यवसितिः किंविधेति चेदाह—देहेति । देहे देहादावनात्मत्वभावनं यतः शुद्धात्मस्व-रूपनिश्चयाद्देहप्राणादावनात्मत्वाभिमानो भवेदिति तात्पर्यम् ॥१०४॥ [1]एतदेव पुनर्विशदयति--आत्मत्वेति । आत्मत्वस्य भावनमनुवृत्तानुभव-संस्काररूपोऽभिमानः । सर्वेषां सदा संस्थितम् । तदभावनमिति । शरीरादावात्मत्वस्याभावनं विपरीतनिश्चयेन तत्संस्कारानुवृत्त्युच्छेद-नम् । एतन्मात्रमेव सिद्धिः । नन्वेवंविधसंस्कारानुवृत्त्यभावः सुषुप्ता-वस्तीति चेदाह—मौढ्यविवर्जितमिति । यद्यपि सुषुप्तावप्यस्ति संस्कार-स्तथापि तस्य विलीनत्वेनोच्छिन्नप्रायत्वं ज्ञेयम् । यद्वा प्रकृतिलय-रूपसांख्यादिमोक्षव्यावृत्त्यर्थमिति ज्ञेयम् ॥ १०५ ॥ देहानात्मभावने विशेषेण फलमुपपादयति—आत्मेति । सर्वैरपि व्यवसितः । नो केवला-त्मना न देहादिव्यवच्छेदेन, किन्तु देहादिमयत्वेन । अत एव देहाद्यविवेकादेव सर्वैरज्ञैः प्राप्ता ॥ १०६ ॥ तस्मात् अविवेकस्यानर्थ-

१. तदेव—क० ख० ।

तन्मात्रात्मव्यवसितिः सर्वसंशयनाशिनी ॥१०७॥
सिद्धिरित्युच्यते प्राज्ञैर्नातः सिद्धिरनन्तरा ।
सिद्धयः खेचरत्वाद्या अणिमाद्यास्तथैव च ॥१०८॥
आत्मविज्ञानसिद्धेस्तु कलां नार्हन्ति षोडशीम् ।
ताः सर्वास्तु परिच्छिन्नाः सिद्धयो देशकालतः ॥१०९॥
इयं स्यादपरिच्छिन्नाः स्वात्मविद्या शिवात्मिका।
स्वात्मविद्यासाधनेषु ताः सर्वाः सुप्रतिष्ठिताः ॥११०॥
आत्मविद्याविधावेतास्त्वन्तरायप्रयोजकाः ।

हेतुत्वात् । यत्प्रकाशेन देहप्राणाद्यवभासते, एवंविधं यत्केवलं चिन्मात्रं तन्मात्रे आत्मव्यवसितिरहंविमर्शः । सर्वेषां स्वात्मरूपादिविषयाणां संशयानां नाशिनी सिद्धिरित्युच्यत इत्यन्वयः । एवं च चिदात्मनः स्वप्रकाशरूपत्वेन सर्वदाऽहमिति भासमानत्वान्नापूर्वं तस्य भासनम्, अपि तु देहाद्यविवेकेन भासमानस्य तद्विवेकेन तदभावनमेव सिद्धिरिति ॥ १०७ ॥ अतः आत्मव्यवसितिरूपसिद्धेः । अनन्तरा एतदनन्तरं फलत्वेन लभ्या नास्ति । ननु खेचरत्वादिसिद्धयोऽन्याः सन्तीति चेदाह—सिद्धय इति । खेचरत्वपरकायप्रवेशाद्या अणिमलघिमाद्याः ॥१०८॥ नैतदंशेनापि ताः समा इत्याह—आत्मेति । कला षोडशोंऽशः । तत्साम्यमपि नार्हन्तीत्यर्थः । कुत एवमिति चेदाह—ता इति । खेचरत्वाद्याः, तासां ब्रह्माण्डान्तर्ब्रह्मकल्पपर्यन्तमेव सत्त्वमिति देशकालपरिच्छिन्नाः ॥ १०९ ॥ इयमात्मज्ञानरूपा सिद्धिः । स्वात्मेति । पूर्णचिदानन्दरूपशिवात्मकस्वात्मज्ञानरूपत्वान्न कालदेशव्यवधानमिति भावः । तासामेतदन्तर्भूतत्वं निरूपयति—स्वात्मेति । ताः सिद्धयः । सुप्रतिष्ठिताः ज्ञानसाधनैकदेशसाध्या एवेत्यर्थ ॥ ११० ॥ नन्वेवं चेज्ज्ञानिषु ताः सिद्धयः कुतो न दृश्यन्त इति चेदाह—आत्मविद्येति । आत्मविद्याया विधौ प्राप्तौ एताः सिद्धयः, अन्तरायस्य

किं ताभिरिन्द्रजालात्मसिद्धितुल्याभिरीहितम् ॥१११॥
यस्य साक्षाद् ब्रह्मपदमपि स्यात्तृणसम्मितम् ।
कियन्त्येताः सिद्धयो वै कालक्षपणहेतवः ॥११२॥
तस्मात् सिद्धिर्नेतरा स्यादात्मविज्ञानसिद्धितः ।
ययाऽत्यन्तशोकनाशो भवेदानन्दसान्द्रता ॥११३॥
सैव सिद्धिर्नेतरा तु मृत्युग्रासविमोचिनी ।
इयमात्मज्ञानसिद्धिर्विविधाभ्यासभेदतः ॥११४॥
बुद्धिनैर्मल्यभेदाच्च परिपाकविभेदतः ।
संक्षेपतस्तु त्रिविधा चोत्तमा मध्यमाऽधमा ॥११५॥

विघ्नस्य, प्रयोजकाः निमित्तभूताः । अतस्तीव्रमुमुक्षूणामन्तरायरूपासु तासु न प्रवृत्तिरिति भावः । कुत एवंविधमहाफलेषु न प्रवृत्तिरिति चेदाह—किं ताभिरिति । इन्द्रजालरूपसिद्धितुल्याभिः फल्गुभिस्ताभिः खेचरत्वादिसिद्धिभिरीहितमीप्सितं मोक्षाख्यं प्राप्यते किम् ? नाप्यत इत्यर्थः ॥ १११ ॥ कुत एतदलौकिकं खेचरत्वाद्यप्यनीहितमिति चेदाह—यस्येति । मुमुक्षोः ब्रह्मपदं सत्यलोकः, साक्षात् प्राप्तमपीति शेषः । संमितं तुल्यम् । तस्यैताः सिद्धयः कियन्ति ज्ञानान्तरायत्वेन कालक्षपणहेतवः ॥ ११२ ॥ तस्मात् फल्गुत्वाद् विज्ञानसिद्धेरन्याऽधिका नास्येवेत्यर्थः । कुत इति चेदसाधारणं ज्ञानफलमाह—ययेति । ज्ञानसिद्ध्येत्यर्थः । आनन्दसान्द्रता आनन्दैकरसता ॥ ११३ ॥ सैव एवंविधफलदैव । मृत्योर्ग्रसनं ग्रासः । तद्विमोचनं नान्यसिद्धेरिति भावः । एवं सिद्धिं निरूप्य तस्याः पूर्णत्वरूपपाकं वक्तुमुपक्रमते—इयमिति । अभ्यासस्य भेदतस्तारतम्यात् ॥११४॥ बुद्धीति । अभ्यासस्य बुद्धिनैर्मल्यस्य च तारतम्याद् ज्ञानसिद्धिपरिपाकोऽप्युत्तमादिभेदेन त्रिविधः । देहाद्यतिरिक्तशुद्धचिद्रूपस्याहमिति प्रत्यक्षविमर्शनं ज्ञानसिद्धिः । तस्याभ्यासः तदेकाकारविमर्शधारानुरूपः परिपाकभेद

लोके द्विजानामृषयः [1]पठितश्रुतिसम्मिता ।
मेधया च महाभ्यासाद् व्यापारशतसंकुला ॥११६॥
अप्यस्खलितवर्णा या पठिता श्रुतिरुत्तमा ।
समाहितस्य व्यापारेऽसमाहितस्य चान्यदा ॥११७॥
पूर्ववद्याऽप्यस्खलिता पठिता मध्यमा श्रुतिः ।
या सदा ह्यनुसन्धानयोगादेव भवेत्तथा ॥११८॥
पठिता श्रुतिरत्यन्तास्खलिता त्वधमा[2] हि सा ।
एवमेवात्मविज्ञानसिद्धिरुक्ता त्रिधर्षयः ॥११९॥
या महांव्यवहारेषु प्रतिसन्धानवर्जने ।
अन्यदा तद्वर्जने वा सर्वदा प्रतिसन्धितः ॥१२०॥

इति भावः ॥ ११५ ॥ एतदेव निरूपयितुं दृष्टान्तमाह—लोक इति । ऋषय इति सम्बोधनम् । द्विजानां या पठिता धारणाध्ययनेन सम्यग् धृता श्रुतिर्वेदः, तत्संमिता तत्तुल्या । पठितश्रुतेस्त्रैविध्यमाह—मेधयेति । धारणावत्या बुद्ध्येत्यर्थः । अभ्यास आवर्तनादिरूपः ॥ ११६ ॥ अपीति । अतिमेधावतातिशयाभ्यासेन धृता श्रुतिः व्यापारशतसङ्कुलापि पठनसमयेऽनेकव्यापारं कुर्वतोऽपि, अस्खलितवर्णा । वर्णेत्युपलक्षणं स्वरस्यापि । वर्णस्वरविपर्ययरहिता या श्रुतिः पठिता सोत्तमा । व्यापारकाले समाहितस्य श्रुत्यानुपूर्वीगतचित्तस्याऽव्यापारेऽसमाहितस्य याऽस्खलिता सा मध्यमा ॥ ११७ ॥ पूर्ववद् वर्णादिष्वस्खलिता या श्रुतिः । अनुसन्धानयोगात् समाहितत्वादेव । तथा अस्खलिता ॥ ११८ ॥ अधमा । दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयति— एवमेवेति ॥ ११९ ॥ या ज्ञानसिद्धिः ज्ञानस्थितिः । महाव्यवहारेषु राज्यकृत्यादिरूपव्यापारेषु सत्स्वपि । प्रतिसन्धानवर्जने समाहितत्वाभावेऽपि । अन्यदा व्यापाराभावे प्रतिसन्धानवर्जने ।

१. पठिता श्रुति—क० । २. मध्यमा—क० ।

अन्यूनाधिकभावा स्यात्सोत्तमा मध्यमाऽधमा ।
अत्रोत्तमैव संसिद्धेः परा काष्ठा निरूपिता ॥१२१॥
स्वप्नादिष्वप्यवस्थासु यदा स्यात्परमा स्थितिः ।
विचारक्षणतुल्येत्र सिद्धिः सा परमोत्तमा ॥१२२॥
सर्वत्र व्यवहारेषु यत्नात् संस्कारबोधतः ।
यदा प्रवृत्तिः सिद्धेः सा परा काष्ठा समीरिता ॥१२३॥
अयत्नेनैव परमे स्थितिः संवेदनात्मनि ।
अव्याहता यदा सिद्धिस्तदा काष्ठां समागता ॥१२४॥
व्यवहारपरो भावान् पश्यन्नपि न पश्यति ।
द्वैतं तदा हि सा सिद्धिः पूर्णतामभिसङ्गता ॥१२५॥
जागरादौ व्यवहरन्नपि निद्रितवद् यदा ।

सर्वदा प्रतिसन्धाने सत्येव । अन्यूनाधिकभावा स्यादित्यन्वयः ॥१२०॥ अन्यूनेति । अविस्मरणादिनैकरूपतेति तात्पर्यम् । सा ज्ञानसिद्धिस्त्रयाणां क्रमादुत्तमा मध्यमाऽधमा चेत्यर्थः । अत्र तिसृषु ज्ञानसिद्धिषु मध्ये उत्तमैव ज्ञानसिद्धेः परा काष्ठा ॥ १२१ ॥ एवं ज्ञानसिद्धेः परां काष्ठां सदृष्टान्तं निरूप्य भूय एतदेव प्रकारान्तरैः स्वगतपरगततत्सिद्धेर्ज्ञानाय निरूपयति—स्वप्नेत्यादि । आद्यशब्देन बाह्यसङ्कल्पावस्था । विचारक्षणसदृशी शरीराद्यहंभाववर्जनेन शुद्धचिन्मात्राहंभावरूपा ॥१२२॥ स्वतः प्रवृत्तौ संस्कारो न प्रबुध्यते । किन्तु आहार्यज्ञान इव स्वप्रयत्नेन संस्कारोद्बोधेन यदा प्रवृत्तिः ॥ १२३ ॥ अयत्नेनैवेति । यथा हि लौकिकानामयत्नेनैव बाह्यप्रवृत्तिः, तथा संवेदनात्मनि परमे देहाद्यनवच्छिन्ने, अव्याहताऽविच्छिन्ना स्थितिः ॥ १२४ ॥ एवं स्वगते ज्ञानसिद्धिपराकाष्ठाज्ञानाय तत्प्रकारमुक्त्वा परगतज्ञानायाह—व्यवहारेति । भावान् पश्यन्नपि द्वैतं न पश्यति । द्वैतादर्शनप्रयुक्तव्यवहारस्खालित्यं कादाचित्कमन्यैर्ज्ञातुं शक्यमेव ॥ १२५ ॥ जागरादाविति ।

स्थितिस्तदा हि सा सिद्धिः पूर्णतामभिसङ्गता ॥१२६॥
एवं सिद्धिमनुप्राप्तः सिद्धेषूत्तम उच्यते ।
व्यवहारपरो नित्यं न समाधिं विमुञ्चति ॥१२७॥
कदाचिदपि मेधावी स सिद्धेषूत्तमो मतः ।
ज्ञानिनां विविधानां च स्थितिं जानाति सर्वदा ॥१२८॥
स्वानुभूत्या स्वान्तरेव स सिद्धेषूत्तमो मतः ।
संशयो वापि कामो वा यस्य नास्त्येव लेशतः ॥१२९॥
निर्भयो व्यवहारेषु स सिद्धेषूत्तमो मतः ।
सर्वं सुखञ्च दुःखञ्च व्यवहारञ्च जागतम् ॥१३०॥
स्वात्मन्येवाभिजानाति स सिद्धेषूत्तमो मतः ।
अत्यन्तं बद्धमात्मानं मुक्तं चापि प्रपश्यति ॥१३१॥

पूर्वोत्तरानुसन्धानस्य विच्छेदान्निद्रितवत् स्थितिः ॥ १२६ ॥ मुख्यभूतं चरमप्रश्नं प्रतिवदति—एवमिति । प्रोक्तपराकाष्ठात्मकज्ञानसिद्धिमनुप्राप्तः । मुख्यप्रश्नार्थत्वाद् भूयो बहुप्रकारैरेतन्निरूपयति—व्यवहारेति । व्यवहारपरस्यापि न समाधिविच्छेद इति भावः ॥ १२७ ॥ कदाचिन्न मुञ्चतीति सम्बन्धः । मेधावी एवंविधधारणाप्रकर्षवान् । विविधानाम् उत्तममध्यमादीनां सर्वदा विद्यमानां स्थितिं जानाति ॥ १२८ ॥ स्वानुभूत्येति । अहेः पादानिवाहय इति न्यायेन स्वान्तःस्थितसर्वस्थित्यनुभवेन । संशय इति । तन्मूलाविद्याया नष्टत्वादिति भावः ॥ १२९ ॥ निर्भय इति । हानिलाभाद्यनुसन्धानाभावादिति भावः । व्यवहारं दर्शनस्पर्शनादिरूपं जगत्सम्बन्धि ॥ १३० ॥ स्वात्मनीति । दर्पणवज्जगद्व्यवहारप्रतिबिम्बाश्रयत्वेन स्वात्मनो ज्ञातत्वात् । अत्यन्तेति । स्वात्मनः सामान्यचिद्रूपत्वेन ज्ञातत्वात् स्वात्मतादात्म्यापन्नमेव सर्वं बद्धं मुक्तं च जीवं पश्यति । तस्य सर्वानुस्यूतत्वेन सर्वात्मत्वात् ॥ १३१ ॥

य: स्वात्मनि तु सर्वात्मा स सिद्धेषूत्तमो मतः ।
यः पश्यन् बन्धजालानि सर्वदा स्वात्मनि स्फुटम् ॥१३२॥
मोक्षं नापेक्षते क्वापि स सिद्धेषूत्तमो मतः ।
सिद्धोत्तमोऽहमेवेह न भेदस्त्वावयोः क्वचित् ॥१३३॥
एतद्व ऋषयः प्रोक्तं सुस्पष्टमनुयुक्तया ।
एतन्मयोक्तं विज्ञाय न क्वचित् परिमुह्यति ॥१३४॥
इत्युक्त्वा सा परा विद्या विरराम भृगूद्वह ।
श्रुत्वैतदृषयः सर्वं सन्देहमपहाय च ॥१३५॥
नत्वा शिवादीन् लोकेशान् जग्मुः स्वं स्वं निवेशनम् ।
विद्यागीता मयैषा ते प्रोक्ता पापौघनाशिनी ॥१३६॥
श्रुता विचारिता सम्यक् स्वात्मसाम्राज्यदायिनी ।
विद्यागीताऽत्युत्तमेयं साक्षाद्विद्यानिरूपिता ॥१३७॥
पठतां प्रत्यहं प्रीता ज्ञानं दिशति सा स्वयम् ।

स्वस्य सर्वात्मत्वेन सर्वाधिष्ठानत्वेन सर्वजीवबन्धं स्वात्मनि जानन्नपि तदसत्यत्वनिश्चयान्मोक्षं नापेक्षते ॥ १३२ ॥ क्वापि कदाचिदपि । सिद्धोत्तमं स्तौति—सिद्धोत्तम इति । इह जगति ॥१३३॥ उपसंहरति—एतदिति । प्रश्नानामुत्तरमित्यर्थः । अनुयुक्तया पृष्टया । जनो न परिमुह्यति ॥ १३४ ॥ विद्यागीतामुपसंहरति—इत्युक्त्वेति । अपहाय त्यक्त्वा ॥ १३५ ॥ निवेशनं स्थानम् । गीतां स्तौति—पापौघेति । श्रुता अर्थतोऽवगता पापौघनाशिनी ॥ १३६ ॥ विचारिता भूयो मननेन हृदयङ्गमीकृता । स्वात्मसाम्राज्यं पूर्णानन्दस्वरूपात्मिका मुक्तिः । इतरगीताभ्योऽत्युत्तमा । तत्र हेतुः—साक्षाद्विद्येति । अन्यगीतानिरूपकश्रीकृष्णादेः शरीरित्वेन समायत्वसम्भवादिति ध्येयम् ॥ १३७ ॥ ज्ञातुमसमर्थानां केवलं पठतामपि विद्याप्रसादेन क्रमात् फलं स्यादित्याह—पठतामिति । संसारनिमित्ताविद्यात्मकान्धकारसमुद्रमग्नानामुद्धारेण

संसारतिमिराम्भोधौ मज्जतां तरणिर्भवेत् ॥१३८॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे विद्यागीतानाम
विंशतितमोऽध्यायः ॥



तारकमित्याह— संसारेति । तरणिर्नौका सूर्यो वा ॥ १३८ ॥

यथामति मया गीता विद्योक्ता विवृता क्रमात् ।
श्रीविद्यापादकमले सम्यग् भूयात् समर्पिता ॥
क्वाहं मन्दमतिर्विद्यागीता क्व गहनाशया ।
यत्नोऽयं स्वात्मशुद्ध्यर्थं तत्संसर्गान्मया कृतः ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
विद्यागीताव्याख्यानं विंशतितमोऽध्यायः ॥



# अथैकविंशोऽध्यायः

श्रुत्वेत्थं भार्गवो रामो दत्तात्रेयमुनीरितम् ।
अविद्याजालविभ्रान्तेर्मुक्तप्रायो बभूव ह ॥ १ ॥
पुनः पप्रच्छात्रिसुतं किञ्चिन्नत्वा सुभक्तितः ।
भगवन् ब्रूहि [1]विज्ञानसाधनं सुविनिश्चितम् ॥ २ ॥
सारभूतं च सुलभं यत् साक्षात् फलदायकम् ।
ज्ञानिनां लक्षणं चापि येन ज्ञास्यामि तान् द्रुतम् ॥ ३ ॥
ज्ञानिनां देहसंयोगे वियोगे च स्थितिं [2]तथा ।
व्यवहारं कुर्वतां चाप्यनासक्तं मनः कथम् ॥ ४ ॥
एतत् सर्वं सुकृपया स्पष्टं मे वक्तुमर्हसि ।
एवमत्रिसुतः पृष्टो जमदग्निसुतेन वै ॥ ५ ॥
सन्तुष्टः प्राह करुणासिन्धुः सम्बोध्य भार्गवम् ।
शृणु राम प्रवक्ष्यामि रहस्यं ज्ञानसाधनम् ॥ ६ ॥

अत्र वारिपपद्यैस्तु मुख्यं ज्ञानस्य साधनम् ।
लक्षणं शास्त्रतत्त्वं च प्रश्नोत्तरतयोदितम् ॥

भार्गवप्रश्नमवतारयति—श्रुत्वेत्थमिति । सन्देहशेषस्य विद्यमानत्वादाह—मुक्तप्राय इति ॥ १ ॥ किञ्चित् पप्रच्छ ॥ २ ॥ प्राक्साधनं भूयः प्रोक्तमिति चेदाह—सारभूतमित्यादि । तान् ज्ञानिनः ॥ ३ ॥ देहसंयोगेत्यादि । देहसंयोग[3]वियोगयोः देहभानाभानयोः, स्थितिं देहद्वारा व्यवहारं कुर्वतां ज्ञानिनाम्, अनासक्तं वासनारहितम् ॥ ४ ॥ एतत्सर्वं साधनादिकम् ॥ ५ ॥ सम्यक्प्रश्नेन भक्तियुक्तेन सन्तुष्टः । रहस्यं शास्त्रेष्वप्रसिद्धम् ॥ ६ ॥

१. विज्ञानं—ख० । २. यथा—क० । ३. 'वियोग' नास्ति—क० ।

ज्ञानस्य साधनं मुख्यं देवतानुग्रहः परः ।
यः सर्वभावतः स्वात्मदेवतामुपसङ्गतः ॥ ७ ॥
तस्य ज्ञानं सुसुलभं भवतीति विनिश्चयः ।
एतत् सर्वोत्तमं राम प्रोक्तं ज्ञानस्य साधनम् ॥ ८ ॥
अन्यानपेक्षमेतत्तु फलसंसाधने क्षमम् ।
एतद्विहायान्यदत्र न सम्यक् फलदं भवेत् ॥ ९ ॥
शृण्वत्र कारणं राम सकारणमिदं भवेत् ।
विज्ञानं केवलचितिर्या सर्वस्यावभासिका ॥१०॥
तस्यावभासरूपायाः कल्पितावरणं तु यत् ।
विचारात् तदपोहेन तत्स्वरूपोपलक्षणम् ॥११॥

परः मुख्योऽनुग्रहः । अयं मे परमभक्तः, एतद्वाञ्छितमवश्यं पूरणीयमिति स्वीयत्वेन ग्रहणम् । अनुग्रहे कारणमाह—सर्वभावत इति । वाङ्मनःकर्मभिः । उपसङ्गतः सामीप्यं सम्यक्प्राप्तः, सततमत्यक्तदेवताभावन इति तात्पर्यम् । जपध्यानकर्मैकपरः स्वात्मदेवतां स्वान्तर्यामितया स्थिताम् ।७॥ तस्य प्रोक्तदेवतातत्परस्य । एतत् देवतातत्परत्वम् । रहस्यशास्त्रेषु प्रोक्तम् ॥ ८ ॥ सर्वोत्तमत्वमुपपादयति—अन्येति । एतत् तत्परत्वम् । तुरवधारणे, एतदेवेत्यर्थः । क्षमं समर्थम् । एतत् तत्परत्वम् । अन्यत् श्रवणादि । न सम्यक्फलदम् । देवतानुग्रहं विना केवलश्रवणाद्यैः फलपर्यवसायि ज्ञानं न भवेदिति भावः ॥ ९ ॥ अत्र अनुग्रहं विना न फलमित्यत्र । इदं तत्परत्वेनावश्यं फलमिति । सकारणं दृष्टकारणयुतम् । एतदेवोपपादयति—विज्ञानमिति । फलभूतं विज्ञानम् । सर्वावभासिका केवला सामान्या चितिः ॥ १० ॥ तस्याः स्वप्रकाशात्मभूतायाः कथं फलत्वमिति चेदाह—तस्या इति । सन्धिरार्षः । चितेः स्वस्वातन्त्र्यपरिकल्पितं यदावरणमविद्याख्यम् । विचाराच्छ्रवणादिरूपात् । तस्यावरणस्यापोहेन नाशेन । तस्याः केवलचितेः स्वरूपस्योपलक्षणं सोऽहमिति प्रत्यभिज्ञानं स्यात् ॥ ११ ॥

तच्चान्येषां बहिर्भावतत्पराणां सुदुर्लभम् ।
भक्तानामन्यपरताहानेन तत्परत्वतः ॥१२॥
सुलभं शीघ्रसम्प्राप्यं भवत्येव सुनिश्चितम् ।
देवतातत्परस्त्वेवं भूत्वा स्वल्पान्यसाधनः ॥१३॥
ज्ञात्वा कथञ्चिदात्मानमन्यान् प्रति निरूपयेत् ।
निरूपयन् सदा राम समावेशं समाप्नुयात् ॥१४॥
एवं निरूपणाद्यैस्तु समावेशे दृढे सति ।
शिवतामाप्य तच्चित्तं हर्षोद्वेगविवर्जितम् ॥१५॥
यत्र यत्र व्रजति तत् सर्वं तच्छिवसात्कृतम् ।
करोत्युत्तमविज्ञानी जीवन्मुक्तपदस्थितः ॥१६॥
तस्मात् सुभक्तियोगेनान्येभ्यो भूयो निरूपणम् ।

तच्च स्वरूपोपलक्षणं च । चकारेण फलं केवलात्मना स्थित्यादि । देवतापराणां कथं सुलभमिति चेदाह—भक्तानामिति ॥ १२ ॥ सुलभमिति । स्त्रीधनादिबहिर्भावपराणां मनसो बहिर्मुखत्वेन दुर्लभम्, स्वात्मदेवतापराणां मनसो बहिर्मुखत्वाभावात् सुलभमिति भावः । देवतातत्परस्य सुलभतयैव ज्ञानतत्फलोदयक्रममाह—देवतेति । एवं वाङ्मनःकर्मभिर्देवतातत्परो भूत्वा स्वल्पानि तात्कालिकानि वैराग्याद्यन्यसाधनानि यस्य ॥ १३ ॥ कथञ्चित् परोक्षतोऽपरोक्षतो वा । अन्यान् जिज्ञासून् । सदा सर्वकाले । समावेशं तदाकारचित्तताम् ॥ १४ ॥ एवं समाविष्टमनसा । निरूपणाद्यैः निरूपणस्वरूपानुन्धानैः । समावेशस्य दार्ढ्यम् अप्रयत्नेन चित्तस्य तदाकारताम् । शिवतां शुद्धचिदात्मैकरूपताम् । अत एव हर्षोद्वेगविवर्जितम् ॥ १५ ॥ यत्र यत्र दृश्ये । तच्चित्तम् । तद् दृश्यं सर्वं शिवसात्कृतं शिवैकरूपं करोति । [1]दृश्यसम्बन्धेऽपि चिदात्माकारतां न परित्यजतीति भावः ॥ १६ ॥ तस्माद् एवंरीत्या

१. दृश्ये—क० ख० ।

श्रेष्ठं साधनमेतत्तु नान्यदेतत्समं भवेत् ॥१७॥
भक्त्या निरूपणसमं न भवेदन्यसाधनम् ।
ज्ञानिनां लक्षणं राम दुर्विज्ञेयं भवेत् खलु ॥१८॥
यतः सर्वान्तरं तत्तु नेत्रवागाद्यगोचरम् ।
न निरूपयितुं शक्यं लक्षितुं वाऽपरैः क्वचित् ॥१९॥
यथा शास्त्रज्ञता लोके त्वन्यैर्न ज्ञायते क्वचित् ।
देहवस्त्रभूषणाद्यैरेवमन्यैर्न वेद्यते ॥२०॥
विद्वत्ता हि स्वसंवित्तिमात्रवेद्या न चान्यथा ।
यथा संस्वादितरसरसज्ञत्वं हि भार्गव ॥२१॥
तथापि चतुरैर्विद्यावद्भिस्तद्भाषणादिभिः ।
वेद्यते हि यथा स्वस्य मार्गः सूक्ष्मपिपीलकैः ॥२२॥
सन्ति स्थूललक्षणानि त्वनेकान्तानि तानि तु ।
सूक्ष्मलक्ष्माणि चान्यानि दुर्विज्ञेयानि वै परैः ॥२३॥

महाफलप्राप्तेः । एतत्समं भक्तियोगपूर्वकदेवतातत्परतया सह स्वात्मतत्त्वनिरूपणसमम् ॥ १७ ॥ द्वितीयप्रश्नोत्तरं वक्तुमाह—ज्ञानिनामिति ॥ १८ ॥ ज्ञानिनः शुद्धचिन्मात्ररूपेणावस्थितत्वात् तत्स्वरूपं देहादेः सर्वस्यान्तरम् । अत एवाह- नेत्रेत्यादि । अत एवाह—न निरूपयितुमिति । लक्षितुं लक्षणयुक्तत्वेन ज्ञातुम् ॥ १९ ॥ अत्र दृष्टान्तः—यथेति । ज्ञानित्वं न वेद्यते ॥ २० ॥ यथा मधुरादिरसज्ञता स्वानुभवमात्रवेद्यैवं ज्ञानित्वमपीत्याह—विद्वत्तेति । रससम्बन्धि रसज्ञत्वम् ॥ २१ ॥ तथापि दुर्विज्ञेयत्वेऽपि । तस्य ज्ञानिनो भाषणमुखप्रसादाद्यैः । अत्र दृष्टान्तः—यथेति । सूक्ष्मपिपीलिकानां मार्गो यथा तैरेव वेद्यते, एवं ज्ञानिलक्षणं ज्ञानिमात्रवेद्यमिति भावः ॥२२॥ ननु शान्त्यादिस्थूललक्षणानि सन्तीति चेत्तानि व्यभिचरितानीत्याह—सन्तीति । परैः अज्ञानिभिः ॥ २३ ॥

निरूपणं भाषणं च साधनाभिनयस्तथा ।
ज्ञानिनामिव चान्यैस्तु कर्तुं शक्यो हि लक्ष्यते ॥२४॥
अनिर्मलान्तःकरणैरभ्यस्तं ज्ञानसाधनम् ।
स्थिरीभवति यत्तेषां लक्षणं तत् प्रकीर्तितम् ॥२५॥
यस्य मानावमानौ च लाभालाभौ जयाजयौ ।
नेषद्विशेषितुं शक्तौ विद्यात् तं ज्ञानिषूत्तमम् ॥२६॥
स्वात्मानुभववार्तासु पृष्टो गूढार्थमप्युत ।
असन्दिग्धः प्रतिवदेद् झटिति ज्ञानिषूत्तमः ॥२७॥
यस्योत्साहो भवेद् ज्ञानवार्तास्वतितरां किल ।
निरूपणे ह्यवैमुख्यं ज्ञानिनो लक्षणं हि तत् ॥२८॥
अनारम्भः स्वभावेन सन्तोषः शुचिचित्तता ।
महापत्स्वपि शान्तात्मा स भवेज्ज्ञानिषूत्तमः ॥२९॥
एतदादीनि लक्ष्माणि भार्गवोत्तम ज्ञानिनाम् ।

स्थूललक्षणानां व्यभिचारमुपपादयति—निरूपणमित्यादि । साधनस्य वैराग्यादेरभिनयः परप्रदर्शनार्थं तच्चिह्नस्य धारणम् । अन्यैरज्ञानिभिर्दाम्भिकैः ॥ २४ ॥ अस्तु तानि स्थूललक्षणानि कानीति चेदाह—अनिर्मलेति । निर्मलान्तःकरणानां ज्ञानसाधनवैराग्याद्यभ्यासो नोपयुक्त इति तात्पर्यम् । यत्साधनं स्थिरीभवति अप्रयत्नेन स्थितं भवति ॥ २५ ॥ तदेवाह—यस्येति । संमानादिभिर्यस्य मुखादौ प्रसादादिविशेषो न भवेदिति तात्पर्यम् ॥ २६ ॥ गूढार्थं समाध्यनुभवादिकम् । झटिति अविमृश्यैव । अनुभूतार्थस्य निरूपणे हि न सन्देहो नापि कालविलम्ब इति प्रसिद्धमेव ॥ २७ ॥ ज्ञानप्रक्रियानिरूपणे अविमुखता सोन्मुखता ॥ २८ ॥ अनारम्भः अप्रवृत्तिः । स्वभावेन यत्नं विनैव । चित्तस्याबहिर्मुखता शुचिचित्तता कामादिरहितता । शान्तात्मा उद्वेगहीनः ॥ २९ ॥ आदिना दृश्यानभिष्वङ्गादि । स्वात्मनो ज्ञानित्व-

स्वात्मनस्तु परीक्षायां सुस्थिराणि न संशयः ॥३०॥
साधकस्तु सदा स्वात्मपरीक्षातत्परो भवेत् ।
यथा परीक्षणेऽन्यस्य निपुणः संप्रवर्तते ॥३१॥
तथा परीक्षन् स्वात्मानं सिद्धिं न कथमाप्नुयात् ।
यदाऽन्यगुणदोषाणामविचारणतत्परः ॥३२॥
स्वीयानां गुणदोषाणां विचारपरमो भवेत् ।
तदा सर्वसाधनानां प्राप्त्या सिद्धिमुपैष्यति ॥३३॥
एवं प्रोक्तानि लक्ष्माणि ज्ञानिनां भृगुनन्दन ।
स्वात्मनस्तु परीक्षायामुपयुक्तानि सर्वथा ॥३४॥
अन्येषां तु परीक्षायामनेकान्तान्यमूनि तु ।
यतो ये ज्ञानिनोऽत्यन्तशुद्धस्वान्ता भृगूद्वह ॥३५॥
तेषामापातसंसिद्धसाधनैः सिद्धिरास्थिता ।

परीक्षणे सुस्थिराणि अव्यभिचरितानि, परस्यैतान्यारोपितान्यनारोपितानि च विवेक्तुमशक्यानि । ततो न परज्ञानित्वलक्षणानीति भावः ॥ ३० ॥ ननु स्वपरीक्षणं व्यर्थमेवेति चेन्नेत्याह—साधक इति । निपुणः सूक्ष्मार्थविचारचतुरः ॥ ३१ ॥ न कथमाप्नुयात्, आप्नुयादेवेत्यर्थः । परीक्षाप्रकारमाह—यदेति । परगुणदोषविचारपरस्य स्वगुणाद्यनुसन्धानं न भवेदिति भावः ॥ ३२ ॥ विचारपरमः विचारपरः । तदा स्वगुणदोषविचारे कृते सति । दोषाणां हानेन गुणानामुपादानेन ज्ञानसाधनसम्पत्त्या सिद्धिमेष्यति ॥ ३३ ॥ प्रोक्तार्थमुपसंहरति—एवमिति ॥ ३४ ॥ अनेकान्तानि व्यभिचरितानि । अमूनि लक्षणानि । प्राग् दम्भिष्वन्वयव्यभिचार उक्तः, सम्प्रति व्यतिरेकव्यभिचारमाह—यत इति । यस्मात् कारणादित्यर्थः ॥ ३५ ॥ स्वभावादेवापराधकर्मवासनारहिता ये तेषां तात्कालिकापातसाधनैरेव ज्ञानसिद्धौ पूर्वस्थितकामादिवासनाऽनिवृत्तेः पूर्ववदेव स्वव्यापारतत्परा अज्ञानि-

अतः पूर्ववासनानुरोधव्यापारतत्पराः ॥३६॥
कथं परीक्षणीयास्ते सामान्यव्यवहारिणः ।
ज्ञानिनस्तु तत्परीक्षां कुर्युरभ्यासवैभवात् ॥३७॥
आपातदर्शनादेव यथा रत्नपरीक्षकाः ।
मन्दज्ञानवतां देहसंस्था मूढसमैव हि ॥३८॥
यतो न तेषां सहजसमाधिप्राप्तिरस्ति हि ।
यावद् विमर्शनपरास्तावत्ते पूर्णरूपिणः ॥३९॥
यदा विचारविमुखास्तदा देहमयत्वतः ।
सुखदुःखजुषोऽत्यन्तं पशुतुल्यतया स्थिताः ॥४०॥
मध्ये मध्ये पूर्णदशासादनान्निर्वृता अपि ।
तेषां या सा पशुदशा सद्विमर्शान्तरालगा ॥४१॥

तुल्यव्यवहारिणः, तेषु प्रोक्तलक्षणाभावात् कथं ते परीक्षणीया इति भावः ॥ ३६ ॥ सामान्यः सर्वसाधारणो व्यवहारो येषा ते । ज्ञानिनां परीक्षा ज्ञानिभिः कर्तुं शक्येत्याह—ज्ञानिनस्त्विति । ज्ञानाभ्यासस्य वैभवाद् माहात्म्यात् ॥ ३७ ॥ आपातदर्शनादेव परीक्षां कुर्युरिति सम्बन्धः । अत्र दृष्टान्तः—यथेति । रत्नपरीक्षका हि रत्नस्वरूपपरिचयाभ्यासप्रकर्षमाहात्म्याद्यथा आपातदर्शनेऽपि इदं कृत्रिममकृत्रिममिति रत्नपरीक्षां कुर्युरेवं ज्ञानिनोऽपीत्यर्थः । एवं ज्ञानिलक्षणं निरूप्य तृतीयप्रश्नोत्तरं तत्स्थितिमाह—मन्देति । देहसंस्था देहाभिमानस्तन्निमित्तव्यापारस्तत्फलं च । मूढसमा अज्ञानितुल्या ॥३८॥ कुत एवमिति चेदाह—यत इति । सहजः सार्वकालिकः । तेषां कथं मूढसमत्वमिति चेदाह—यावदिति । विमर्शनं स्वरूपानुसंधानं पूर्णचिन्मात्ररूपिणः ॥३९॥ विचारविमुखास्त्यक्तानुसन्धानाः ॥४०॥ ननु तज्ज्ञानस्य बाधितत्वेन न ततो मोक्ष इति चेन्नेत्याह—मध्य इति । पूर्णदशानुसन्धानेन । निर्वृताः नष्टसंसारतापाः । तेषां पूर्णदशान्तरालगा पशुस्थितिर्न

न बन्धनाय भवति दग्धरज्जुरिव स्थिता ।
लाक्षारसैर्यदा वस्त्रप्रान्तयुग्मं सुरञ्जितम् ॥४२॥
व्याप्त्या वासोमध्यमपि सर्वं लाक्षारुणं भवेत् ।
एवं तस्य व्यवहृतिश्चिदामर्शनमध्यगा ॥४३॥
चिद्रूपात्मैकतां याता न ततो बन्धनाय सा ।
मध्यविज्ञानिनां देहसंयोगो नास्ति सर्वथा ॥४४॥
देहात्मत्वग्रहो देहसंयोगः प्रोच्यते बुधैः ।
स नास्ति मध्यविज्ञानवतो राम कदाचन ॥४५॥
अभ्यासातिशयात्तस्य मनो लीनं हि सर्वदा ।
सदा समाहितस्वान्तो व्यवहारो न तस्य हि ॥४६॥
यो देहयात्रानिर्वाहः सोऽपि तस्य सुषुप्तिवत् ।
यथा कश्चित् सुषुप्तिस्थो वासनामात्रतः क्वचित् ॥४७॥
किञ्चिदुक्त्वा च कृत्वा च न[1] पश्चाद्वेद किञ्चन ।

बन्धायेत्याह—तेषामिति ॥ ४१ ॥ तत्र दृष्टान्तः—दग्धेति । तत्पशुदशाया बन्धकत्वाभावमुपपादयति—लाक्षेति ॥ ४२ ॥ व्याप्त्येति । यथा वस्त्राञ्चलद्वयं लाक्षारसैः सुष्ठु रञ्जितं चेद् लाक्षारसस्य व्याप्त्या सर्वं वासोमध्यमपि लाक्षारुणं भवेत्, एवं तस्य मन्दज्ञानिनोऽनुसन्धानमध्यगः पशुदशाव्यवहारश्चिन्मात्रीभूतो न बन्धनायेति भावः ॥ ४३ ॥ मध्यज्ञानिनां स्थितिमाह—मध्येति ॥ ४४ ॥ कुतो विद्यमानदेहस्य सम्बन्धो नेति चेदाह—देहेति । स देहात्मत्वग्रहः ॥ ४५ ॥ कुतो नेति चेन्मनसो लयादित्याह—अभ्यासेति । लीनं सङ्कल्पवर्जनेन निरुद्धम् । तस्य मध्यज्ञानिनः ॥ ४६ ॥ भोजनादिव्यवहारस्तस्यास्तीति चेत्, तस्याकिञ्चित्करत्वमाह—य इति । कुत एवमिति चेत्तस्याभासत्वादिति सदृष्टान्तमाह—यथेति । वासना संस्कारः ॥ ४७ ॥ दृष्टान्तान्तरम्—

१. पश्चाद्वेद न—ख० ।

यथा च मदिरामत्तो वदन् कुर्वन्न वेद वै ॥४८॥
एवमेष[1] महायोगी लोकयात्राबहिर्गतः ।
किञ्चित् कदाचित् कुर्वंश्च न विजानाति तत्पुनः ॥४९॥
प्रारब्धवासनाभ्यां तु स देहो निर्वहेत् सदा ।
यस्तूत्तमः [2]सुविज्ञानी देहस्तस्यापि नास्ति हि ॥५०॥
व्यवहारं करोत्येष रथसारथिवत् स्थितः ।
यथा रथेन व्यापारं कुर्वन् न रथदेहकः ॥५१॥
सारथिः स्यादेवमेव देहव्यापारतत्परः ।
न देही नापि व्यापारी शुद्धसंवेदनात्मकः ॥५२॥
अन्तरत्यच्छसुस्वान्तो बहिर्व्यवहरत्यसौ ।
यथा स्त्रीवेषितो [3]नाट्ये द्वैरूप्यमुपसङ्गतः ॥५३॥
यथा क्रीडन्[4] कुमारेण प्रौढस्तद्दोषवर्जितः ।

यथेति ॥४८॥ लोकसम्बन्धिनी यात्रा व्यवहारः । तद्बहिर्गतः तद्रहितः । पुनर्न विजानाति नानुसन्धत्ते ॥ ४९ ॥ नन्वनुसन्धानाभावे दैहिकव्यवहारः कथं निर्वहेदिति चेदाह—प्रारब्धेति । वासना संस्कारः । यथा शिशोः प्रारब्धोद्‌बुद्धसंस्कारेण स्तन्यपाने प्रवृत्तिरेवमिति भावः । उत्तमस्य स्थितिमाह—यस्त्विति ॥ ५० ॥ तर्हि पूर्वस्मादस्य को विशेष इति चेदाह—व्यवहारमिति । कथं करोतीति चेदाह—रथेति । एतदेवोपपादयति—यथेति ॥५१॥ न देहीति । देहतद्व्यापारयोस्त्यक्ताभिमान इति तात्पर्यम् ॥ ५२ ॥ अन्तरिति । अत्यच्छं दृश्याकारलेशरहितम्, अत एव सुष्ठु स्वात्मरूपमात्रेण स्थितं स्वान्तं यस्य । अन्तरिति स्वात्ममात्रदृष्ट्या । बहिरिति लोकदृष्ट्यापि । असौ उत्तमज्ञानी । अत्र दृष्टान्तः—यथेति । स्त्रीवेषितः पुरुषः ॥ ५३ ॥ व्यवहारफलाभावे दृष्टान्तः—यथेति ।

१. मेव—ख० । २. त्तमः स वि—क० ।
३. नान्द्ये—ख० । ४. क्रीडत्कु—ख० ।

एवमेष जगत्क्रीडातत्परो निर्मलाशयः ॥५४॥
मध्यज्ञानी निरोधस्य प्रकर्षेणाचलस्थितिः ।
अचलस्थितिरेतस्य विचारस्य प्रकर्षतः ॥५५॥
बुद्धेस्तु परिपाकेण मध्यमोत्तमयोर्भिदा ।
अत्र ते शृणु वक्ष्यामि संवादं ज्ञानिनोर्मिथः ॥५६॥
पुरा हि [1]पर्वतेशोऽभूद् राजा रत्नाङ्गदाह्वयः ।
स विपाशामनु पुरीमध्यासीदमृताभिधाम् ॥५७॥
तस्य पुत्रौ महात्मानौ स्थितावतिमनीषिणौ ।
रुक्माङ्गदहेमाङ्गदौ जनकस्यातिवल्लभौ ॥५८॥
तत्र रुक्माङ्गदो ह्यासीच्छास्त्राणां पारदर्शनः ।
हेमाङ्गदोऽतिविज्ञानो ज्ञानिनामुत्तमोऽभवत् ॥५९॥

तद्दोषेण क्रीडासम्बन्धिजयपराजयनिमित्तान्तरहर्षादिना वर्जितः। एष उत्तमज्ञानी ॥ ५४ ॥ मध्यमोत्तमयोः स्थितिभेदनिमित्तमाह—मध्येति। निरोधस्य प्रकर्षः परा काष्ठा। एतस्य उत्तमज्ञानिनः। विचारस्य प्रकर्षः निष्प्रकम्पनिश्चयरूपफलपर्यवसायिता ॥ ५५ ॥ कुत एवं साधनभेदेन भिन्ना स्थितिरिति चेदाह—बुद्धेरिति। बुद्धावपराधादिरूपदोषाल्पत्वे विचारमात्रेणैव किञ्चिन्निरोधेन निष्प्रकम्पनिश्चयस्तदनल्पत्वे तु निरोधबाहुल्यापेक्षणमिति भावः। व्यवहारेऽपि ज्ञानिनां मनः कथमनासक्तमिति प्रश्नस्योत्तरमुक्तप्रायमिति ज्ञेयम् । तदित्थं मन्दज्ञानिन आसक्तेर्मध्ये मध्येऽनुसन्धानेन विच्छेदेनादृढमूलासक्तिमत्त्वात् तदितरयोरनुसन्धानाभावशैथिल्याभ्यामनासक्तत्वं मनस इति। अत्र विज्ञानप्रक्रियाप्रसङ्गे। सर्वसन्देहनाशनं संवादम् ॥ ५६ ॥ विपाशामनु विपाशानदीतीरे स्थितां पुरीम् ॥५७॥ मनीषिणौ निर्मलप्रज्ञौ। वल्लभौ

1. पार्व—ख० ग० ।

तावुभौ निर्गतौ सर्वसेनाभिः परिवारितौ ।
मृगयार्थं वसन्तेषु ययतुर्गहनं वनम् ॥६०॥
तत्रानेकान् मृगान् व्याघ्रान् शशकान् महिषानपि ।
हत्वाऽत्यन्तपरिश्रान्तावासाद्य ह्रदमास्थितौ ॥६१॥
तद्ध्रदस्य परे पारे न्यग्रोधे ब्रह्मराक्षसः ।
समस्तशास्त्रसारज्ञो[1] विद्वद्भिर्विवदत्यलम् ॥६२॥
निर्जितान् भक्षयन्नास्ते चिरकालाद्धि भार्गव ।
रुक्माङ्गदश्चारमुखाद् निशम्य वादकौतुकी ॥६३॥
गत्वा तत्र भ्रातृयुतस्तेन वादपरोऽभवत् ।
निर्जितस्तेन वादेषु गृहीतो ब्रह्मरक्षसा ॥६४॥
रुक्माङ्गदोऽथ तद्दृष्ट्वा प्राह हेमाङ्गदस्तु तम् ।
भो ब्रह्मराक्षसैनं त्वं न भक्षयितुमर्हसि ॥६५॥
मां जित्वाऽवरजं ह्यस्य ततो नौ सह भक्षय ।
हेमाङ्गदवचः श्रुत्वा प्रोवाच ब्रह्मराक्षसः ॥६६॥
चिराय लब्धो ह्याहारो बुभुक्षा मां प्रबाधते ।
एतेन पारणां कृत्वा विवदामि त्वया सह ॥६७॥
ततस्त्वामपि निर्जित्य भक्षितेन त्वया ततः ।

प्रियौ ॥५८-५९॥ वसन्तेष्विति । बहुवचनं बहुदिनबोधकम् । गहनं वनं महारण्यम् ॥६०॥ कञ्चन ह्रदम् ॥ ६१ ॥ न्यग्रोधे वटवृक्षे, स्थित इति शेषः । अलम् अत्यन्तम् ॥ ६२ ॥ निर्जितान् विदुषः । चाराः वृत्तान्तप्रापकाः । ब्रह्मराक्षसवृत्तं निशम्य ॥ ६३ ॥ तत्र न्यग्रोधप्रदेशे । तेन ब्रह्मराक्षसेन ॥ ६४ ॥ रुक्माङ्गदो गृहीतः । तं ब्रह्मराक्षसम् । एनं मद्भ्रातरम् ॥ ६५ ॥ अस्य त्वया गृहीतस्यावरजं माम् । नौ भ्रातरौ

---

१. पारज्ञो–क० ।

अत्यन्तं तर्पितो भूयामिति मे नृप निश्चयः ॥६८॥
चिरादेष वरः प्राप्तो वसिष्ठात्तु महात्मनः ।
कदाचिदागतः शिष्यो वसिष्ठस्य तु भक्षितः ॥६९॥
देवराताभिधस्तेन शप्तस्तेन महात्मना ।
इतः परं भक्षयित्वा मनुष्यं ब्रह्मराक्षस ॥७०॥
दग्धं भवेत्तव मुखमिति पश्चाद् मया मुनिः ।
भूयः सम्प्रार्थितो मह्यं प्रायच्छद् वरमुत्तमम् ॥७१॥
वादेषु निर्जितान् मर्त्यान् भक्षय त्वं समन्ततः ।
इति तद्वादविजितान् भक्षयामि ततस्त्वहम् ॥७२॥
चिरायैष[1] मया प्राप्त आहारः सर्वतोऽधिकः ।
भक्षयित्वा ततो वादे त्वां विजेष्यामि भूमिप ॥७३॥
इत्युक्त्वा भक्षणोद्युक्तं पुनर्हेमाङ्गदोऽब्रवीत् ।
ब्रह्मराक्षस मद्वाक्यं किञ्चिच्छृणु [2]सुयाचितः ॥७४॥
अपि किञ्चित् प्राप्य चैनं परित्यजसि तद्वद ।
दत्वा तुभ्यं तदेनं तु मोचयामि सहोदरम् ॥७५॥
इत्युक्तः प्राह भूयस्तं नृपं स ब्रह्मराक्षसः ।

॥ ६६ ॥ एतेन त्वद्भ्रात्रा । पारणाम् उपवाससमाप्तिम् ॥ ६७-६८ ॥ एष निर्जितस्य भक्षणात्मकः । वरप्राप्तिमेवाह— कदाचिदिति । अत्रागतो मया भक्षितः ॥ ६९ ॥ देवराताभिधः शिष्यः । तेन भक्षणनिमित्तेन । शापप्रकारमाह—इत इति ॥ ७० ॥ इति शप्त इत्यन्वयः । शापप्राप्तेः पश्चात् । भूयः बहुकृत्वः ॥ ७१ ॥ वरमेवाह—वादेष्विति । इति वरं प्रायच्छदित्यन्वयः । तत् तस्मात् । ततः तदनन्तरम्, प्राप्त इत्यन्वयः ॥ ७२ ॥ ततः तस्मात् ॥ ७३-७४ ॥ किञ्चिदपि यत्प्राप्य । एनं मद्भ्रातरं तद्दत्त्वा ॥ ७५ ॥ इतोऽधिकं प्रियं किञ्चिन्नास्तीत्याह—शृण्विति

---

१. देष–ख० ।   २. मया चितः–क० ।

शृणु राजन्नास्ति तद्वै किञ्चिद् येनैनमुत्सृजे ॥७६॥
कः प्राणप्रियमाहारं त्यजेत् कालोपसङ्गतम् ।
किन्त्वेकः समयो मेऽस्ति प्रश्ना मे हृदि संस्थिताः ॥७७॥
तान् मे यदि प्रतिब्रूयास्तत्ते भ्रातरमुत्सृजे ।
ततो हेमाङ्गदः प्राह पृच्छ तान् संवदामि ते ॥७८॥
इत्युक्तो नृपपुत्रं तं पप्रच्छ ब्रह्मराक्षसः ।
गूढप्रश्नान् क्रमेणैव तद्वक्ष्ये शृणु भार्गव ॥७९॥
आकाशाद्वितता का[1] स्यात् सूक्ष्मा च परमाणुतः ।
सा किंरूपा स्थिता कुत्र वदैतन्नृपपुत्रक ॥८०॥
वितता चितिराकाशात् सूक्ष्मा च परमाणुतः ।
स्फुरद्रूपा स्वात्मसंस्था शृणु त्वं ब्रह्मराक्षस ॥८१॥
एकापि साऽतिवितता कथं सूक्ष्मतरा भवेत् ।
स्फुरत्त्वं किं किमात्मा च वदैतन्नृपनन्दन ॥८२॥
कारणत्वाद्धि वितता सूक्ष्माऽग्राह्यत्वतोऽपि च ।
स्फुरत्त्वमात्मा च चितिः शृणु त्वं ब्रह्मराक्षस ॥८३॥
स्थानं तदुपलब्धौ किं कथं वा सोपलभ्यते ।

॥ ७६ ॥ तत्र हेतुः—कः प्राण इति । काले क्षुधाकाले । उपसङ्गतं प्राप्तम् । समयः प्रतिज्ञा । तमेवाह—प्रश्न इत्यादि ॥ ७७ ॥ तान् प्रश्नान् । तत् प्रश्नोत्तरप्राप्त्या । तान् प्रश्नान् ॥ ७८ ॥ गूढप्रश्नान् गुप्तोत्तरप्रश्नान् ॥७९॥ तानेव प्रश्नानाह— आकाशादित्यादि । सा पृष्टरूपा ॥८०॥ क्रमेणोत्तरमाह—विततेत्यादि । चितिर्ब्रह्मरूपं सामान्यचैतन्यम् । सर्वान्तरत्वादगोचरत्वाच्च सूक्ष्मत्वम् । स्वात्मसंस्था स्वरूप एव स्थिता ॥ ८१ ॥ वितता सूक्ष्माप्येका [2]च कथं भवेत् ॥ ८२ ॥ उपादानकारणत्वेन सर्वव्याप्त्या वितता । अग्राह्यत्वात् । स्फुरत्त्वमात्मा च चिन्मात्रमेव । न ततोऽधिकमिति तात्पर्यम् ॥८३॥ तस्याः चित उपलब्धौ । कथ-

१. या—क० । २. 'च' नास्ति—ग० ।

उपलब्ध्या च किं वा स्याद् वदैतन्नृपनन्दन ॥८४॥
धीः स्थानमुपलब्धौ तु स्वैकाग्र्यात् सोपलभ्यते ।
उपलब्ध्या जनिर्न स्याच्छृणु त्वं ब्रह्मराक्षस ॥८५॥
धीः केयं ते[1] समाख्याता तदैकाग्र्यं च कीदृशम् ।
जनिर्वाऽपि भवेत् का सा वदैतन्नृपनन्दन ॥८६॥
चितिर्जाड्यावृता धीः स्यादैकाग्र्यं स्वात्मविश्रमः ।
जनिर्देहात्मताबुद्धिः शृणु त्वं ब्रह्मराक्षस ॥८७॥
कस्माच्चितेर्नोपलब्धिः केन वा सोपलभ्यते ।
जनिः कथं वा सम्प्राप्ता वदैतन्नृपनन्दन ॥८८॥
अविवेकाद् नोपलब्धिरात्मना सोपलभ्यते ।
जनिः कर्तृत्वाभिमानाच्छृणु त्वं ब्रह्मराक्षस ॥८९॥
कोऽविवेकस्त्वया प्रोक्तस्तथात्मा वापि को भवेत् ।
को वा कर्तृत्वाभिमानो वदैतन्नृपनन्दन ॥९०॥
अविवेकोऽपृथग्ज्ञानमात्मानं पृच्छ स्वात्मनि ।
तद्वासनाभिमानः स्याच्छृणु त्वं ब्रह्मराक्षस ॥९१॥

मिति । कथमिति साधनप्रश्नः । किमिति फलप्रश्नः ॥८४॥ सुष्ठु परोक्षज्ञानेन मोहवर्जितमैकाग्र्यं दृश्याकारतानुल्लेखः । यद्वा स्वविषयकमैकाग्र्यम् । चित्तस्य दृश्याकारतावर्जनेन स्वात्मचिन्मात्राकारतासम्पत्तिः । एतेन मूढसमाधिर्व्यावृत्तः ॥ ८५-८६ ॥ जाड्यं प्रागुक्ता जडशक्तिरव्यक्ताख्या । स्वात्मनि विश्रमो दृश्यानुन्मुखत्वम् ॥ ८७ ॥ कस्मान्निमित्तात् । केन [2]करणेन ॥ ८८ ॥ आत्मना स्वेनैव, [2]करणान्तरनैरपेक्ष्येणेति यावत् ॥ ८९-९० ॥ अपृथग्ज्ञानमैक्याध्यासः । आत्मानमिति । तस्य दुर्निरूपत्वेन तदुपलब्धिसाधनस्य चोक्तत्वेन निषेद्धुमशक्यत्वेन प्रत्यग्रूपत्वेन च स्वेनैव ज्ञातुं शक्यमिति भावः ।

---

१. 'ते' नास्ति—क० । २. कार—क० ।

अविवेकः केन नश्येत्तस्य किं वा हि कारणम् ।
तस्याऽपि किं कारणं स्याद् वदैतन्नृपनन्दन ॥९२॥
विचारेण स नश्येद्वै वैराग्यं तस्य [1]कारणम् ।
तत्कारणं दोषदृष्टिः शृणु त्वं ब्रह्मराक्षस ॥९३॥
को विचारो भवेत् किं वा वैराग्यं सम्प्रचक्षते ।
दोषदृष्टिश्च का प्रोक्ता वदैतन्नृपनन्दन ॥९४॥
दृग्दृश्ययोः परीक्षातो दृश्ये तत्परिवर्जनम् ।
दुःखबुद्धिः सा हि दृश्ये शृणु त्वं ब्रह्मराक्षस ॥९५॥
एतत्सर्वं केन भवेत् स वा कस्मादवाप्यते ।
तत्र वा किं निदानं स्याद् वदैतन्नृपनन्दन ॥९६॥
देवतानुग्रहात् सर्वं भक्त्या [2]स हि समाप्यते ।
निदानं सत्सङ्ग एव शृणु त्वं ब्रह्मराक्षस ॥९७॥
का देवता च सम्प्रोक्ता का च सा भक्तिरुच्यते ।
सन्तश्च कीदृशाः प्रोक्ता वदैतन्नृपनन्दन ॥९८॥
देवता स्याज्जगद्धात्री भक्तिस्तत्परतोच्यते ।
सन्तः शान्ता दयावन्तः शृणु त्वं ब्रह्मराक्षस ॥९९॥
सदा बिभेति को लोके सदा दुःखपरोऽपि कः ।
सदा दैन्ययुतः को वा वदैतन्नृपनन्दन ॥१००॥

तस्याहं कर्तेति ज्ञानस्य वासना संस्कारः ॥ ९१ ॥ तस्य अविवेकनाशकस्य । तस्यापि तत्कारणस्यापि ॥ ९२ ॥ विषयदोषदृष्टिः ॥ ९३-९४ ॥ दृग्दृश्ययोर्जिज्ञासापूर्वकस्वरूपविवेचनं परीक्षा । सः विचारः । तस्य रागस्य दृश्ये परिवर्जनं वैराग्यम् । दृश्ये दुःखसाधनत्वबुद्धिः सा दोषदृष्टिः ॥ ९५ ॥ एतत्सर्वं विचारादिकम् । केन साधनेन । निदानं मूलकारणम् ॥ ९६ ॥ सः अनुग्रहः ॥ ९७-९८ ॥ जगद्धात्री

१. वारणम्—ख० । २. सा—क० ।

महाधनी सदा भीतो दुःखी बहुकुटुम्बवान् ।
आशाग्रस्तः सदा दीनः शृणु त्वं ब्रह्मराक्षस ॥१०१॥
निर्भयः को भवेल्लोके निर्दुःखश्चापि को भवेत् ।
अदोनः[1] सर्वदा कः स्याद् वदैतन्नृपनन्दन ॥१०२॥
निर्भयः सङ्गरहितो निर्दुःखो जितमानसः ।
ज्ञातज्ञेयस्त्वदीनात्मा शृणु त्वं ब्रह्मराक्षस ॥१०३॥
दुर्लक्ष्यः स्यात् को हि लोके विदेहो दृश्यते च कः ।
निष्क्रियस्य क्रिया का स्याद् वदैतन्नृपनन्दन ॥१०४॥
जीवन्मुक्तो हि दुर्लक्ष्यो विदेहो देहवानपि ।
तत्क्रिया निष्क्रियस्योक्ता शृणु त्वं ब्रह्मराक्षस ॥१०५॥
किमस्ति किं नास्ति लोके कोऽत्यन्तासम्भवी भवेत् ।
एतावदुक्त्वा नृपते मोचय द्रुतमग्रजम् ॥१०६॥
दृगस्ति नास्ति वै दृश्यं व्यवहारो ह्यसम्भवी ।
उक्तमेतद् ब्रह्मरक्षो मुञ्च मद्भ्रातरं द्रुतम् ॥१०७॥
श्रुत्वैतदथ सन्तुष्टो मुमोच ब्रह्मराक्षसः ।
रुक्माङ्गदं ततः पश्चादभवद् ब्राह्मणो हि सः ॥१०८॥
तेजस्विनं तपोमूर्तिं दृष्ट्वा ब्राह्मणरूपिणम् ।
पप्रच्छतू राजसुतौ को भवानिति शङ्कितौ ॥१०९॥

जगन्नियन्त्री । तत्परत्वं तत्प्रवणत्वम् ॥ ९९-१०२ ॥ ज्ञातज्ञेयो ज्ञानी ॥ १०३ ॥ विदेहो देहरहितः ॥ १०४ ॥ अयं जीवन्मुक्त इति परैर्लक्षितुमशक्यः । देहक्रियायां चाभिमानाभावाद्विदेहो निष्क्रियश्च जीवन्मुक्तः ॥ १०५ ॥ एतावत् चरमं प्रश्नत्रयम् ॥ १०६ ॥ दृक्सामान्यचैतन्यम् । दृश्याभावादेव तद्विषयकव्यवहारस्यासम्भवित्वम् ॥ १०७ ॥ एतत् प्रश्नोत्तरम् । सः ब्रह्मराक्षसः ॥ १०८ ॥ ब्रह्मरक्षसो ब्राह्मणरूपतां

1. अहीनः—क० ।

अथ प्राह ब्राह्मणाग्र्यः स्वं वृत्तं वै यथातथम् ।
अहं पुरा ब्राह्मणस्तु [1]मगधेष्वभिविश्रुतः ॥११०॥
वसुमानिति विख्यातः सर्वशास्त्रविशारदः ।
सभासु निर्जिता भूयो मया विद्याभिमानिना ॥१११॥
विद्वांसः शतशो विप्रास्ततोऽत्यन्तसुगर्वितः ।
कदाचिद् [1]मगधेशस्य सभायामष्टकं मुनिम् ॥११२॥
परावरज्ञं संशान्तं वादार्थी सङ्गतोऽभवम् ।
शुष्कतर्ककनिपुण आत्मविद्याविचारणे ॥११३॥
ततो मया स आक्षिप्तः केवलं तर्कयुक्तिभिः ।
समाधानवचस्तस्य बह्वागमसुबृंहितम् ॥११४॥
दूषयित्वा तर्कजालैरधिक्षेपपरोऽभवम् ।
अधिक्षिप्तोऽपि बहुधा मया राजसभागतः ॥११५॥
शान्तस्तूष्णीं बभूवाथ शिष्यस्तस्य महात्मनः ।
काश्यपो मां क्रोधवशाच्छशाप नृपसंसदि ॥११६॥
आचार्यं मेऽधिक्षिपसि त्वमस्थाने द्विजाधम ।
यतस्तस्माच्चिरं कालं ब्रह्मरक्षो भविष्यसि ॥११७॥
शप्त एवमहं तेन भीतोऽत्यन्तं तदा मुनिम् ।
वेपमानः प्रणम्याशु चाष्टकं शरणं गतः ॥११८॥

दृष्ट्वा शङ्कितौ संशयं प्राप्तौ ॥ १०९ ॥ यथातथं[2] यथार्थभूतम् । पाण्डित्यादिगुणैर्विश्रुतः ॥ ११०-१११ ॥ ततो विद्वज्जयात् ॥ ११२ ॥ परावरज्ञत्वादेव संशान्तम् । विचारेण सङ्गतो वादार्थं प्रत्युपस्थितः ॥ ११३ ॥ सः अष्टकः ॥ ११४ ॥ समाधानवचनमपि दूषयित्वा । अधिक्षेपः तिरस्कारः ॥ ११५ ॥ अष्टकः शान्तः ॥ ११६ ॥ अस्थाने अधिक्षेपनिमित्ताभावेऽपि ॥ ११७ ॥ वेपमानः शापभीत्या कम्पितः

१. माग—ख० ग० । २. 'यथातथं' नास्ति—क० ।

मयि सोऽथ दयां चक्रे विरोधिन्यपि शान्तधीः ।
शापस्यान्तं ददौ मह्यं तन्मे निगदतः शृणु ॥११९॥
प्रश्नांस्त्वया[1] मयि कृतान् प्रत्युक्तांश्च मया हि तान् ।
स्थापितान् केवलैस्तर्कैर्यदैकः प्रतिवक्ष्यति ॥१२०॥
कश्चिद् विद्वांस्तदा शापाद्विमुक्तस्त्वं भविष्यसि ।
तच्छापादद्य[2] ते मुक्तश्चिराय नृपनन्दन ॥१२१॥
तत्त्वां मन्ये महात्मानं ज्ञातज्ञेयं नृपोत्तमम् ।
इत्युक्तस्तेन विप्रेण विस्मितोऽभून्नृपात्मजः ॥१२२॥
ततो भूयो नृपसुतोऽनुयुक्तस्तेन सर्वशः ।
वसुमन्तं बोधयित्वा सम्यक् प्रागात् पुरं स्वकम् ॥१२३॥
प्रणम्य वसुमन्तं तं सहितो भ्रातृसैनिकैः ।
एतत्ते सर्वमाख्यातं यत्पृष्टं भार्गव त्वया ॥१२४॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डे राक्षसोपाख्याने
एकत्रिंशोऽध्यायः ॥

॥ ११८ ॥ अन्तं शापमोक्षावधि । तत् शापान्तम् ॥ ११९ ॥ त्वया स्थापितान् दूषितोत्तरत्वेनानुत्तरीकृतान् । एको[3] विद्वान् ॥१२०॥ तच्छापात् तादृशाष्टकशिष्यशापात् । ते त्वत्तः ॥१२१॥ तत् तस्माद्धेतोः ॥ १२२ ॥ अनुयुक्तः पृष्टः । तेन ब्राह्मणेन सम्यक् पृष्टार्थान् बोधयित्वा ॥ १२३ ॥ उपसंहरति—एतदिति ॥ १२४ ॥

इति श्रीत्रिपुरारहस्ये ज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायाम्
एकत्रिंशोऽध्यायः ॥

---

१. त्वयापि हि—क० । २. दथ—क० । ३. एवं—क० ख० ।

# अथ द्वाविंशोऽध्यायः

श्रुत्वैवं राक्षसकथां रामो भृगुकुलोद्वहः[1] ।
पुनः पप्रच्छावधूतकुलेशं प्रश्रयाश्रयः ॥१॥
भगवन् किं तेन पृष्टं शापमुक्तद्विजेन वै ।
हेमाङ्गदेन किं प्रोक्तमेतन्मे कृपया वद ॥२॥
कौतुक्यत्यन्तमत्राहं न तदल्पं भवेत् क्वचित् ।
इति पृष्टः पुनः प्राह दत्तात्रेयो दयापरः ॥३॥
राम तत्ते प्रवक्ष्यामि महार्थं तत्प्रभाषितम् ।
ततः पप्रच्छ वसुमान् हेमाङ्गदमुपस्थितम् ॥४॥
राजपुत्र किञ्चिदहं पृच्छामि त्वं समीरय ।
अहमष्टकयोगीशात् तदज्ञासिषमादितः ॥५॥
भूयस्त्वदुक्त्या च सम्यग् [2]विदितं परमं पदम् ।
किन्तु ते ज्ञाततत्त्वस्य कथं स्थितिरियं भवेत् ॥६॥
कथं ज्ञातसुविज्ञेयो व्यवहारपरायणः ।

अत्र रूपकपद्यैस्तु प्रोक्तं [3]ज्ञानिविचेष्टितम् ।
प्रोक्तं ज्ञानप्रक्रियायास्तत्त्वं चात्यन्तसंग्रहात् ॥

भार्गवप्रश्नमवतारयति—श्रुत्वेति । प्रश्रयो विनयः ॥ १–२ ॥ अत्र तत्संवादश्रवणे । तत्र हेतुः – न तदिति । राजकुमारेण महाविदुषोक्तं तादृशेन ब्राह्मणेन पृष्टं च नाल्पं क्वचिदपि भवेदित्यर्थः ॥ ३ ॥ तेन राजकुमारेण प्रतिभाषितम् उप समीपे स्थितम् ॥ ४ ॥ तत् परात्मतत्त्वम् । अज्ञासिषं ज्ञातवान् । आदितः आदौ ॥ ५ ॥ ते तव । इयं मृगयादिव्यवहाररूपा ॥ ६ ॥ किमत्र बाधकमिति चेदाह—कथमिति ।

---

१. द्भवः–क० । २. विहितं–क० । ३. ज्ञान–क० ।

ध्वान्तप्रकाशयोर्यद्वत् स्थितिरेकत्र सम्भवेत् ॥७॥
एतन्मे राजतनय ब्रूहि सम्यग् यथास्थितम् ।
इत्यापृष्टः प्राह हेमाङ्गदस्तं ब्राह्मणोत्तमम् ॥८॥
ब्रह्मन् ते भ्रान्तिरद्यापि न सम्यक् प्रविनाशिता ।
व्यवहारेण किं ज्ञानं बाध्यते स्वात्मसम्भवम् ॥९॥
व्यवहारवशाद् ज्ञानं बाध्यते [1]चेत् ततः कथम् ।
पुरुषार्थस्य लाभः स्यात् स्वाप्नज्ञानसमेन वै ॥१०॥
सर्वोऽपि व्यवहारोऽयं ज्ञानमाश्रित्य सम्भवेत् ।
तज्ज्ञानं बाध्यते तेन कथं तन्मे समीरय ॥११॥

व्यवहारपरायणः कथं भवेदिति शेषः। शास्त्रज्ञानमिव परतत्त्वज्ञानमपि भवेदिति चेन्नेत्याह—ध्वान्तेति। ध्वान्तप्रकाशयोरेकत्र स्थितिर्यद्वद्विरुद्धैव सम्भवेदेवमेतदपीत्यर्थः ॥७॥ एतद् ज्ञानिनि विरुद्धं व्यवहरणम् ॥८॥ प्रविनाशिता प्रविनष्टा। कुत इति चेदाह—व्यवहारेणेति। किं व्यवहारेणात्मस्वरूपभूतज्ञानस्य विरोधः, उताज्ञाननाशकसोऽहमिति प्रत्यभिज्ञात्मकज्ञानविशेषस्य [1]विरोध इति विकल्प्य[2] नाद्य इत्याह—किं ज्ञानं बाध्यत इति। स्वात्मरूपेण सम्भवः स्थितिर्यस्य तत्। किमित्याक्षेपे[3]। न बाध्यत इत्यर्थः॥ ९ ॥ कुत एवमिति चेदाह—व्यवहारेति। व्यवहारेण स्वरूपभूतज्ञानस्य बाधे स्वाप्नज्ञानवत्तस्यासत्यत्वेन[4] तादृशेन स्वरूपेण युतस्य मुमुक्षोः स्वरूपनाशात् कस्य कथं मोक्षाख्यपुरुषार्थः स्यादिति भावः॥ १० ॥ अथ च स्वरूपभूतज्ञानाश्रितत्वाद्व्यवहारस्य कथं ज्ञानबाधकत्वमित्याह—सर्वं इति।

---

1. 'विरोधो वेति' इति वाघटितः सार्वत्रिकः पाठोऽनावश्यकः, 'उत' इत्यनेन गतार्थत्वात् ।

१. च–क० । २. विकल्पः । नाद्य–क० ।
३. क्षेपः–क० ख० । ४. सत्त्वेन–क० ।

ज्ञानं तदेव हि भवेद् यत्रेदं भासते जगत् ।
सङ्कल्पाद् व्यवहारो हि ज्ञाने सर्वः[1] प्रकाशते ॥१२॥
असङ्कल्पेन तद्रूपमनुलक्ष्य धिया सकृत् ।
कृतार्थो बन्धनिर्मुक्तो भवतीति सुनिश्चयः ॥१३॥
तस्माद् ब्रह्मन्न ते प्रश्नः सम्मतोऽयं सुबुद्धिभिः ।
पुनस्तं प्राह वसुमान् नृपसूनुं महाशयम्[2] ॥१४॥
सत्यं राजकुमारैतद् मयापीत्थं सुनिश्चितम् ।
स्वरूपं निर्विकल्पं हि संवेदनमिहोच्यते ॥१५॥
सविकल्पत्वमापन्ने पुनर्भ्रान्तिः कुतो नहि ।

तेन स्वमिश्रितव्यवहारेण । तद् व्यवहारस्य ज्ञानबाधकत्वम् ॥ ११ ॥ प्रतिबिम्बानां दर्पणवत् सर्वव्यवहाराश्रयं ज्ञानमेव स्वरूपभूतमित्याह—ज्ञानमिति । द्वितीयस्याप्यज्ञाननाशकज्ञानविशेषस्य किं व्यवहारः स्वरूपनिवर्तको वाऽप्रामाण्यग्राहको वेति विकल्प्य स्वरूपस्य क्षणिकत्वान्निवर्तकानपेक्षणाद् द्वितीयं निरसितुमाह—सङ्कल्पादिति । स्वरूपभूते ज्ञाने ॥ १२ ॥ असङ्कल्पेनेति । तत्तच्छब्दोल्लेखरूप[3] सङ्कल्पाद्धानोपादानाद्याभासरूपव्यवहारेण तिरोहितमिव सम्पन्नं स्वस्वरूपं[4] श्रवणादिना परोक्षत्वेन विदितं निदिध्यासनरूपसङ्कल्पेन स्वतोऽनुभूय ततो धिया सकृदनुलक्ष्य सोऽहमिति सकृत्प्रत्यभिज्ञाय कृतार्थो भवति । तथा च सकृदनुलक्षणरूपप्रत्यभिज्ञानादविद्यानाशेन बन्धान्नितरां मुक्तत्वात् पुनरबाधितविकल्पानुदयेनाप्रामाण्यग्रहानुदयादिति भावः ॥ १३ ॥ तस्माद् व्यवहारेण बाधाभावस्य स्पष्टत्वात् । इति श्रुत्वा पुनः प्राह ॥ १४ ॥ इत्थं त्वदुक्तरीत्या । तथापि व्यवहारे क्रियमाणे भ्रान्तिः स्यादेवेत्युपपादयति—स्वरूपमिति ॥ १५ ॥ पुनर्भ्रान्तिरिति । तत्तदाकारोल्लेखसङ्कल्पमन्तरा व्यवहारा-

१. सर्वे—क० । २. शयः—ख० ।
३. स्वस्वरूप—क० ख० । ४. स्वरूपम्—ग० ।

विकल्प एव हि भ्रान्तिर्यथा रज्जौ भुजङ्गमः ॥१६॥
शृणु ब्रह्मन् न जानासि भ्रमाभ्रमविनिर्णयम् ।
गगनं[1] नीलमाभाति गगनं जानतामपि ॥१७॥
व्यवहारं च कुर्वन्ति नीलं नभ इति क्वचित् ।
तावतैव तु तज्ज्ञानं न भ्रान्तिरभिधीयते ॥१८॥
अतत्त्वज्ञे हि सा भ्रान्तिस्तत्त्वज्ञे सा प्रमैव हि ।
हतप्रामाण्यजीवं तज्ज्ञानं मृतमहाहिवत् ॥१९॥

सम्भवेनाकारस्य स्वरूपेऽसतो विरुद्धस्यावभासमानत्वे सति भ्रान्तित्वं स्यादेवेत्यर्थः। स्वस्य ज्ञानात्मनो विरुद्धविकल्पस्वरूपतैव भ्रान्तिरित्याह—विकल्प इति। ततः किमिति चेदाह—यथेति। यथा रज्जुभुजङ्गोऽनर्थावह एवं विकल्पाभासोऽनर्थावह इति भावः॥ १६॥ उत्तरमाह—शृण्विति। ज्ञाततत्त्वानां व्यवहारो न भ्रम इत्याह—शृण्विति [ भ्रमेति ]। एतदेवोदाहरणेन विशदयति—गगनमिति। गगनं न नीलमिति जानतामपि॥ १७॥ क्वचित् समये। तावता व्यवहारमात्रेण तज्ज्ञानं तेषां [2]गगनतत्त्ववेदिनां नीलं नभ इति ज्ञानम्॥ १८॥ अतत्त्वज्ञे गगनतत्त्वानभिज्ञे, [3]सा नीलं नभ इति प्रतीतिः। ननु कथमेकविधमेव ज्ञानं पुरुषभेदेन भ्रमप्रमोभयरूपमिति चेत्तयोरस्ति भेद इत्याह—हतेति। ज्ञानानां हि प्रामाण्यं जीवभूतमस्ति, यद्वशादर्थक्रियोदयः। यथा हि सर्पज्ञानं भयकम्पाद्यर्थक्रियां करोति। विरुद्धज्ञानेन नायं सर्प इत्यादिरूपेण सर्पज्ञानस्याप्रामाण्यग्रहे तस्य हतप्रामाण्यजीवत्वेन मृतसर्पवद् न भयाद्यर्थक्रियाकारित्वम्। एवं च गगनतत्त्वज्ञानां नीलं नभ इति ज्ञानस्य हतप्रामाण्यजीवस्यार्थक्रियाकारित्वाभावाद् गगनतत्त्वाज्ञ[4]ज्ञानवैलक्षण्येन न भ्रमत्वमिति॥ १९॥

---

१. गगने नीलिमा भाति—क० । २. गगनत्व—क० ।
३. 'सा' नास्ति—क० ख० । ४. तत्त्वज्ञ—ख० ।

दर्पणप्रतिबिम्बस्य व्यवहार:[1] समो भवेत् ।
अभिज्ञस्यानभिज्ञस्य चाप्यतोऽस्ति भिदा तयोः ॥२०॥
ज्ञस्य प्रमैव तज्ज्ञानमज्ञस्य[2] तु भ्रमात्मकम् ।
ज्ञानिनां ज्ञानमेव स्यात् सर्वोऽपि व्यवहारकः ॥२१॥
दर्पणप्रतिबिम्बानां व्यवहारेण सम्मितः ।
अभिज्ञानामतो भूयो नहि भ्रान्तेः समुद्भवः ॥२२॥
केवलाज्ञानजनितं ज्ञानेन विनिवर्तते ।
दोषेण जनितं कस्माद्विलीयेद् ज्ञानमात्रतः ॥२३॥
अत एव तैमिरिकः [3]पश्येद् जानन्नपि द्वयम् ।

दर्पणेति । विदितगगनतत्त्वस्य नीलं नभ इति व्यवहारो यस्तस्य दर्पणप्रतिबिम्बगजेऽयं गज इत्यादिव्यवहारः समो भवेत् । अतो गगनाभिज्ञस्यानभिज्ञस्यापि[4] नीलं नभ इति ज्ञानयोर्भेदोऽस्ति ॥ २० ॥ ज्ञस्येति । गगनतत्त्वज्ञस्य प्रमैवेति भ्रमप्रयुक्तार्थक्रियाभावादिति भावः । तज्ज्ञानं नीलं नभ इति ज्ञानम् । दार्ष्टान्तिके योजयति—ज्ञानिनां ज्ञानमेवेति । प्रोक्तवद् हतप्रामाण्यजीवत्वाज्ज्ञानर्थावहः[5] सर्वोऽपि व्यवहार इति भावः ॥ २१ ॥ ज्ञानिव्यवहारो दर्पणप्रतिबिम्बव्यवहारतुल्य इत्याह—दर्पणेति । अतः तद्व्यवहारस्य बाधितत्वात् । भ्रान्तेरिति । ज्ञानिव्यवहारस्य ज्ञानमात्ररूपत्वेन न तस्य भ्रान्तित्वमिति भावः ॥ २२ ॥ ननु रज्ज्वज्ञानजातसर्पस्य तज्ज्ञानान्निवृत्तिवदद्वयात्माज्ञानाद् [6]अवभासमानदृश्यस्याद्वयज्ञानात् कुतो न निवृत्तिरिति चेदाह—केवलेति । कस्माद्विलीयेदिति । विलीयेतेत्यर्थः । ज्ञानस्य तद्विलयकारणत्वाभाव इति तात्पर्यम् ॥ २३ ॥ अत्रोदाहरणमाह—अत एवेति ।

---

१. हारसमो—क० । २. मन्यस्य—ग० ।
३. पश्यन्—ख० । ४. 'नभिज्ञस्य' नास्ति—क० ।
५. नार्थावहः—क० । ६. दभास—क० ख० ।

जगदाभास एषस्तु कर्मदोषसमुद्भवः ॥२४॥
तस्मादाकर्मविलयं व्यवहारो न लीयते ।
समाप्ते कर्मणि ततः शिष्येदद्वयचिन्मयम् ॥२५॥
तस्मान्नास्त्येव [1]विज्ञानां कदापि भ्रान्तिसम्भवः ।
इति श्रुत्वा पुनर्विप्रः पप्रच्छ नृपनन्दनम् ॥२६॥
अहो नृपात्मज कथं ज्ञानिनां कर्म सम्भवेत् ।
ज्ञानाग्निसंस्पर्शनेऽपि कर्मतूलः कथं स्थितः ॥२७॥
अथाह हेमाङ्गदोऽपि विप्रं तं नृपनन्दनः ।
ब्रह्मन् शृणु प्रवक्ष्यामि त्रिविधं कर्म ज्ञानिनाम् ॥२८॥
सर्वेषां च समानं स्यादपक्वं पक्वमेव च ।
हतोदितं चेति तत्र नश्येद् ज्ञानादमध्यमम् ॥२९॥
कर्मणां पाचकः कालो नियत्या नियतः स्थितः ।

जगदुद्भवे कोऽयं दोषः कारणमिति चेदाह कर्मेति ॥ २४ ॥ तस्मात् ज्ञानमात्रेणा[2]विनाश्यत्वात् । कर्मणि समाप्ते फलदानेन प्रक्षीणे सति । जगदाभासरहितमद्वयचिन्मयमात्मरूपं शिष्येत् । अज्ञानमूलकदेहाद्यहंभावोद्भूतकर्ममूलकत्वाज्जगतः । अज्ञानस्य ज्ञानेन निवृत्तावपि प्रवृत्तकर्मविलयादेव जगतः स्वरूपतोऽनवभास इति तात्पर्यम् ॥ २५ ॥ तस्माद् व्यवहारस्य[3] ज्ञानमात्रत्वान्न भ्रान्तिसम्भवः। कर्मशेषाद्द्वैताभास इति श्रुत्वा ॥ २६ ॥ ज्ञानिनां कथं कर्मशेष इत्याक्षिपति— अहो इति । ॥ २७ ॥ अथ विप्रप्रश्नानन्तरम् । ज्ञानिनां सर्वेषां त्रिविधं कर्म समानं स्यादिति सम्बन्धः ॥ २८ ॥ तन्नामान्याह—अपक्वमिति । सञ्चितं प्रारब्धं क्रियमाणमिति त्रिविधं कर्म । तत्र तेषु मध्ये ज्ञानात् पक्वात्मकप्रारब्धकर्मणो मध्यमादन्यद् द्वयं नश्येत् ॥ २९ ॥ एतेषां स्वरूपं विवेचयति—कर्मणामित्यादि । एतावता कालेनास्य कर्मणः पाको

१. विज्ञानं--क० । २. मात्रेण वि—क० । ३. हारज्ञान—क० ।

कालेन पाचितप्रायं पक्वं कर्म समीरितम् ॥३०॥
अपाचितमपक्वं स्याद् ज्ञानोत्पत्तेरनन्तरम् ।
कृतं हृतोदितं विद्धि ज्ञानाद्धतसमुद्भवात् ॥३१॥
तत्र पक्वं तु यत् कर्म तदारब्धमितीर्यते ।
आवेगं मुक्तशरवत्तिष्ठत्येव फलप्रदम् ॥३२॥
तन्मूलको जगद्भासो ज्ञानस्य तारतम्यतः ।
स्थितोऽपि भ्रान्तितुल्योऽपि न भ्रान्तिः फलभेदतः ॥३३॥
जनयेत् तत्कालफलं मन्दज्ञानवतां स्फुटम् ।
मध्यानामस्फुटं[1] तच्च ज्ञानिनां फलभासनम् ॥३४॥
उत्तमानां तु तत्कालफलं च स्पष्टभासनम् ।

भवेदिति भगवत्सङ्कल्पात्मकनियतिनियमितः क्रमिकक्रियाराशिरूपः कालः कर्मणां पाचकः। पाचितप्रायमिति। अत्यन्तपरिपाके हि युगपत् सर्वं फलप्रदोन्मुखमेव भवेदिति तात्पर्यम् ॥३०॥ अपाचितमिति। तत्पुरुषायुषा परिपाकानर्हमित्यर्थः। अनन्तरं कृतं कर्म। नाम्नोऽन्वर्थतामाह—हृतेति। ज्ञानाद्धतफलप्रदशक्तिमत्त्वेन समुद्भवादित्यर्थः ॥३१॥ तिष्ठत्येवेति। न ज्ञानेन नश्यतीति भावः ॥ ३२ ॥ तन्मूलकः प्रारब्धकर्ममूलकः। स जगदवभासो ज्ञानिनामुत्तमादीनां ज्ञानपरिपाकतुल्यतया स्थित इत्याह—ज्ञानस्येति। तारतम्यतः मन्दातिमन्दत्वादिरूपेण[2]। कुतो न भ्रान्तिरिति चेदाह—फलभेदत इति। अर्थक्रियाभेदादित्यर्थः ॥ ३३ ॥ जगदवभासफलभेदमेव मन्दमध्यमोत्तमज्ञानिनां क्रमेणाह—जनयेदिति। जगदवभासः स्वकाले मन्दज्ञानिनां सुखादिरूपं फलं जनयेत्। मध्यानां ज्ञानिनां तत्फलभासनं जगद्भासकाले मन्दज्ञानिवदेवास्ति, परन्तु तदस्फुटम्। मन्दसुषुप्तौ मशकदंशनमन्दमारुतजदुःख[3]सुखसममिति भावः ॥ ३४ ॥ उत्तमज्ञानिनां

१. मध्यानां च स्फुटं-ख० । २. रूपेणाकुतो-क० ख० । ३. सुखं सम-क० ।

शशशृङ्गसमं ब्रह्मन् नहि तत्फलमुच्यते ॥३५॥
अज्ञानिनां कर्मफलं पुष्टं पूर्वानुसन्धितः ।
[1]पूर्वापरानुसन्धानात् पोषितं तत्फलं तु तैः ॥३६॥
ज्ञानिनां फलसन्धानं छिन्नमात्मानुसन्धितः ।
अतो न पुष्टं मन्दानामारब्धजनितं फलम् ॥३७॥
मध्यानां ज्ञानिनां तच्च फलं मन्दसुषुप्तिषु ।
मशकादिकृतं दुःखमिव तत् सूक्ष्मतां गतम् ॥३८॥
उत्तमज्ञानिनां तत्तु फलं [2]पूर्णमपि स्थितम् ।
दग्धरज्जुरिव भवेत् स्थितात्मज्ञानवैभवात् ॥३९॥

तु जगद्भासनकाले सुखादिफलम् अन्यदृष्ट्या स्पष्टावभासनमपि स्वदृष्ट्या शशशृङ्गसमम्, अतो न तत्फलमित्युच्यते ॥ ३५ ॥ एवं ज्ञानिनां जगदाभासफलभेदं सामान्येनोक्त्वा विशेषेणैतदेव भूयो निरूपयितुमादावज्ञानिनां फलप्रकारमाह—अज्ञानिनामिति । पूर्वानुसन्धितः पुष्टमित्यस्यैव विवरणम्—पूर्वेत्यादि । सुखागमनात् पूर्वमीदृशं सुखं मे भविष्यतीति, तदुत्तरं चैवं सुखं मयानुभूतमिति च चिरमनुसन्धानात् पोषितं संस्काररूपेण रागाद्युत्पादकत्वेनान्तः स्थितं भवति ॥ ३६ ॥ मन्दानां ज्ञानिनां तत्फलस्यानुसन्धानं मध्ये मध्य आत्मानुसन्धितश्छिन्नं भवति । अतोऽज्ञानिनामिव न तत्पुष्टं भवति ॥ ३७ ॥ सदा निरोधसमाधिमतां मध्यज्ञानिनां समाधिविश्लेषदशासु प्रारब्धफलं दुःखं सुखं वा सुषुप्तौ मशकमन्दमारुतकृतदुःखसुखवत् सूक्ष्मतां प्राप्तं भवति ॥ ३८ ॥ उत्तमज्ञानिनां बाह्यसमाधिमतामन्यदृष्ट्या एष सुखी दुःखीति व्यवहारयोग्यत्वेन पूर्णं स्थितमपि [3]दृश्याभासफलं सुखादिदृष्ट्या दग्धरज्जुवद्भवेत् । कुत एवमिति चेदाह—स्थितेति । मध्यज्ञानिनः समाधिविश्लेषात् स्वरूपानुसन्धानं

१. पूर्वोपपुष्ट—ख० । २. पूर्वमिति—ख० । ३. दृश्य—क० ।

यथा नाटकवृत्तेषु नरो वेषान्तरं गतः ।
हृष्यन् विषीदंश्च भूयो नान्तर्विकृतिमाप्नुयात् ॥४०॥
एवमेष स्थितज्ञानी सुपूर्णफलसङ्गतः ।
न फलैः स्पृश्यते तस्मात्तत्फलं शशशृङ्गवत् ॥४१॥
अज्ञानिभिस्तु शुद्धात्मा नोपलक्षित एव हि ।
अतो देहात्मभूतास्ते दृश्यसत्यविमर्शनाः ॥४२॥
मन्दज्ञानिभिरात्मा तु विदितः शुद्धचिन्मयः ।
जगच्चासत्यतो दृष्टं तथाप्यभ्यासमान्द्यतः ॥४३॥
प्राग्वासनाहृतज्ञानास्ते देहात्मप्रभासनम् ।
जगतः सत्यताभासं मध्ये मध्ये समाययुः ॥४४॥

विच्छिद्यते, उत्तमस्य तु सदानुसन्धानात्मज्ञानस्थितिमाहात्म्याद्दग्ध-रज्जुवद्भवेदिति भावः ॥ ३९ ॥ उत्तमज्ञानिनस्तत्सुखाद्यनुभवप्रकारं दर्शयति यथेति । वेषान्तरं स्त्रीवेषम् । पुत्रोद्भवभर्तृवियोगाद्यभिनयैः, हृष्यन् विषीदन् ॥ ४० ॥ लोकदृष्ट्या राज्यलाभपुत्रमरणादौ हृष्यन् खिद्यन् सुपूर्णफलसङ्गतोऽप्यन्तः सर्वस्य स्वात्ममात्रत्वदृढनिश्चयेन फलस्य द्वितीयस्याभावान्न तैः स्पृश्यते । फलसम्बन्धाभिमानवान्न भवतीति तात्पर्यम् ॥ ४१ ॥ अज्ञानिनां कुतः फलसम्बन्धाभिमान इति चेदात्मज्ञानाभावेन दृश्यसत्यत्वनिश्चयादित्याह—अज्ञानिभिरिति । देहात्मभूताः स्वात्मानं देहादिमयं मन्यमानाः, दृश्ये सत्यत्वविमर्शनं येषां ते ॥ ४२ ॥ मन्दज्ञानिनां कथं फलभोग इति चेन्मध्ये मध्ये स्वरूपानुसन्धानविस्मृत्या देहात्मभावप्राप्त्येत्याह—मन्देति । विस्मृतौ निमित्तमाह—अभ्यासमान्द्यत इति ॥ ४३ ॥ वासनया हृतं विच्छिन्नमनुसन्धानात्मकं ज्ञानं येषां ते मन्दज्ञानिनः । देहे आत्मत्वप्रभासनं जगतः सत्यताभासं च मध्ये मध्ये प्राग्वद् ज्ञानोत्पत्तेः पूर्वमिव समाययुः ॥ ४४ ॥

भूयो ज्ञानवासनया[1] विधुन्वन्त्यसतीं दृशम् ।
वासनैवं सत्यमिथ्याज्ञानयोश्च परस्परम् ॥४५॥
मिलिता मन्दज्ञानिनामतो मध्ये फलं स्फुटम् ।
समेऽपि वासने चैते नहि तुल्ये महीसुर ॥४६॥
सत्यज्ञानवासनया बाध्यते वासनाऽपरा ।
न च मिथ्यावासनया बाध्यते सत्यवासना ॥४७॥
मिथ्यावासनयाविष्टो विस्मृतः केवलां [2]पराम् ।
ततो मिथ्यावासनां तु विनिश्चित्य भ्रमात्मिकाम् ॥४८॥
विधूय वासनां सत्यामुपैति ब्राह्मणोत्तम ।

नन्वेतेषां भूयः संसारप्रसक्तिरिति चेदाह—भूय इति । अभ्यस्तज्ञानवासनया प्रोद्बुद्धया । असतीं देहात्मत्वादिविषयाम् । वासना परस्परं मिलितेति सम्बन्धः ॥ ४५ ॥ मध्ये मिथ्याज्ञानवासनोद्बोधकाले । नन्वेवं वासनयोस्तुल्यत्वेन तज्ज्ञानं प्रतिबद्धं [3]मोक्षसाधकं भवेदिति चेन्नेत्याह—समेऽपीति । समानानुवृत्तिके अपीत्यर्थः ॥ ४६ ॥ कुतो न तुल्येति चेदज्ञानवासनाया बाधितत्वादित्याह—सत्येति । अपरा अविद्यावासना । सत्यवासनायाः प्रबलप्रमाणजातत्वेन मिथ्यावासनया न बाध इत्याह—न चेति ॥ ४७ ॥ ननु मिथ्यावासनाया बाधितत्वे सत्यवासना[4]निवृत्तिः कथं मिथ्यावासनाकाल इति चेदाह—मिथ्येति । अभ्यासाप्रकर्षान्मिथ्यावासनाऽनन्तजन्माभ्यस्ता बाधिताऽप्यनुवर्तते । ततः प्रारब्धोद्बोधेन केवलां परां वासनां विस्मृतः सन् मिथ्यावासनाविष्टो भवति । ततः प्राप्तां मिथ्यावासनां सत्यवासनाविष्टो भ्रान्तिरूपां निश्चित्य ॥ ४८ ॥ मिथ्यावासनां भ्रमात्मिकां निश्चित्य ततो विधूयेति सम्बन्धः । सत्यां वासनामुपैति सम्प्राप्नोति । ततो

१. वासना या–क० । २. परः–क०, परम्–ख०
३. मोक्षसा–क० ख० । ४. नाया निवृत्तिः–क० ख० ।

ततो न बाधिता सत्यवासना भवति क्वचित् ।।४९।।
मध्यमस्य विस्मृतिर्नो न मिथ्याज्ञानमेव च ।
अविस्मृतस्येच्छयैव मिथ्याज्ञानं क्वचिद्भवेत् ।।५०।।
सिद्धस्यैषा स्थितिः प्रोक्ता साधकस्योच्यते शृणु ।
यथा यथा तत्परः स्यात्तथाऽविस्मृतिरुच्छ्रिता ।।५१।।
पूर्णस्य [1]विस्मृतिर्नास्ति मिथ्याज्ञानं प्रयत्नतः ।
उत्तमस्य पुनर्ब्रह्मन् समाधिव्यवहारयोः ।।५२।।
न भेदो लेशतोऽप्यस्ति यतोऽविस्मरणं सदा ।
यः समाधिपरो मध्यस्तस्य याऽविस्मृतिः स्थिता ।।५३।।
[2]सेषन्म्लाना भवेन्मिथ्याज्ञानभूमिषु भूसुर ।
यस्तूत्तमोऽपि स्वाच्छन्द्यात् प्रारब्धवशतोऽपि वा ।।५४।।

मिथ्यावासनाया भ्रान्तित्वनिश्चयात् ॥ ४९ ॥ एवं मन्दज्ञानिनः स्थितिमुक्त्वा मध्यस्य स्थितिमाह—मध्यमस्येति । सत्यवासनाविस्मृतिर्नो । मध्ये शारीरव्यवहारदशायां सत्यवासनामविस्मृतस्यैव स्वेच्छया व्यवहारोपयुक्तं मिथ्याज्ञानं भवेत् ॥ ५० ॥ एवं सामान्यतो मध्यमस्य स्थितिमुक्त्वा तस्य सिद्धसाधकत्वेन द्वैविध्याद् द्वयोः क्रमेण स्थितिं वक्तुमाह—सिद्धस्येति । तत्परः समाध्यभ्यासपरः । उच्छ्रिता दृढाऽविस्मृतिः ॥ ५१ ॥ पूर्णस्य समाध्यभ्यासपारङ्गतस्य प्रयत्नतः स्वेच्छया । उत्तमज्ञानिस्थितिमाह—उत्तमस्येति ॥ ५२ ॥ स्थितेर्न भेदः । अत्र हेतुः—यत इति । नन्वेवं चेन्मध्यमोत्तमयोः को भेद इति चेदाह—य इति । अविस्मृतिः ॥ ५३ ॥ सा अविस्मृतिः । मिथ्याज्ञानदशासु ईषन्म्लाना भवेत्, व्यवहारदशासु सत्यवासना विच्छिन्नेव भवेदिति तात्पर्यम् । उत्तमस्य कदाप्यविस्मृतेरम्लानतेत्याह—यस्त्विति । स्वाच्छन्द्यात् स्वेच्छया

१. च स्मृति–ख० । २. सैषा–क० ।

समाध्यतत्परो भूयात् तस्याम्लानैव चास्मृतिः ।
वस्तुतः शृणु भूदेव मध्यमोत्तमज्ञानिनाम् ॥५५॥
कर्म[1] नैवास्ति यत्किञ्चिद्यतस्ते पूर्णतां गताः ।

प्रारब्धाद्वा समाध्यतत्परो व्यवहारपरः । तदाप्यविस्मृतिरम्लानैवेत्यर्थः ॥ ५४ ॥ एवं मध्यमोत्तमयोः प्रारब्धाभ्युपगमेन तत्फलं प्रतिपाद्य सम्प्रति तयोर्न प्रारब्ध[2]मपीत्याह—वस्तुत इति ॥ ५५ ॥ यत्किञ्चित् प्रारब्धं कर्मापि । पूर्णत्वं गतानां कुतो न प्रारब्धमिति चेदाह—संविदिति । यत् यस्मात् । ते मध्यमा [3]उत्तमाश्च संविदात्मातिरिक्तं न किञ्चन पश्यन्ति । अत्रेदं तात्पर्यम्—[4]कर्मादृष्टं फलानुरोधेन कल्प्यते । ज्ञानिषु फलदर्शनाज्ज्ञानेन प्रारब्धानिवृत्त्यभ्युपगमः । तच्च फलं मन्दज्ञानिन्येव सम्भवतीति तस्यैव कल्पनीयं प्रारब्धं नान्ययोः । फलं च[5] तदेव भवति यत्सुखाद्यन्तःकरणारूढं स्वीयत्वेन भासेत । नहि मध्यमोत्तमयोरन्तःकरणारूढं तत्स्वीयत्वेन भातीति वक्तुं युक्तम्, समाधौ सुखादेरत्यन्तमभानात्, व्युत्थाने च प्रतिबिम्बानां दर्पण[6]मात्रात्मत्ववद् दृश्यमात्रस्यानात्मनः स्वात्मदृङ्मात्रत्वप्रतीतेरात्ममात्रत्वेन भासमानसुखादेः स्वीयत्वेनाभानात् । न च स्वात्मत्वेनापि भासमानं सुखादि प्रारब्धनिमित्तकमेवेति वाच्यम्, परकीयत्वेन भासमानसुखादेरपि भासमानत्वसामान्यात् स्वप्रारब्धमूलकत्वप्रसङ्गात् । नहि तत्परप्रारब्धमूलकमेवेति वक्तुं शक्यम्, परैः स्वीयत्वेन ज्ञायमानसुखादेरेव तत्प्रारब्धनिमित्तकत्वात्, स्वीयत्वेन ज्ञायमानस्य तस्य स्वं प्रत्येव फलत्वात्, परकीयत्वेन ज्ञायमानस्य तस्य सुख्यहमिति स्वसम्बन्धानुभवानिमित्तस्य घटादि-

---

१. कर्मणैवास्ति—क० । २. मित्याह—क० ख० ।
३. 'उत्तमा' नास्ति—क० । ४. कर्मादृष्टफला—क० ख० ।
५. चैतदेव—क० ख० । ६. मात्रात् सत्त्व—क० ।

संविदात्मातिरिक्तं यन्न ते पश्यन्ति किञ्चन ॥५६॥

तुल्यत्वेन तं [1]प्रत्यफलत्वाच्च। अतस्तेषां फलभूतसुखाभावान्न प्रारब्धकल्पने प्रयोजनमिति। मन्दज्ञानिनस्तु सर्वं संविन्मात्रमिति सत्यवासनाऽनुसन्धानविस्मरणेन व्यवहारप्रसक्तौ तात्कालिकसुखादेः स्वीयत्वेन भानादस्ति प्रारब्धकल्पनप्रयोजनम्। ननु मन्दज्ञानिनां वास्तवस्वरूपानुसन्धानविच्छेदेन विपरीतप्रत्ययसम्भवे तद्विपरीतप्रत्ययैः प्रतिबद्धतज्ज्ञानस्य न पुरुषार्थसाधकत्वं साक्षादिति चेत्, [2]सत्यमेवैतदिति केचिदाहुः। तत्त्वविदस्तु सम्यग्ज्ञानसमकालमेवाज्ञाननिवृत्तेः स्वरूपावरणस्य नष्टत्वात् प्रारब्धनिमित्तकाज्ञानविक्षेपशक्तेरेव किञ्चित्कालमनुवृत्तिः। फलप्रदानमात्रेण प्रारब्धे स्वत उपक्षीणे सति देहान्तरप्रापककर्माभावात् स्वरूपावरकाज्ञानान्तरोत्पत्तिनिमित्ताभावाच्च विकल्पोत्पादकान्तःकरणस्याप्यनिन्धनानलवन्नाशे देहान्तरासम्भवो ब्रह्मात्ममात्रपरिशेष इति मोक्षोऽवर्जनीय एव। यस्य तु विपरीतप्रत्ययेन ज्ञानं बाधितमेव भवेन्न तस्य सम्यग् ज्ञानम्, किन्तु ज्ञानाभास एव। अत एव केवलज्ञानिजीवन्मुक्तयोर्भेदः शास्त्रोक्तः सङ्गच्छते। मन्दज्ञानिनः सदानुसन्धानाभावेनाऽन्तकाले "यं यं वापि स्मरन् भावम्" [ भ० गी० ८।६ ] इति न्यायेन प्रारब्धनिमित्तकविपरीतस्मरणेन देहान्तरप्रसङ्ग इत्यपि न, मध्यमोत्तमज्ञानिनोरपि प्रारब्धनिमित्तकविपरीतभावनाया दुर्निवारत्वात्[3]। तयोरफलीभूतसुखादेराकस्मिकत्ववारणाय कथञ्चित् प्रारब्धस्याभ्युपेयत्वात्। तयोर्न प्रारब्धमिति तु मन्दज्ञानिप्रारब्धविसदृशत्वादिति[4]

१. प्राप्य फल—क० ख०।
२. सत्यमेवं वै तदिति—क० ख०।
३. 'दुर्निवारत्वात्' इत्यस्याग्रे 'यं यं वापीत्येतस्य ज्ञान्यतिरिक्तपरत्वात्। अज्ञानस्य ज्ञानसमकालनष्टत्वेन प्रारब्धक्षये' इत्यधिकः पाठः—क० ख०।
४. विपरीतसदृशत्वात्—क० ख०

कर्म शेषं कथं शिष्येद् यतः सर्वं चिदग्निना ।
भस्मीकृतमतस्तेषां न किञ्चित् परिशिष्यते ॥५७॥
ऐन्द्रजालिककर्मेव त्वितरैरेव दृश्यते ।
शृणु ब्रह्मन् रहस्यं ते प्रवक्ष्यामि समासतः ॥५८॥
शिवस्य या दृशिः सैव ज्ञानिनां दृष्टिरुच्यते ।
नास्ति भेदो लेशतोऽपि सत्यमेतन्न संशयः ॥५९॥

योजनीयम् । [1]यं यं वापीत्येतस्य ज्ञान्यतिरिक्तपरत्वात् । अज्ञानस्य ज्ञानसमकालनष्टत्वेन प्रारब्धक्षये [2]मनसोऽपि नाशादन्तकाले ज्ञानिनो विपरीतस्मृत्यसम्भवात् । तथा च केवलज्ञानिजीवन्मुक्तयोर्दृष्टदुःख-सत्त्वासत्त्वाभ्यां भेदो ज्ञेयः । अत एवोक्तम्—"तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् । ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥" [ प० सा० ८३ ] इति । तथा—"एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः । ज्ञाते[3] शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना ॥ [4]करणेन नास्ति कृत्यं क्वापि भावनयापि वा[5] ॥" [शि० दृ० ७।५-६] इति ॥ ५६ ॥ सर्वस्य संविदात्मानतिरेकदर्शनाद् मध्यमोत्तमानां मन्दज्ञानिवत् [6]शेषं कर्म प्रारब्धरूपं न शिष्यतीत्याह—कर्मेति । सर्वं द्वैतम् । न किञ्चित् कर्म ॥ ५७ ॥ ननूत्तमज्ञानिनां हर्षविषादादि-प्रारब्धफलकार्यं दृश्यत इति चेदाह—ऐन्द्रेति । ऐन्द्रजालिकस्य यत्कर्म स्वशिरश्छेदादिरूपं तद्यथेतरैरेव दृश्यते, स्वेन न दृश्यते, एवमस्य हर्षादिकमिति भावः । ज्ञानिनां शिवतुल्यत्वान्न कर्मेत्याह—शृण्विति ॥ ५८ ॥ [7]दृशिः शुद्धचिदात्मकस्वात्ममात्ररूपा । अतो न प्रारब्धशेष

१. 'यं यं···प्रारब्धक्षये' नास्ति—क० ख० । २. न सोऽपि—क० ख० ।
३. इति—क० । ४. कारणेन—क० ख० ।
५. च—क० ख० ग० । ६. शेषकर्मारब्ध—क० ख० ।
७. 'दृशिः' नास्ति—क० ।

तस्मान्न किञ्चित् कर्मापि ज्ञानिनामनुवर्तते ।
इति श्रुत्वा स वसुमान् हेमाङ्गदनिरूपितम् ॥६०॥
सर्वसन्देहनिर्मुक्तो विज्ञानविशदाशयः ।
पूजितो राजपुत्राद्यैः स्वं स्थानं प्रत्यपद्यत ॥६१॥
प्राप्तौ स्वनगरं राजपुत्रावपि ततः परम् ।
एवं श्रुत्वा पुना रामः पप्रच्छात्रिसुतं मुनिम् ॥६२॥
श्रुतमेतद्धि विज्ञानं गुरो त्वन्मुखनिर्गतम् ।
विनष्टो मम सन्देहो विदितं तत्महत्पदम् ॥६३॥
सर्वानुस्यूतसंवित्तिमात्रात्मा भाति सर्वतः ।
तथापि भवता प्रोक्तमादितः सर्वमेव तु ॥६४॥
संक्षेपेण पुनर्ब्रूहि विज्ञानं सारवत्तरम् ।
यावद्धारयितव्यं मे गुरो सर्वात्मना मया ॥६५॥
इत्यापृष्टः स रामेण पुनः प्राहात्रिनन्दनः ।
शृणु राम प्रवक्ष्यामि सर्वसारतमं पुनः ॥६६॥
या चितिः परमेशानी पूर्णाहन्तामयी परा ।

इति भावः ॥ ५९ ॥ किञ्चित् । ज्ञानिनां मध्यमोत्तमानाम् । इति राजकुमारोक्तं सर्वम् ॥ ६०–६२ ॥ तन्महत्पदं शुद्धचिदद्वयात्मरूपम् ॥ ६३ ॥ स्वानुभवमेवाह—सर्वेति । सर्वेषु वेद्याकारपरिच्छिन्नज्ञानेषु यानुस्यूता संवित्तिः शुद्धचिद्रूपा, तन्मात्ररूपो ममात्मा सर्वतो बहिरन्तश्च भाति । यद्यप्यहं कृतकृत्यः, तथापि प्रोक्तार्थस्याविस्मर्तव्यत्वेन प्रोक्ताखिलार्थं संक्षेपेण ब्रूहीति पृच्छति—तथापीति ॥ ६४ ॥ मे सर्वात्मना यावद्धारयितव्यं तावद् ब्रूहि ॥ ६५ ॥ सर्वस्य प्रोक्तस्य सारतमम् ॥ ६६ ॥ या त्वया स्वात्मत्वेनानुभूयमाना परमेशानी सर्वाधिकेशनशीला । परमस्वातन्त्र्ययुतेति भावः । किं तत् स्वातन्त्र्यमिति चेदाह—पूर्णाहन्तामयीति । चितेर्हि जडवैलक्षण्याय कश्चन

सा स्वातन्त्र्याभिधमायाशक्तिमाहात्म्यतः सदा ॥६७॥
जगदाभासयेद् नूनं दुर्घटैकविधायिनः ।

धर्मोऽवश्यमभ्युपेयः। स च स्वरूपस्फूर्तिरेव। स्फूर्तिश्च द्विविधा लोकसिद्धा—[1]अहमिति, इदमिति च। तत्रेदमिति स्फूर्तेः परतन्त्रत्वेन परापेक्षायामनवस्थादिप्रसक्त्या चितेरहमित्येव स्फूर्तिर्वाच्या। सा चाहंस्फूर्तिर्देहादावपूर्णा, [2]कालादिपरिच्छेदात्। इयं त्वखिलकालादिस्वरूपसाधनभूतचिति विश्रान्तेति पूर्णा। अत पूर्णाहन्तेत्युच्यते। स्वरूपानतिरिक्ता सेति तन्मयीत्युच्यते। अखण्डरूपाया एव चितेरुपदेशावसरे एवं विभज्य कथनं स्वरूपपरिचयाय। अत एव परा अनुत्तरा। परचितेर्यत् स्वातिरिक्ते दृश्ये विश्रमः[3] सा इदन्तेत्युच्यते। दृश्यानुन्मुखत्वेन यः स्वरूपविश्रमः[3] साऽहन्ता। सा च देहादिविश्रान्ता परिच्छिन्नेत्युच्यते। देहादिव्यावृत्तशुद्धचिति विश्रान्ता पूर्णाहन्तेत्युच्यते। एवंविधा सा चितिः स्वातन्त्र्याभिधमायाशक्तिमाहात्म्यतः पूर्णाहन्तैव सृष्ट्यादौ सिसृक्षोरिच्छात्मिका स्वातन्त्र्यमिति, सृष्टिकाले कर्तुः क्रियात्मिका मायेति चोच्यते। [4]प्रकृते [5]क्रिया हि न परिस्पन्दरूपा परिणामरूपा वा, किन्तु दर्पणप्रतिबिम्बावभासवद[व]भासरूपा। एवं च पूर्णाहन्ता स्वातन्त्र्यं मायेति ज्ञानेच्छाक्रियात्मकशक्तित्रयमुक्तम्। मायाशक्तेर्माहात्म्यं महित्वमुच्छूनता। ततो जगदवभासयेदित्यन्वयः। सदेति पूर्णाहन्तायाः स्वरूपभूतत्वेन जगदवभासस्य कालपरिच्छेदो नास्तीति भावः। अत एवोक्तम्—"सदा सृष्टिविनोदाय" [ शि० स्तो० २०।६ ] इत्यादि ॥ ६७ ॥ दुर्घटैकविधायिनो माहात्म्यत इति सम्बन्धः। दुर्घटस्यैकमसहायं यद्विधानकर्तृ तस्मादित्यर्थः। एवं जगदवभासनकालेऽपि स्वस्याद्वैतचिन्मात्रत्वं न प्रतिहतं भवतीत्येतद्

१. अहमिदमिति—क० ख०। २. कला—क०।
३. विश्रामः—क०। ४. न तु—क०। ५. क्रियाहीन—क०।

प्रतिबिम्बवदादर्शे तत्प्रकारं शृणु क्रमात् ॥६८॥
या सा परा चितिः पूर्णा पूर्णाहंभावबृंहिता ।
स्वातन्त्र्यवशतः स्वात्मरूपं द्वेधाऽवभासयत् ॥६९॥
तत्रैकांशेऽप्यहंभावोऽपूर्ण आभासितो यदा ।
तदा द्वितीयभागस्तदहंभावविनिर्गतः ॥७०॥
बाह्यमव्यक्तमभवत् तद्दृष्ट्यैव भृगूद्वह ।
अपूर्णाहंभावयुत एष प्रोक्तः सदाशिवः ॥७१॥
स तमव्यक्तभागं तु पश्यन् भिन्नमपि स्वतः ।

दृष्टान्तद्वाराह—प्रतिबिम्बेति । तत्प्रकारं जगदवभासनप्रकारम् । क्रमात् कार्यकारणक्रमात् ॥ ६८ ॥ या सा अनुपदं निरूपिता । पूर्णाहम्भावेनापरिच्छिन्नस्वरूपस्फूर्त्या बृंहिता निर्भरा, [1]स्फूर्त्यैकघनेति यावत् । स्वात्मरूपं चित्स्फूर्तिघनम् ॥ ६९ ॥ द्विविधतामेवाह—तत्रेति । स्वरूपे इत्यर्थः । अंशद्वयमवभास्य एकांशेऽपूर्णाहंभावोऽपि यदाऽवभासितः, तदा यो द्वितीयभागः स्वेतरभाग[2]स्तदहंभावात्तस्मादपूर्णाख्यादपूर्णाहंभावाद्विनिर्गतोऽभवत्[3] । अपिना स्वरूपभूतपूर्णाहन्ताया इयमन्येति सूचितम् । अत एव स्वरूपलोपो नास्तीति ज्ञेयम् । स्वात्मन्यंशद्वयमवभास्य तत्रैकांशे परिच्छिन्नाहंभावावभासनेनेतरांशमहंभावानाक्रान्तमवभासयदिति भावः ॥ ७० ॥ योऽयमंशोऽहंभावानाक्रान्तः स बाह्यपदार्थरूपमव्यक्तमभवत्[4] । अंशद्वयादिबाह्यपर्यन्तविकल्पावभासः सर्वोऽपि परिच्छिन्नाहंभावाक्रान्तचिदंशदृष्ट्यैव, न तु पूर्णचिद्दृष्ट्येत्याह—तद्दृष्ट्यैवेति । एष परिच्छिन्नाहंभावयुतचिदंश एव सदाशिव इत्युक्तः यमौपनिषदा ईश्वरं प्राहुः ॥ ७१ ॥ सः सदाशिवः । स्वतः स्वस्मात् । भिन्नं पश्यन्नपि । अहमेतदिति सदा अनुसन्धिपरोऽ-

---

१. स्पूर्त्यैक—क० ।
२. 'स्वेतरभागः' नास्ति—क० ख० ।
३. भवेत्—क० ।
४. मेव भवेत्—क० ख० ।

सदाशिवः

अहमेतदित्यभेदाद् अनुसन्धिपरः सदा ॥७२॥
स एव भूयः स्वातन्त्र्यात् सिसृक्षुर्विविधं जगत् ।
अव्यक्तमात्मनो देहमेतदेवाहमास्थितः ॥७३॥

ईश्वरः

इत्येवमनुसन्धानपर ईश्वर आबभौ ।
अव्यक्तमभिमानेनाविष्ट ईश्वर एव तु ॥७४॥
त्रिधा समभवद् रुद्रहरिद्रुहिणरूपतः ।
द्रष्टृदृश्यमहाराशिसमुदायावभासकाः[1] ॥७५॥
विधयो विविधा आसंस्तथा तद्रूपसंस्थिताः ।
बहवो हरयोऽप्यासंस्तत्संहारपरायणाः ॥७६॥

भिमानपरो[2]ऽभवदिति शेषः । औपनिषदास्त्वेतमव्यक्तभागमेवाविद्यामायादिशब्दैर्व्यवहरन्ति । यथास्मद्देहे विभेदेन भासमानेऽप्यहंभावादस्मार्क स्वामित्वमेवमस्याव्यक्त इति ज्ञेयम् ॥ ७२ ॥ स एव सदाशिव एव । स्वातन्त्र्यात् स्वाहंभावरूपात् । अव्यक्तरूपमात्मदेहं दृष्ट्वेति शेषः । एतदेवाव्यक्तरूप एवाहमास्थित इत्येवं यदानुसन्धानपर इति सम्बन्धः ॥ ७३ ॥ तदा सदाशिव एवेश्वर आबभौ । अहमेतदिति चित्प्राधान्येनानुसन्धिपरः सदाशिवः, एतदहमित्यव्यक्तप्राधान्यानुसन्धिपर ईश्वर इति भावः । अव्यक्तमहमित्यभिमानेनाविष्ट ईश्वर एव त्रिधाऽभवदिति सम्बन्धः ॥ ७४ ॥ तत्रेश्वरः स्वस्वातन्त्र्यादव्यक्तं तमःसत्त्वरजोगुणैर्बहुविधमाभास्य तत्तद्गुणपरिच्छिन्नाव्यक्तांशेष्वसंख्यातेषु परिच्छिन्नाहन्तारूपाभिमानेन रुद्रहरिद्रुहिणरूपेण त्रिधा राशित्रयरूपेण समभवत् । त्रयाणां सृष्टिस्थितिसंहारक्रिया आह—द्रष्टिति । महाराशिर्ब्रह्माण्डम् । तदनेकत्वाभिप्रायेण—समुदाय इति । उत्पत्त्यवभासकाः ॥ ७५ ॥ तद्रूपसंस्थिता अण्डानां रूपं संस्थितं येभ्यः । स्थितिकर्तार

१. भासकः—क० । २. 'अभिमानपरो' नास्ति—क० ख० ।

अनेकशोऽभवन् रुद्रा एवमेष जगद्विधिः ।
एवंविधं जगत्तत्त्वं दर्पणप्रतिबिम्बवत् ॥७७॥
भासते केवलं राम नहि जातं तु किञ्चन ।
परा चितिः प्रपूर्णाहंभावरूपैव सर्वदा ॥७८॥
स्थिताप्यनेका सम्पूर्णाहंभावपरिबृंहिता ।
यथा त्वं राम सर्वस्मिन् देहेऽहंभावबृंहितः ॥७९॥
पृथग् नेत्राद्यहंभावैरपि तत्तत्क्रियापरः ।
एवमेव परा संवित् पूर्णाहन्तासमाश्रया ॥८०॥
सदाशिवादिस्तम्बान्ताऽपूर्णाहन्ताश्रयापि वै ।
वस्तुतः सैव परमा चितिरेवं हि भासिनी ॥८१॥
देहाहंभावरूपस्त्वं स्वतो रूपरसादिकम् ।

इति यावत् । संहारपरायणा रुद्रा आसन्निति सम्बन्धः ॥ ७६ ॥ अनेकशो रुद्रा आसन्नित्यर्थः । अत्राण्डानामनन्तत्वेन ब्रह्मादीनामनन्तत्वं ज्ञेयम् । जगतो विधिर्विधानम् । एवं प्रोक्तवत् । एवंविधमपि जगत्तत्त्वं [1]परचितेरव्यतिरिक्तमेवेत्याह—दर्पणेति ॥ ७७ ॥ एवमवभासनमेव जगदुत्पत्त्यादि न तस्यारम्भः परिणामो वेत्याह—भासत इति । एवमवभासनमात्रसारत्वाज्जगदवभासनेऽपि [1]परचितेः स्वरूपादप्रच्युतिमाह—परा चितिरिति ॥ ७८ ॥ वस्तुतः सदाशिवादिक्रम्यन्तानां तन्मात्ररूपत्वादनन्तपरिच्छिन्नाहंभावपूर्णापि सेत्याह—स्थितेति । रूपैव स्थितापीति सम्बन्धः । एतदेव सदृष्टान्तमुपपादयति—यथेति ॥७९॥ यथा त्वमखिलदेहव्याप्ताहंभाववानपि रूपादिग्राहकनेत्रादितत्तदेकदेशाहन्तासमुदायवान्, एवमेव सा परा संविदिति ॥ ८० ॥ वस्तुत इति । वस्तुतः सा परसंविदेव पूर्णाहन्तापरिच्छिन्नाहन्तासदाशिवादिरूपेणावभासिनीत्यर्थः ॥ ८१ ॥ अधुना

१. परा—क०

ग्रहीतुमसमर्थोऽपि चाक्षतादात्म्यमेत्य तु ॥८२॥
सर्वं गृह्णासि सततमेवं देवः सदाशिवः ।
स्वतः सर्वाभेदमयो ब्रह्मादिस्तम्बराशिषु ॥८३॥
[1]अन्तस्तादात्म्यमापन्नो जानाति च करोति च ।
यथा ते निर्विकल्पं तु रूपं सर्वाश्रयं हि सत् ॥८४॥
न किञ्चिदपि जानाति करोति च भृगूद्वह ।
एवमेव परा संवित् सर्वलोकसमाश्रया ॥८५॥
भेदलेशमपि क्वापि न जानाति करोति च ।
एतावज्जागतं सर्वं तस्यामेवावभासते ॥८६॥
[2]तत्स्वातन्त्र्यात् प्रभूतं[3] च दर्पणप्रतिबिम्बवत् ।

सर्वज्ञत्वं सर्वकर्तृत्वं सदाशिवस्य, शुद्धपरचितेर्वस्तुतो न कर्तृत्वादिकमिति सदृष्टान्तं क्रमेणाह—देहेति । स्वतः चक्षुरादितादात्म्यमप्राप्य अक्षतादात्म्यमिन्द्रियतादात्म्यमेत्य सर्वं गृह्णासीति सम्बन्धः ॥ ८२ ॥ दार्ष्टान्तिके योजयति—एवमिति । सर्वान्तर्यामित्वेन सर्वाभेदमयः ॥ ८३ ॥ सर्वं जानाति करोति च । यथेति । दर्पणस्थानीयं तव निर्विकल्पं शुद्धचिद्रूपं प्रतिबिम्बस्थानीयं देहेन्द्रियाद्यखिलाश्रयं सदपि ॥ ८४ ॥ न किञ्चिज्जानाति करोति च । ज्ञेयकार्ययोर्वस्तुतः स्वात्ममात्रत्वादिति भावः । दार्ष्टान्तिके सङ्गमयति—एवमिति ॥ ८५ ॥ क्वापि काले । कुत एवमिति चेत् ? ज्ञेयकार्ययोस्तन्मात्ररूपत्वादित्याह—एतावदिति ॥ ८६ ॥ अवभासनं भवनं च दर्पणे स्वशक्त्या प्रतिबिम्बानामिव परचिति[4] स्वस्वातन्त्र्येण जगत इत्याह—तत्स्वातन्त्र्यादिति । अवभासते प्रभूतं चेति सम्बन्धः । अवभासनं प्रकर्षेण । [5]सर्वं च तदधीनमिति भावः । अत एवाह—जगत इति । तस्याः परचितेः

१. अतः–क० । २. स्वस्वा–ख० । ३. तश्च-क० ।
४. पराचितिः–क० ख० । ५. सत्त्वं–ग० ।

जगतो भासनं सर्वं तस्या एवावभासनम् ॥८७॥
यथादर्शाभास[1]एव प्रतिबिम्बावभासनम् ।
अत्र त्वमहमन्ये च द्रष्टारो दृङ्मयाः खलु ॥८८॥
दृश्यासंमेलने शुद्धचितिरेव न चेतरत् ।
घटादिदर्पणो यद्वद् घटादीनामसङ्गमे ॥८९॥
शुद्धदर्पणमात्रः स्याद्विभेदः प्रतिबिम्बतः ।
एवं विकल्पसम्भूतदृश्याभासप्रमार्जने ॥९०॥
शेषिता परमा संविदद्वितीयस्वरूपिणी ।
महानन्दघना चैषा दुःखलेशविवर्जनात् ॥९१॥
सर्वानन्दघनाकारा यतः सर्वैरभीप्सिता ।

॥ ८७ ॥ दृश्यवद्द्रष्टॄणामपि तन्मात्रतामाह—अत्रेति । जगतीत्यर्थः ॥ ८८ ॥ ये दृङ्मया भासन्ते, तेषां स्वरूपं दृश्यस्यासम्मेलनेऽनवभासे सति शुद्धा परा चितिरेव । एतद् दृष्टान्तद्वारोपपादयति—घटेति । घटादिप्रतिबिम्बपरिच्छिन्नदर्पणांशः ॥ ८९ ॥ प्रतिबिम्बकालेऽपि [2]भेदः प्रतिबिम्बरूपौपाधिक इत्याह—विभेद इति । दार्ष्टान्तिके योजयति—एवमिति ॥ ९० ॥ सङ्कल्पेन भासमानदृश्यस्यानुल्लेखेन प्रमार्जने कृते सति शेषिता अनुल्लेखसाक्षित्वेन स्थिता स्वात्मसंविदद्वितीयस्वरूपिणी परसंविदेव । तद्रूपस्य पुरुषार्थत्वसिद्धये सुखरूपतामाह—महानन्देति । महताऽपरिच्छिन्नेनानन्देन घना निबिडा । अखण्डानन्दरूपेति यावत् । कुत एवमिति चेदाह—दुःखेति । दुःखस्यौपाधिकत्वेन वस्तुतः स्वरूपे तदभावादखण्डानन्दरूपता ॥ ९१ ॥ सर्वेति । सर्वेषां प्राणिनां ये आनन्दा विषयाभिव्यक्त्याऽवभासमानाः, तैर्घनो निबिड आकारः स्वरूपं यस्याः सा । सर्वैरनुभूयमानानन्दमात्रस्वरूपेति यावत् । एवमेवैतदिति हेतुप्रदर्शनेन सम्भावयति—[3]यत इति । आत्मा

१. एष—क० ख० । २. भेदप्रति—क० । ३. 'यत इति' नास्ति—क० ख० ।

सुखमात्मस्वरूपं स्यात् सर्वैर्यस्मादभीप्सितम् ॥९२॥
यदर्थो देहादिभावो यन्न कस्यापि नेप्सितम् ।
यस्यैव लेशो विषयानन्द इत्यभिधीयते ॥९३॥
स एव भारहानादौ सुषुप्तौ चावभासते ।

आनन्दैकरूपः सर्वाभीप्सितत्वात् स्त्रीसुखवदिति प्रयोगः। ननु सर्वाभीप्सितं सुखं भोग्यम्। तत्कथं भोक्तृरूपं स्यादित्याक्षेपपरिजिहीर्षयाह—सुखमिति। आत्मस्वरूपमेव सुखं भवेत्, सर्वाभीप्सितत्वात्, यन्नैवं तन्नैवम्, यथा दुःखमिति प्रयोगः॥ ९२॥ नन्वेष हेतुर्देहस्त्रीधनादिष्वीप्सितेषु[1] व्यभिचरित इत्याशङ्कां शमयन्नाह—यदर्थ इति। [2]देहादेर्मुख्येप्सितत्वाभावः। यतो हि देहाद्यमात्मसुखार्थमीप्सितम्। [3]एवं स्वर्गादिसुखार्थिनामनशनादिना देहादित्याग उपपद्यते। अत एव आत्मस्वरूपं कथञ्चिदपि कदाचिदप्यनीप्सितं नेत्याह—यदिति। आत्मस्वरूपमित्यर्थः। अत आत्मैव सुख्येप्सितत्वात् सुखात्मक इति भावः। ननु स्त्रीसुखादेः स्पष्टं भोग्यत्वानुभवात्तदतिरिक्तसुखस्याप्रामाणिकत्वान्नात्मनः सुखरूपतेति चेदाह—यस्यैवेति। यस्यात्मानन्दस्य लेश एव विषयानन्द इत्यागमेष्वभिधीयत इत्यर्थः। यथा गगनस्य निष्क्रियस्य घटादिपरिच्छिन्नांशे औपाधिकी क्रियोपलभ्यते, यथा च चिदात्मनोऽवेद्यस्य दृश्यपरिच्छेदेनौपाधिकं वेद्यत्वम्, एवं सुखस्य परिच्छेदनिमित्तमौपाधिकं भोग्यत्वमिति भावः॥ ९३॥ नन्वात्मनः सुखार्थित्वमेव न सुखरूपता, प्रमाणाभावादित्याशङ्कामपोहितुमाह—स एवेति। स्वरूपभूतानन्द एव। भारस्य हानं त्यागः। आदिनाऽसह्यशिरोव्यथादेः सद्यो निवृत्तिदशा। सुषुप्तौ चावभासते। अत्रेदं तात्पर्यम्—भारत्यागोत्तरं

१. 'ईप्सितेषु' नास्ति—ग०। २. देहादेर्देहमुख्ये—क० ख०।
३. अत एव—ख० ग०।

चिदेव स्पृहणीयत्वादानन्द इति प्रोच्यते ॥९४॥

सर्वैरनुभूयमानं सुखमनपह्नवनीयं स्वसंवेदनसिद्धमस्ति। तस्य स्त्र्यादिसङ्ग[1]निमित्तकत्वाभावात् स्वरूपभूतत्वम्। न च तद्भारत्याग-प्रयुक्तमिति वक्तुं युक्तम्, भारत्यागस्याभावत्वेन तस्माद्भावोत्पत्ते-रनभ्युपगमात्। नहीतरत्तदा किञ्चिदस्ति सुखप्रयोजकम्, अतस्त[2]-त्स्वरूपभूतमेव सुखमिति। ननु तदा गाढदुःखनिवृत्तेरेव सुखत्वं भ्रान्त्या भासत इत्याशङ्क्याह—सुषुप्ताविति। स्वस्थोऽपि पुरुषः सुषुप्तौ निर्निमित्तं महत्सुखमनुभवति। व्युत्थितस्य सुखमहमस्वाप्समिति स्मृतिः, तस्या अपह्नोतुमशक्यत्वात्। तच्च स्वरूपभूतमेव। तत्र हि सुखानभ्युपगमे पशुपामराद्यखिलानां सुषुप्तौ प्रवृत्तिर्नोपपद्येत[3]। ननु सुखस्य स्वरूपभूतत्वे तत्सर्वदा कुतो नानुभूयत इति चेदुच्यते—यथा हि सर्वेषामाधारध्वनिः सततं विद्यमानोऽपि बाह्यध्वनिना[4] तिरोभूतः, अत एव कर्णगाढपिधानादिना श्रूयते; एवं स्वात्मसुखं काम-कर्तव्यताद्यखिलवासनौघदावाग्निदन्दह्यमानस्य तद्दुःखात्तिरोहितम्। तस्य वासनौघस्य सुषुप्तौ स्वकारणे विलयात् पिहितकर्णस्य ध्वने-रिवात्मसुखस्याभिव्यक्तिः। भारवहनसमये भारनिमित्तकमहादुःखेन वासनौघकृतदुःखस्य तिरोभावाद् भारदुःखमेव प्ररूढम्। भारत्यागेन तद्दुःखनिवृत्तौ वासनादुःखोद्भवपर्यन्तमात्मसुखमभिव्यक्तं भवति। स्त्र्यादिविषयसुखमप्येवम्। तथा हि—अनन्ता हि वासनाः कण्टकवत् प्रतुदन्त्योऽजस्रं हृदि समाहिताः। तत्रान्यतरविषयप्राप्तिसम्भावनायां तद्विषयककामनाया उत्कटत्वेन तज्जनितसन्तापस्योत्कटस्योपस्थितौ अन्याः सर्वा वासनास्तिरोहिता इव भवन्ति। ततस्तद्विषयप्राप्तौ महादुःखप्रशान्त्या इतरकामनोद्भवपर्यन्तमात्मसुखमभिव्यक्तं भव-तीति। तस्मात् सर्वस्पृहणीयत्वाच्चिदात्मैवानन्द इति प्रोच्यत

१. निर्निमित्त—क० ख०। २. अतस्तत्त्व—क०।
३. द्यते—क०। ४. ध्वनिरितो—क० ख०।

मूढा नहि विजानन्ति स्वात्मभूतं महासुखम् ।
विभिन्नमभिजानन्ति व्यञ्जकानां विभेदतः ॥९५॥
यथा हि दर्पणे भावा भासमाना निमित्ततः ।
यावद्दर्पणविज्ञानं भिन्ना एव विभान्ति वै ॥९६॥
विदिते प्रतिबिम्बत्वे भासमानं च पूर्ववत् ।
न दर्पणाद् भिन्नमस्ति त्वादर्शः शुद्ध एव हि ॥९७॥
एवं विदिततत्त्वस्य जगदेतावदीदृशम् ।
भासमानमपि स्वात्ममात्रमेव न चेतरत् ॥९८॥
घटादिकं मृदि यथा हेम्नि यद्वद्विभूषणम् ।
प्रतिमाश्च यथा शैले जगदेवं चिदात्मनि ॥९९॥

इत्याह—चिदेवेति ॥ ६४ ॥ ननु तर्हि सर्वे [1]सुखं स्वात्मभूतमिति कुतो न जानन्तीति चेदाह—मूढा इति । मौढ्यादेव न जानन्तीति भावः । स्वस्वरूपाद्विभिन्नम् । अत्र हेतुमाह—व्यञ्जकानामिति । व्यञ्जकस्य स्त्र्यादेर्भेदात्तत्तत्काले उत्पन्नं नष्टं चेति ज्ञानात् स्थिरात्मरूपं न जानन्तीति भावः॥६५॥ यथा स्वात्मभूतं सुखं विभिन्नं जानन्ति, तथा स्वात्माभिन्नं जगदप्यज्ञा विभिन्नं जानन्तीति सदृष्टान्तमाह यथेति । बिम्बात्मकनिमित्ततः । यावद्दर्पणविज्ञानमिति । दर्पणस्यायं दर्पणः प्रतिबिम्बग्रहणसमर्थ इति विशेषेण ज्ञानपर्यन्तमित्यर्थः । प्रतिबिम्बात्मका भावा भिन्ना एव विभान्ति । दर्पण एवैतत्सर्वमिति न भान्तीति भावः ॥६६॥ तेषां प्रतिबिम्बत्वे दर्पणज्ञानपूर्वकं विदिते सति । ततः पूर्ववद्भासमानमपि तत्सर्वं न दर्पणाद्भिन्नमस्तीति जानन्ति, किन्त्वादर्शः शुद्ध एवैतत्सर्वमिति हि जानन्तीति शेषः॥६७। दार्ष्टान्तिके योजयति—एवमिति । न चेतरद्भासत इति शेषः ॥ ६८ ॥ जगच्चिदात्मनोऽनतिरिक्तमित्येतदसत्ख्यातिनिराकरणाभिप्रायेण दृष्टान्तैर्निरूपयितुमुपक्रमते—घटादिकमिति । चिदात्मनि

1. 'सुखं स्व' नास्ति—क० ।

जगन्नास्त्येवेति दृष्टिरपूर्णैव भृगूद्वह ।
नास्तीति विपरीतो हि निश्चयो नैव सिद्धयति ॥१००॥
साधकात्मजगद्दृष्टेर्भूयः सम्भवतः स्फुटम् ।

[1]भासत इति शेषः ॥ ९९ ॥ जगदिति । असत्ख्यातिवादिनो निरधिष्ठानमेव भ्रममभ्युपगच्छन्ति । तन्मतनिराकरणार्थोऽयमारम्भः । तन्मते हि इदं रजतमित्यसदालम्बनं ज्ञानम् । एवं जगज्ज्ञानमप्यसदालम्बनमेव । जगन्नास्तीति निश्चयपूर्वकं शून्यस्यैव चिरभावनया जगद्भावनानिवृत्तौ शून्यात्मतापत्तिर्मोक्ष इति स्थितिः । एतद् दूषयति—जगन्नास्तीति । अपूर्णा भ्रमरूपेत्यर्थः । यथा हि सर्वात्मना घटादिकं नह्यसत्, अपि तु मृदादिरूपेण सदेव; एवं जगन्न सर्वथा ह्यसत्, किन्तु चिद्रूपेण सदेव । अतो जगदत्यन्तं नास्तीति निश्चयो भ्रम एवेति भावः । कुत इति चेदाह—नास्तीति । सर्वथा नास्तीति यो विपरीतनिश्चयः स प्रमाणत्वेन यतो न सिद्ध्यति ॥ १०० ॥ एतदपि कुत इति चेदाह—साधकेति । अस्ति नास्तीत्युभयपक्षसाधकस्य चिदात्मनः स्वरूपेण जगद्दृष्टेः सर्वनिषेधानन्तरमपि भूयः स्फुटं सम्भवात् । घटादीनां विकारात्मना नास्तीति निषेधेऽपि मृद्रूपेणानपोहनवद् दृश्यजगतो दृश्यत्वेन निषेधेऽपि दृग्रूपेणाव[2]भासनस्यानपोह्यत्वमिति भावः। अत्रेदं तत्त्वम् - जगद्धि मृदनुगतघटादिवच्चिदनुगतमेव भासते । अत्र परः सर्वथा निषेधति भासमानम्, असत्ख्यात्यभ्युपगमात् । [3]तत्रोच्यते—निषेद्धुर्निषेध्यकोटयन्तर्गतत्वे निषेधासिद्धेर्निषेद्धुरनुगतचिदात्मनोऽनिषेध इति । परस्य [4]सर्वनिषेधेऽयमाशयः—चितो हि सविकल्पः स्वभावः, स एव हि संसारः, निर्वि[5]कल्पचितेरप्रामाणिकत्वात् सर्वनिषेधे मोक्षसिद्धिरिति । निषेद्धुर्निषे-

१. 'भासत' नास्ति—क० । २. भासमानस्या—क० । ३. अत्रो—क० ख० ।
४. 'सर्व' नास्ति—क० । ५. कल्पेनेतर—क० ख० ।

नास्तीति शापमात्रेण कथं स्याज्जगतो लयः ॥१०१॥
आदर्शनगरं सर्वमस्त्यादर्शस्वभावतः ।

ध्यायोगादेव नास्तीति शापमात्रेण न जगतः सर्वात्मना लय इत्याह— नास्तीति । सर्वसाधकशुद्धचिदात्मनो निर्विकल्पस्य स्वप्रकाशस्य सर्वनिषेधे समाध्यादौ भासमानत्वात् ॥१०१॥ नन्वद्वैतमित्यत्र योऽयं निषेध्यांशः स किंविध इत्याशङ्क्याह—आदर्शेति । अत्राहुरौपनिषदाः— आदर्शप्रतिबिम्बवत् सदसदादिरूपैरनिर्वचनीयं जगन्निषेध्यमिति । आगमिकास्तु—आदर्शनगरावभासज्जगदवभासनम् । प्रतिबिम्बस्यादर्शात्मत्ववज्जगतश्चिदात्मत्वेन सत्यत्वमिति । ननु तर्हि किं निषेध्यमिति चेत् ? द्वैतमिति ब्रूमः । ननु द्वैतं जगदन्तःपाति न वा ? आद्ये सत्यत्वेन तन्निषेधायोगात् । द्वितीये तस्यानिर्वचनीयत्वमवर्जनीयमिति चेदुच्यते—द्वैतमपि जगदन्तर्गतमेव । ननु तर्हि कथं द्वैतस्य सत्यस्य निषेधः ? शृणु—अत्र नये हि भास्यस्य भासनानतिरिक्तत्वेन द्वैतस्य भ्रमभासनानतिरिक्तत्वाद् द्वैतनिषेधो द्वैतभ्रमनिरसनमपर्यवसायीति । अत एवोक्तम्—[1]"परमार्थे तु नैकत्वं पृथक्त्वाद्भिन्नलक्षणम् । पृथक्त्वैकत्वरूपेण तत्त्वमेकं व्यवस्थितम् ॥" इति । अनिर्वचनीयवादेऽपि निषेधः किमनिर्वचनीय उत सत्यः ? आद्ये जगदनिषेधः । द्वितीये द्वैतप्रसक्तिः । न च निषेधस्याधिकरणात्मकत्वेन ब्रह्मरूपत्वान्न द्वैतप्रसक्तिरिति वाच्यम्, अनात्मत्वेन प्रतीयमानस्य निषेधस्यात्मरूपत्वाभ्युपगमे निखिलजगतोऽप्यात्मरूपत्वस्वीकारस्या[१]स्मदुक्तस्याप्यदुष्टत्वात् । न चाभावस्यैवाधिकरणात्मत्वमिति शङ्क्यम्, स्वेतरभेदस्य स्वात्मरूपत्वमित्यादिरीत्या निखिलजगतो भाव[अभाव]त्वस्य सम्पादयितुं

1. एष श्लोको राजानकरामकण्ठकृतायां स्पन्दकारिकाविवृतावप्युद्धृतो दृश्यते । द्रष्टव्यम्—पृ० १६३

१. 'स्वीकारस्या' इत्यनन्तरं 'सत्त्वादेवमर्थपर्यवसायित्वं निषेधस्येति वक्तुं युक्तत्वादनिर्वचनीयत्वस्या' इत्ययमधिकः पाठः—क० ।

एवं जगच्चिदात्मैकरूपं सत्यमुदीरितम् ॥१०२॥
पूर्णविज्ञानमेतत् स्यात् सङ्कोचपरिवर्जनात् ।
दृगेव दृश्यतां प्राप्तं स्वमाहात्म्यप्रकर्षतः ॥१०३॥
यथादर्शो नगरतामेष शास्त्रार्थसंग्रहः ।
न बन्धोऽस्ति न मोक्षोऽस्ति साधकः साधनं च न ॥१०४॥

शक्यत्वात् । निषेधेन वान्यथा वा द्वैताभासात्मकभ्रमनिरसने[1] पुरुषार्थत्वमित्येवाद्वैतशास्त्रत्वम् । अतो मुमुक्षुभिर्मतभेदेषु तर्कमूलकेषु नाभिनिवि[वे]ष्टव्यमिति ध्येयम् । यथादर्शप्रतिबिम्बनगरमादर्शानतिरिक्तम्, एवं सत्यं चिदात्मैकरूपमेव जगदिति । नहि जगच्चिदात्मरूपेण सत्यमित्युक्तिमात्रेण जगच्चिदात्मरूपेणास्ति किमित्याक्षेप्तुं युक्तम्, अनिर्वचनीयाऽविद्येति कथिते किमविद्यास्ति वेत्याक्षेपतुल्यत्वात् । अनिर्वचनीयत्वकथनादेव यथा तस्या अस्ति वेत्याक्षेपोऽयुक्तः, एवं चिदनतिरिक्तं [2]सर्वमित्युक्तौ सर्वमस्ति वेत्याक्षेपोऽप्यनुपपन्न एवेति ध्येयम् ॥१०२॥ एवं सर्वं सत्यमिति ज्ञानमेव पूर्णज्ञानमित्याह—पूर्णेति । कुत इति चेदाह—सङ्कोचेति । दृश्यं दृगिति द्वयम् । तत्र दृश्यं नास्तीत्युक्तेऽपि दृश्याभावप्रयुक्तं [3]संकोचावभासनमस्ति । दृश्यं सर्वं दर्पणप्रतिबिम्बवद् दृङ्मात्रमित्युक्ते हि सङ्कोचावभासो [4]नास्तीति पूर्णविज्ञानमेतदेवेति भावः । तस्मान्न दृगतिरिक्तं दृश्यमित्युपसंहरति—दृगेवेति । स्वमाहात्म्यं स्वस्वातन्त्र्यम् ॥१०३॥ अत्र दृष्टान्तः—यथेति । आदित उक्तं सर्वं संगृह्य वदेत्युक्तमुपसंहरति—एष इति । पुनः प्रोक्तार्थसारं संगृह्य वदति—न' बन्धोऽस्तीति । दृगतिरिक्तत्वेन भासमानस्य सर्वस्य प्रतिबिम्बन्यायेन दृङ्मात्रत्वात् स्वरूपातिरिक्तबन्धनाभावान्न बन्धोऽस्ति । अत एव न मोक्षोऽस्ति । साधकः साधनं च न ॥ १०४ ॥

---

१. 'रसने···चिदात्मैक' नास्ति–ग० । २. 'सर्वमित्युक्तौ' नास्ति–ग० ।
३. संकोचाभावभासन–क० ख० । ४. अस्तीति–ग० ।

अखण्डाद्वयचिच्छक्तिस्त्रिपुरैवावभासिनी ।
सैवाविद्या च विद्या च बन्धो मोक्षश्च[1] साधनम् ॥१०५॥
एतावदेव विज्ञेयं नान्यद् भार्गव विद्यते ।
एतत्तेऽभिहितं राम विज्ञानक्रममादितः ॥१०६॥
एतत् सुविज्ञाय जनो भूयः क्वापि न शोचति ।
नारदैष ज्ञानखण्डः सूपपत्त्युपलब्धिकः ॥१०७॥
श्रुतो न नाशयेत् कस्य मोहमज्ञानसम्भवम् ।
श्रुत्वाप्येतद् यस्य मोहो न शान्ति प्राप्नुयात् क्वचित् ॥१०८॥
स शैलपुरुषो लोके केन ज्ञानं पुनर्भवेत् ।
सकृदेव [2]श्रुतं ह्येतद्विज्ञानं जनयेद् दृढम् ॥१०९॥

ननु तर्हि किमेतद्विचित्रत्वेनावभासत इति चेदाह—अखण्डेति । अखण्डेति स्वगतभेदस्य, अद्वयेति विजातीयसजातीयभेदस्य च निरासः । एवंविधा चिच्छक्तिस्त्रिपुरा तुर्या या सैव दर्पणवद्वैचित्र्येणावभासिनी । अतः सैव सर्वमित्याह—सैवेति ॥१०५॥ तस्मादज्ञानमात्रादेव बन्धोदयः । एवं ज्ञानेनैव कृतार्थतेत्याह—एतावदिति । अन्यद् निवर्तनीयं संपादनीयं वा । ज्ञानखण्डमुपसंहरति—एतत्त इति । आदितः साधनप्राप्तिमारभ्येत्यर्थः ॥ १०६ ॥ एतद् ज्ञानखण्डं सुष्ठु कुतर्करहितया बुद्ध्या विज्ञाय विचारपूर्वकमर्थतोऽनुभूय । जन इति नात्र वर्णाश्रमाद्यधिकारिविशेषनियम इति सूचितम् । क्वापि देहपातात् पूर्वमनन्तरं वा । नारदं प्रति हारितायन आह—नारदेति । उपपत्तियुक्तिः, उपलब्धिरनुभवः । सुष्ठुरूपम् उभयं यस्मिन् ॥१०७॥ मोहं भ्रमम् । कस्य मोहं न नाशयेत् । सर्वस्यापि मोहं नाशयेदेवेत्यर्थः । शान्ति नाशम् ॥१०८॥ स शैलमयः अतिमूढः पुरुषः । केन पुनस्तस्य ज्ञानं भवेत् ? न केनापीत्यर्थः । निर्मलधियां सकृच्छ्रुतेन ज्ञानं भवेदित्याह— सकृदेवेति ॥१०९॥

---
१. मोक्षस्य-ख० । २. कृतम्-ख० ।

द्विधा त्रिधा वा मन्दस्य ज्ञातं न जनयेत् कथम् ।
एतत् पापौघशमनं श्रुतं विज्ञानदं मतम् ॥११०॥
लिखितं दृष्टिदोषघ्नं पूजितं चित्तशोधनम् ।
मूढतानाशनं चैतत् सर्वदा परिशीलितम् ॥१११॥
सर्वात्मभूतं यद्रूपं विचार्यावगतं स्फुटम् ।
मुक्तिः स्यादन्यथा बन्धः सा भवेत् त्रिपुरैव ह्रीम् ॥११२॥

इति श्रीमदितिहासोत्तमे त्रिपुरारहस्ये द्वादशसाहस्र्यां
संहितायां ज्ञानखण्डे द्वाविंशोऽध्यायः ॥

—:०:—

मन्दस्य मन्दधियः । द्विधा त्रिधा वा श्रुतं ज्ञानं कथं न जनयेदपि तु जनयेदेवेत्यर्थः । ज्ञानखण्डं स्तौति–एतदिति । अर्थावगममन्तरा श्रुतम् । मतमर्थतोऽवगतम् ॥११०॥ दृष्टिदोषः । दृष्टेर्बाह्येन्द्रियस्य दोषो विषयप्रवणता । चित्तस्य रागादिदोषशान्त्या शोधनम् । मूढता कर्मवासना । परिशीलनं भूयो विचारः ॥१११॥ ग्रन्थान्ते प्रकरणप्रतिपाद्यायाः स्वभावनिर्देशात्मकमङ्गलमारचयति—सर्वेति । सर्वेषां स्थावरजङ्गमात्मकानां [1]भावानाम्, आत्मभूतं स्वभावभूतम्, यद् रूपं परचितिरूपम्, प्रतिबिम्बानां दर्पणवत् स्थितं विचार्य । चेत्यं सर्वं चितिमात्रम्, तदननुगतत्वेनाभासनात्, दर्पणमात्रात्मप्रतिबिम्बवद् इति सत्तर्केण निश्चित्य । स्फुटमपरोक्षत्वेनावगतम् । सर्वात्मभूता चितिरहमिति प्रत्यभिज्ञातं चेदिति शेषः । संसारबन्धान्मुक्तिः स्याद् भवेत् । अन्यथा अनवगतं चेद्बन्ध एव स्थिरः स्यात् । यद्वाऽवगतं यद्रूपमेव मुक्तिः स्यादन्यथा बन्धः स्यादिति । बन्धमोक्षयोः स्वरूपानतिरेकाद्युक्तमेवैतत् । यैवंविधा परा चितिः सा प्रकृतप्रकरणप्रतिपाद्या त्रिपुरैव । सा ह्रीमिति शक्तिप्रणवार्थ[2]भूतत्वात्तद्रूपा, वाच्यवाचकयोरभेदात् । इति शिवम् ॥११२॥

१. 'भावानाम्' नास्ति–क० ख० । २. प्रणवार्थ–ग० ।

तात्पर्यदीपिकाख्याना त्रिपुराया रहस्यके ।
ज्ञानखण्डस्य सुव्याख्या त्रिपुराप्रीतये कृता ॥१ ॥
द्राविडेष्वनुहालास्यनगरं[1] सन्ति सम्मताः ।
पञ्च ग्रामास्तत्र महापुष्करग्रामसंस्थितिः ॥ २ ॥
द्राविडान्वयदुग्धाब्धिसमुद्यत्सुकलानिधिः ।
बृहच्चरणसद्वंशप्रोद्यन्मुक्ताफलस्थितिः ॥ ३ ॥
वैद्यनाथमहायज्वा सद्विद्याविशदाशयः ।
अभूत्तत्तनुजः श्रीमान् श्रीनिवासाभिधो बुधः ॥ ४ ॥
श्रुत्यागमसुतत्त्वज्ञस्त्रिपुरातत्पराशयः ।
नेत्राग्निनन्दजलधि( ४९३२ )वर्षेऽतीते कलौ युगे ॥५॥
तात्पर्यदीपिकामेनां त्रिपुराया रहस्यके ।
ज्ञानखण्डस्य सुव्याख्यामतनोदतिसुस्फुटाम् ॥६॥
स्यादत्र मेऽज्ञस्य कृतौ हि सर्वतो दोषो[2] ह्यपभ्रंशमुखस्तु सर्वथा ।
संशोधयिष्यन्त्यनुरक्तमानसाः शिष्यस्य मे प्रार्थनयैव तं बुधाः ॥७॥
क्वाहं मन्दमनीषः क्वेदं विज्ञानशास्त्रसर्वस्वम् ।
श्रीत्रिपुरापरसुकृपामात्रान्मूकस्य वाग्मितेवेयम् ॥८॥
तात्पर्यदीपिका ह्येषा स्वात्मशुद्ध्यै विभाविता ।
[3]परचित्त्रिपुरानन्दोन्मेषणाय भवेत् सदा ॥ ९ ॥
इति श्रीत्रिपुरारहस्यज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां श्रीनिवास[4]विबुधविरचितायां द्वाविंशोऽध्यायः ॥

—:०:—

१. नगरे–क० ख० । २. षोऽप्यप–क० ख० ।
३. परा चि–क० । ४. 'बुध' इत्येव–क० ख० ।

# प्रथमं परिशिष्टम्

## त्रिपुरारहस्यज्ञानखण्डश्लोकार्धानामक्षरानुक्रमणी

तात्पर्यदीपिकाख्याना त्रिपुराया रहस्यके ।
ज्ञानखण्डस्य सुव्याख्या त्रिपुराप्रीतये कृता ॥१॥
द्राविडेष्वनुहालास्यनगरं[1] सन्ति सम्मताः ।
पञ्च ग्रामास्तत्र महापुष्करग्रामसंस्थितिः ॥ २ ॥
द्राविडान्वयदुग्धाब्धिसमुद्यत्सुकलानिधिः ।
बृहच्चरणसद्वंशप्रोद्यन्मुक्ताफलस्थितिः ॥ ३ ॥
वैद्यनाथमहायज्वा सद्विद्याविशदाशयः ।
अभूत्तत्तनुजः श्रीमान् श्रीनिवासाभिधो बुधः ॥ ४ ॥
श्रुत्यागमसुतत्त्वज्ञस्त्रिपुरातत्पराशयः ।
नेत्राग्निनन्दजलधि( ४९३२ )वर्षेऽतीते कलौ युगे ॥५॥
तात्पर्यदीपिकामेनां त्रिपुराया रहस्यके ।
ज्ञानखण्डस्य सुव्याख्यामतनोदतिसुस्फुटाम् ॥६॥
स्यादत्र मेऽज्ञस्य कृतौ हि सर्वतो दोषो[2] ह्यपभ्रंशमुखस्तु सर्वथा ।
संशोधयिष्यन्त्यनुरक्तमानसाः शिष्यस्य मे प्रार्थनयैव तं बुधाः ॥७॥
क्वाहं मन्दमनीषः क्वेदं विज्ञानशास्त्रसर्वस्वम् ।
श्रीत्रिपुरापरसुकृपामात्रान्मूकस्य वाग्मितेवेयम् ॥८॥
तात्पर्यदीपिका ह्येषा स्वात्मशुद्ध्यै विभाविता ।
[3]परचित्त्रिपुरानन्दोन्मेषणाय भवेत् सदा ॥ ९ ॥
इति श्रीत्रिपुरारहस्यज्ञानखण्डव्याख्यायां तात्पर्यदीपिकायां
श्रीनिवास[4]विबुधविरचितायां द्वाविंशोऽध्यायः ॥

—:०:—

---

१. नगरे-क० ख० । २. षोऽप्यप-क० ख० ।
३. परा चि-क० । ४. 'बुध' इत्येव-क० ख० ।

# प्रथमं परिशिष्टम्

## त्रिपुरारहस्यज्ञानखण्डश्लोकार्धानामक्षरानुक्रमणी

# द्वितीयं परिशिष्टम्

## व्याख्यास्थितप्रमाणवचनानामक्षरानुक्रमणी

# तृतीयं परिशिष्टम्

## विशेषशब्दार्थानुक्रमणी

अज्ञानम्—स्वात्मन आवरणभूतमाकाशात्मकं जडशक्तिरूपम्, ३३४

अणिमाद्याः—सिद्धयः खेचरत्वाद्या अणिमाद्यास्तथैव च, ३९८

अद्वैतम्—अनुभवरूपं ज्ञानम्, ३८२

अद्वैतविज्ञानम्—दृश्यद्वैतलेशवर्जिता अनवच्छिन्ना या चितिः परस्वरूपत्वेन प्रोक्ता, तदेवाद्वैतविज्ञानम् ३८४

अनात्माभासः—परिच्छेदावभासो यः सोऽनात्माभास उच्यते। साऽविद्या जडशक्तिः सा शून्यं प्रकृतिरेव च ॥ अत्यन्ताभाव आकाशस्तमः प्रथमसर्गकः। सर्वं तदेव संप्रोक्तं परिच्छेदनमादिमम् ॥, ३३१; स्वातन्त्र्याख्यमायया यः स्वात्मनः परिच्छेदावभासः स एवानात्माभासः, ३३१

अनाश्वासः—अविश्वासः, शास्त्रार्थेष्विदमित्थमेव भवेदिति दृढसम्भावनाऽभावः, ३९२

अनुपायाख्यज्ञानम्—श्रवणादिकं विनोत्तमाधिकारिणां केवलतर्कमात्रजनितं ज्ञानम्, ३८५

अन्तर्दृष्टिः—अन्तर्दृष्टिर्निरीहा स्यात्, २५२-२५३

अन्धकारत्वम्—अनवभासकत्वं प्रकाशविरुद्धत्वं वा, १७५

अपक्वकर्म—कालेन पाचितप्रायं पक्वं कर्म समीरितम्।
अपाचितमपक्वं स्याद् ज्ञानोत्पत्तेरनन्तरम् ॥, ४२९

अपरम्—परोक्षं ज्ञानम्, ३८२

अपरज्ञानम्—देहप्राणादौ परिच्छिन्ने दृश्ये य आत्मत्वावभासोऽहंप्रत्ययः, तस्य नाशनं तत्राप्रामाण्यग्राहकम्, एवंविधकेवलात्मविभासनमपरज्ञानम्, ३८५

अपराख्यम्—पञ्चब्रह्ममये मञ्चे रूपं त्रैपुरसुन्दरम्।
अनादिमिथुनं यत्तदपराख्यम्…॥, ३७९

अपराधवासना—अश्रद्धैवापराधः स्याद् मुख्यः स्वात्मविनाशनः। विपरीतग्रहश्चापि, ३४८

अपरोक्षज्ञानम्—संशयनिवृत्तिपूर्वकं निदिध्यासनेन देहादावहंबुद्ध्यादिरूपदृढवासनायत्तविपरीतभावनावेगनिवृत्तिपूर्वकं शुद्धप्रत्यगात्मापरोक्षज्ञानम्, २८६

आनन्दः—अखण्डैकवस्तुन्यात्मनि निर्धर्मके जडात्मत्वव्यावृत्तये यथा संविच्छब्द-व्यवहारः, तथा दुःखरूपताव्यावृत्तये आनन्दशब्दव्यवहारः, १४३;
स एव भारहानादौ सुषुप्तौ चावभासते।
चिदेव स्पृहणीयत्वादानन्द इति प्रोच्यते ॥, ४४५

आरब्धम्—तत्र पक्वं तु यत्कर्म तदारब्धमितीर्यते, ४२९

आशा—आशा हि कामः सम्प्रोक्त एतन्मे स्यादिति स्थिता, ३९४

इच्छा—सिसृक्षोः स्वातन्त्र्यम्, ४३८

इदन्ता—परचितेर्यत् स्वातिरिक्ते दृश्ये विश्रमः सा इदन्तेत्युच्यते, ४३८

इदम्भावः—चिदात्मा हि दीपादिजडप्रकाशविलक्षणः स्फुरत्प्रकाशरूपः। तादृश-स्फूर्त्यात्मकप्रकाशस्यानात्मविश्रम एवेदंभावः, ३२७

ईश्वरः—सैव यदा स्वस्वातन्त्र्याच्चितिक्रियाकर्तृत्वरूपचेतनतामासादयति तदेश्वर इत्युच्यते, १०६

ईश्वरतत्त्वम्—इदमहमिति जडात्मकेदमंशेन चिद्रूपाहमंशनिषेकाजाड्यप्रधाना भासनरूपम्, २२८

उच्छूनता—मायाशक्तेर्माहात्म्यम्, ४३८

उत्तमज्ञानी—उत्तमज्ञानिनश्चैते दशे युगपदास्थिते।
स सर्वदा व्युत्थितश्च समाधिस्थश्च भार्गव ॥, ३६७

उद्घाटनम्—देहादितादात्म्यापन्नमेव चैतन्यं चित्तमित्युच्यते, तस्य देहादिभ्यो विवेचनमुद्घाटनम्, ३४७

उन्मनी दशा—मनो वै निश्चलं यत्र तदुक्तं चोन्मनी दशा; ३६७

उपदीकाः—येषां लालासंबन्धेन काष्ठादीनि मृत्तिकात्वमापद्यन्ते ते कृमिविशेषाः ('दीमक' इति हिन्दीभाषायां प्रसिद्धाः), २०१-२०२

उपपत्तिः—युक्तिः, ४५०

उपलब्धिः—अनुभवः, ४५०

ऋजीषम्—हृतरसेक्षुखण्डांशः, १३७,१३८

कठिनत्वम्—स्पर्शविशेषः, ३३३

कतकः—पृ० १६९

कपालः—पृ० १५८

कर्मवासना—पुरा दुष्कृतसंस्कारवशाद् बुद्धौ तु यत् स्थितम्। मालिन्यमुपदेशस्य ग्रहणप्रतिबन्धकम् ॥ येनाचार्यैः सम्यगुक्तमपि नो गृह्यते खलु सा कर्मवासना, पृ० ३४९

चितिशक्तिः—चिदात्मा हि प्रकाशैकवपुरपि नहि शान्तात्मवादिनामिवादमशंकल्‌कल्पः, जडत्वप्रसक्तेः; अपि तु स्फुरत्प्रकाशरूपः, स्फुरत्प्रकाशरूपत्वं हि चितिशक्तिः, २७१

चित्तम्—सुषुप्तौ प्रकृतिर्ज्ञेया तदन्ते चित्तमुच्यते ।
वासनापिण्डसहिता चितिश्चित्तमुदीरितम् ॥, २३१;
देहादितादाम्यापन्नमेव चैतन्यं चित्तमित्युच्यते, ३४७;
चित्तं हि जाड्यशक्त्यावृतपरिच्छिन्नचैतन्यमेव, ३९०;
विषयसंयोगकर्मवासनापिण्डविशिष्टा ज्ञानशक्तिः, २३२

चित्तम्—अस्या ( प्रकृतेः ) अवस्थाभेदो हि चित्तमित्यभिधीयते, २३०

चित्प्रकृतिः—विकल्पदशायामविद्यात्मकजडशक्तिरूपता, एतदेव क्वचित् चित्प्रकृतिः, २२५

चिन्तामणिः—भक्तानां चिन्तितफलप्रदो मणिविशेषः, ३७९

चैतन्यम्—स्फुरत्प्रकाशरूपत्वम्, २७१

जडप्रकृतिः—मायाऽविद्ययोरैक्येन जडप्रकृतिः, २२५; भूताद्यष्टाविधा प्रकृतिर्जडप्रकृतिरपरा कार्यभूता, २२६

जडशक्तिः—पूर्णाहंभावविच्छेदादनहंभावरूपता । एषैवाव्यक्तमित्युक्ता जडशक्तिश्च कथ्यते ॥, २२५

जडशक्तिरूपता—स्वातन्त्र्यं च भगवतश्चिच्छक्तिरेव, तस्याश्चावस्थात्रयम् ...... विकल्पदशायामविद्यात्मकजडशक्तिरूपता, २२५

जलत्वम्—तेजसो निर्घनत्वस्य घनताकल्पनेन जलत्वम्, ३३३

जल्पः—स्वसिद्धान्तस्थापनपरसिद्धान्तदूषणयोरुपयुक्ता कथा, २४४

जागरदशा—आमर्शबहुलाऽमूढदशा, २७१

जाड्यम्—येन तात्पर्यतश्चापि श्रुतं बुद्धिमनारुहेत् ।
तज्जाड्यं हि महान् दोषः पुरुषार्थविनाशनः ॥
जाड्यरूपः प्राक्कृतदुष्कर्मनिमित्तकतमोंऽशप्रचुरता; अभ्यासाद्यैर्निवर्तयितुमसाध्यः, ३९५

जाड्यता—जडत्वम्, शास्त्रार्थाग्रहणनिमित्तं चित्तस्य तमोंऽशरूपं मौढ्यम्, ३९२

जीवः—जडशक्त्यावृतं चित्तत्त्वं हि जीवः, ३३२; परचिदात्मनः स्वातन्त्र्योद्भासितपरिच्छिन्नाहंभावावभासनेन परिमितप्रमाता जीवः, ३३४

जीवन्मुक्तः—दृष्टदुःखसत्ताभाववान्, ४३५-४३६

ज्ञानपाकः—ज्ञानसिद्धेरप्रकम्प्यता, ३४५

द्वैतज्ञानम्—उपासनम्, ३८२; ध्यातुः स्वरूपातिरिक्तमूर्तिमन्त्रादिविविध-विषयकध्यानम्, ३८२-३८३

धारणा—भावनापरिपाकविशेषः, १८०

ध्यानम्—भावनापरिपाकविशेषः, १८०

नष्टमानसः—ये नष्टमानसाः प्रोक्तास्तैः प्रारब्धं पराकृतम्, ३६१

निदिध्यासनम्—देहादिदृश्यव्यावृत्तापरिच्छिन्नचिद्रूपोऽहमित्याकारकचित्तवृत्तिप्रवाही-करणात्मकध्यानाभिधम्, २९३

निद्रा—निद्रा प्रथमजाऽव्यक्तं महाशून्यमिहोच्यते, २७३

नियतिः—किञ्चित्करणे तत्साधनापेक्षारूपपरतन्त्रत्वम्, २३०

निरोधः—अविकल्पदशा, १२६; सत्त्वमयतासम्पत्तिः, १८४

निर्घनः—अनिबिडः, ३३३

निर्मलः—एकरसः, ३२५

निर्याणम्—यावन्निवारयेत्तावद् निर्याणं प्रतिभासते।
मनोव्यापार एषः स्यात् स्फूर्त्यापहतिरावृतः ॥, ३३४

निर्विकल्पः—विकल्पो नाम भेदः, तेन सहितः सविकल्पः, तदन्यो निर्विकल्पः, समाधिसुषुप्त्योः स्वरूपमात्रविषयकत्वेन भेदस्पर्शादहंप्रत्ययो निर्विकल्पः, २६१

निर्विकल्पकः—मनो हीन्द्रियादिद्वारा घटादिविषयसंबद्धमादौ भवति। तत्काले हि घटादिवस्तु केवलमयं घट इति शब्दोल्लेखवर्जनेनाव्यावृत्तरूपेण प्रकाशते। एतदेव सविकल्पकज्ञानहेतु निर्विकल्पकं नित्यानुमेयम्, २६९; एकधा एकविधा ख्यातिः, ३००

निर्विकल्पसमाधिः—चिदात्मनः स्वप्रकाशमात्रात्मनाऽवस्थितिः, २७५; ध्येयशुद्ध-चिन्मात्रात्मकस्थितिपरिशेषः, २९३; परिपाकतारतम्येन ध्यानम्, २९८

निष्कलम्—अशरीरम्, १०७

निश्चयः—मोक्षो भवेदेवेति दृढसम्भावनारूपः प्रोक्तसंशयादेर्विपरीतो निश्चयः, २९३

पक्वकर्म—कालेन पाचितप्रायं पक्वं कर्म समीरितम्, ४२९

पञ्चकञ्चुकम्—कलाविद्यारागकालनियतिः पञ्चकञ्चुकम्, २३०; परमशिवस्य सर्वकर्तृत्वं सर्वज्ञत्वं नित्यतृप्तत्वं नित्यत्वं स्वतन्त्रत्वं चेति पञ्च शक्तयः, ता इमाः संकुचिताः पुरुषस्य पञ्च कञ्चुकानीत्युच्यन्ते, २३०

च

विद्या—किञ्चिज्ज्ञत्वं विद्या, २३०
विपर्ययः—नास्त्येव मोक्ष इत्याद्यो भवेदत्र विपर्ययः, ३९२
विमर्शः—अयमीदृश इत्यादिमानसोल्लासः, १२०; अविच्छेदानुसन्धानम्, ३६४
विमर्शदशा—स्वस्मिन् मनसोऽन्तः प्रतिबिम्बत्वेन गृहीतस्य तस्यैवार्थस्याय-मीदृश इति शब्दसम्भेदात्मा विचारः स विमर्शो विमर्शदशा, २६९
विमर्शावस्था—आमर्शः, शब्दसम्भेदात्मा विचारः, २६९
विश्रान्तिः—निर्विकल्पसमाधिः, १३६
विषयानन्दः—आत्मानन्दलेशः, ४४४
विष्टिगृहीतवत्—राजकार्यार्थं राजभटैर्गृहीता जनास्तत्कार्यं त्यक्तुमसमर्थाः कुर्वन्ति यथा, ४९
वेद्यम्—यद्यद् घटादिदृश्यं पश्यसि तेन रूपेणैव परैरपि ज्ञानं वेद्यमित्युच्यते, २५७
वेद्यधर्मः—भेदो हि वेद्यधर्मः स्यात्, २५८
शक्तिः—चिदात्मनः स्वपरावभासनेऽन्यानपेक्षणात् स्वातन्त्र्यमुच्यते, एतत् स्वातन्त्र्यमेव शक्तिः, २२४
शक्तितत्त्वम्—शुद्धचिन्मात्रस्फूर्तिदशा, ५१; परिच्छिन्ननिर्विकल्पचितेरहमिति यद्भासनं तद्भासनसामान्यम्, २२७

शक्तिपातः—अनुग्रहशक्तिः, २४१
शान्तपदम्—निर्विकल्परूपम्, १८३
शिथिलः—असंश्लिष्टावयवः, ३३३
शिवतत्त्वम्—या चितिश्चात्र विच्छिन्नाभासिनी बहिरात्मनः ।
शिवतत्त्वमिति प्रोक्ता.............................॥, २२६-२२७;
परिच्छिन्ननिर्विकल्पचितिसामान्यम्, २२७

शिवकः—पृ० १५८

शुद्धत्वम्—चिदात्मनोऽपृथग्भूय भासनाच्चित्प्राधान्याच्छुद्धत्वम्, २२९
शुद्धविद्या—सदाशिवेश्वरयोर्भेदाभेदविमर्शनरूपमहमिदमिदमहमिति यत्संवेदनमा-भासनं तत् पञ्चमं तत्त्वं शुद्धविद्येति, २२८

शुद्धविद्यातत्त्वम्—चिदचितोरिदं सर्वमहमिति सामानाधिकरण्यस्फूर्तिदशा, ५२,२२८

शुद्धिः—शुद्धेरन्तःकरणस्येन्द्रियादिद्वारा बहिर्मुखत्वमशुद्धिः, तत्परित्यागेनान्तर्मुखत्वं शुद्धिः, ११४

सविकल्पसमाधिः—ध्येयध्यात्रादिभेदपरिस्फूर्तिः, २९३; ध्येयाकारानुवृत्तिः परिपक्वतारतम्येन ध्यानम्, २९८

सामान्यचैतन्यम्—विषयाकाररहितं निर्विकल्पं ज्ञानम्, १३३
सिद्धिः—तन्मात्रात्मव्यवसितिः सर्वसंशयनाशिनी सिद्धिः, देहाद्यविवेकेन भासमानस्य तद्विवेकेन तदभावनमेव सिद्धिः, सा च सिद्धिर्द्विविधा—खेचरत्वपरकायप्रवेशाद्याः, अणिमलघिमाद्याश्च, ३९८

सिद्धिसाधकभावः—सिद्धिरुत्पत्तिर्ज्ञप्तिर्वा, साधकं तयोः साधनम्, उत्पत्तिसाधनं ज्ञप्तिसाधनं वेत्यर्थः, सिद्धिसाधकस्य भावः सत्त्वम्, १३०

सुतर्कः—आगमाविरुद्धस्तर्कः, ८६
सुषुप्तिः—परिपक्वकर्मणां भोगेन क्षयेऽन्येषामपरिपाके सति दग्धेन्धनानलवच्चिदात्मनो ज्ञानशक्तेर्विषयसंयोजकपरिपक्वकर्माभावेनाऽन्तर्हिर्मुखत्वे मध्ये भोगरहितदशाविशेषः, २३१; निद्राप्रकाशरूपासौ सुषुप्तिश्चिरसंस्थिता, २७१; निद्राप्रकाशावस्था, २७४-२७५; दृश्यसामान्यात्यन्ताभावरूपाऽव्यक्तात्मकजडशक्तिः, २७८-२७९

सूक्ष्मः—अप्रतिघरूपः, ३२५
सृतिः—जन्मादिरूपः संसारः, २१
संविद्—एवं सा परमा संविद् बाह्याभासप्रपूर्वकम्।
क्रीडां करोति सृष्ट्यादिक्रमेण सर्वसाक्षिणी ॥, २३३
संविद्भेदः—संविदां भेदो घटाकारता पटाकारतेत्यादिः, १३३
संवेदनम्—सत्यं राजकुमारैतद् मायापीत्थं सुनिश्चितम्।
स्वरूपं निर्विकल्पं हि संवेदनमिहोच्यते ॥, ४२५

संशयः—मोक्षोऽस्ति नास्ति वेत्याद्यः संशयः समुदाहृतः, ३९२
स्तिमितः—कालापरिच्छिन्नः, ३७७
स्तूपकः—पृ० १५८
स्पन्दः—स्फुरद्रूपता, २७१
स्फुरद्रूपता—चैतन्यम्, चिदात्मा हि प्रकाशैकवपुरपि नहि शान्तात्मवादिनामिवाश्मशकलकल्पः, जडत्वप्रसक्तेः; अपि तु स्फुरत्प्रकाशरूपः। एषैव स्फुरद्रूपता चैतन्यं विमर्शश्चितिशक्तिः क्रिया स्पन्दः पराहन्तेत्यादिपदैरागमेषूच्यते, २७१

# चतुर्थं परिशिष्टम्

## मूले व्याख्यायां च स्थितानां

### ग्रन्थ-ग्रन्थकार-मतमतान्तरनाम्नामक्षरानुक्रमणी

## पञ्चमं परिशिष्टम्

### व्यक्तिनाम्नामक्षरानुक्रमणी

# षष्ठं परिशिष्टम्

## स्थलादिनाम्नामक्षरानुक्रमणी





# शुद्धिपत्रम्

| पृष्ठसंख्या | पङ्क्तिसंख्या | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १० | त्यादि दर्पणे | त्यादिदर्पणे |
| ३ | ४ | पथा | यथा |
| ७ | २२ | मेवेत्याङ्क्य | मेवेत्याशङ्क्य |
| २४ | ११ | सुवर्चसाम् | सुवर्चसा |
| २४ | २०-२१ | | अत्र स्थापितः षोडशः श्लोकः २–३ पङ्क्त्योः स्थापनीयः। |
| २९ | १७ | बोधयि.ष्यामी | बोधयिष्यामी |
| ३६ | २२ | खङ्गम् | खड्गम् |
| ३८ | २४ | सौष्ठवं। | सौष्ठवं |
| ४८ | ६ | आष्मा | आत्मा |
| ५० | २६ | कालित्वा | कालिकत्वा |
| ५८ | २४ | धीनत्व | धीनत्वा |
| ५८ | २४ | अश्मणोरिति | अश्मणोदिति |
| ६१ | २ | महासना | महाशना |
| ७६ | ४ | ससुखमेधते | स सुखमेधते |
| ७८ | १९ | कथ | कथं |
| ७९ | २३ | दृश्यमान | दृश्यमानः |
| ७९ | २५ | तस्यव | तस्यैव |
| ८६ | ३ | जन | जनः |
| ९५ | ७ | जडस्य आद्ये | आद्ये जडस्य |
| ९६ | २४ | कृताते | कृता ते |
| १०६ | २२ | साम्राज्ञी | सम्राज्ञी |
| १०७ | १६ | मति | मिति |
| १११ | १ | ११३ | १११ |
| २२० | २१ | अनात्भ | अनात्म |

| | | | |
|---|---|---|---|
| १२९ | ७ | पद्मपन्नपि | पद्यन्नपि |
| १४० | २४ | दुष्ट्परिं | दुष्परिं |
| १४९ | १८ | निराधेतर | निरोधेतर |
| १६५ | ८ | मर्ति | मूर्ति |
| १६६ | २२ | स्वतन्त्र | स्वतन्त्रः |
| १९६ | ५ | देहकेः | देहकैः |
| २०३ | १२ | स्वप्ने | स्वप्ने |
| २२१ | १४ | स्यव | स्यैव |
| २३९ | १३ | निरूपादान | निरुपादान |
| २४९ | ८ | चेत्यहं | वेत्त्यहं |
| २६१ | १० | समाध्यादवाहं | समाध्यादावहं |
| २७० | १८ | अन्यावत्त | अन्यावृत्त |
| ३१५ | २४ | सर्वात्मनेति | सर्वात्मनेति |
| ३५६ | २२ | कल्पकं | कल्पकम् |
| ३६४ | २० | समाधा | समाधौ |
| ३७० | १७ | सर्वेविघ्ना | सर्वे विघ्ना |
| ३७६ | ७ | श्रोतृ | श्रोतृ |
| ४०७ | २१ | स्वरूपानुन्धानैः | स्वरूपानुसन्धानैः |
| ४११ | १४ | येषा | येषां |
| ४३८ | ८ | अत | अतः |
| ४४८ | ९ | वभासज्जग | वभासज्जग |



